आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०४

शंकरशास्त्रिविरचितटिप्पणीसंवलितश्रीमत्पदवाक्यप्रमाणज्ञमहामहोपा-
ध्यायभट्टमाधवसुतभट्टविश्वनाथानुजभट्टरघुनाथनिर्मितविवृति-
सहिता—

# त्रिंशच्छ्लोकी ।

सेयं

वे० शा० सं० रा० मारुलकरोपाह्वै रङ्गनाथभट्टा-
त्मजशंकरशास्त्रिभिः संशोधिता ।

एतत्पुस्तकं
बी. ए. इत्युपपदधारिभिः
विनायक गणेश आपटे
इत्येतैः
पुण्याख्यपत्तने
श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५८ ।
ख्रिस्ताब्दाः १९३६ ।



मूल्यं पञ्चदशाणकाधिकं रूपकद्वयम् (२८१५) ।

# आदर्शपुस्तकोल्लेखपत्रिका ।

अस्यास्त्रिंशच्छ्लोक्या विवृतिसहितायाः पुस्तकानि यैर्महाशयैः परहितैकपरतया संस्करणे सहायार्थं प्रदत्तानि तेषां नामानि पुस्तकानां संज्ञाश्च निर्दिश्यन्ते—

(क.) इति संज्ञितम्—आनन्दाश्रमग्रन्थसंग्रहालयस्थम् । जीर्णपत्रं स्थले स्थले निर्मृष्टाक्षरं च ।

(ख.) इति संज्ञितम्—आनन्दाश्रमग्रन्थसंग्रहालयस्थं प्रायः शुद्धम् । अस्य लेखनकालः शके १६५२ साधारणनामसंवत्सरः ।

(ग.) इति संज्ञितम्—भाण्डारकरइन्स्टट्यूट्ग्रन्थसंग्रहान्तर्गतम् । जीर्णमपि सुवाच्याक्षरं प्रायः शुद्धं च ।

(घ.) इति संज्ञितम्—(भाष्यसहिता त्रिंशच्छ्लोकी मुद्रिता । हस्तलिखितस्तत्रत्यस्वकीयाशौचनिर्णयश्च ) । मोरसंस्थानाश्रित आहिताग्निः—बाबादीक्षितहोशिंगचातुर्मास्ययाजी इत्येतेषाम् ।

(ङ.) इति संज्ञितम्—( केवला त्रिंशच्छ्लोकी ) पुण्यपत्तनीय संस्कृतमहाविद्यालय (कॉलेज )स्थ—व्याकरणाचार्य—महेश्वरशास्त्री जोशी इत्येतेषाम् ।

समाप्ताऽऽदर्शपुस्तकोल्लेखपत्रिका ।



# अथ त्रिंशच्छ्लोक्या भूमिका ।



नित्यं संनिहितमेवैतत्स्वान्ते स्वन्तःकरणानां विश्वेषां लोकानां विशेषतो भारतवर्षीयाणां संख्यावताम् । यद्धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः साध्यः । धर्मादयस्त्रयः पुनस्तत्साधनतयाऽवगता इति तेऽपि पुरुषार्था एवेति । अतस्तदनुष्ठानं मनुजमात्रेणातिसावधानतया कर्तव्यम् । चतुर्ष्वपि पुरुषार्थेष्वनुष्ठीयमानेष्वनुष्ठात्रा तत्राऽतिमात्रं पावित्र्यवता भवितव्यमिति नेदं विस्मृतिं नेतव्यम् । अत एव 'शुचिना कर्तव्यम्, आचान्तेन कर्तव्यम्, शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः, यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः' इत्यादीनि नैकशः शुचित्वोपदेशकवाक्यानि पदे पदेऽस्मच्छास्त्रेषु समुपलभ्यन्ते । तत्र शौचं तावद्द्विविधं बाह्यमाभ्यन्तरं च । तदुक्तम्—

> शौचं च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
> मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम् ॥ इति ।

अत्र शौचविरोध्यशुचित्वमपि परिहरणीयतया संगृहीतम् । एतदपि द्विविधं बाह्यमाभ्यन्तरं च । बाह्यं देहादिगतमाभ्यन्तरं पुनश्चित्तगतम् । बाह्यं पुनर्द्विविधमाभ्यन्तराशुचित्वमूलकमशुचिस्पर्शादिकारणान्तरजन्यं च । तत्राऽऽद्यं यावदाभ्यन्तरभावित्वाद्गुरुभूतम् । अशुचिस्पर्शादिकारणान्तरजन्यं तु स्नानादिनिवर्त्यत्वेन क्षणिकत्वाल्लघुभूतम् । द्विविधमपि शौचमावश्यकं सर्वेषाम् । आभ्यन्तरं पुनः सुतराम् । तिर्यग्योनिष्वपि शुचित्वे प्रवृत्तिः संलक्ष्यते किमुत मनुष्येषु । आर्याः किल भारतीयाः परां कोटिमधिरूढा आसन्पावित्र्यस्य । अधुनाऽपि ये केचनाऽऽत्मसामर्थ्यसंपन्नाः संदृश्यन्ते नूनमेतेषामन्तःकरणं परमपवित्रं स्यादिति दृढं विश्वसिमि । भारतवर्षे हि दुर्गन्धपदार्थस्पर्शादिनाऽपि यथाऽशुचित्वं समुपजायते तथाऽपत्यजननमरणादिनाऽप्यशुचित्वं समुत्पद्यते । युक्तं चैतत् । जन्ममरणाभ्यां हर्षविषादौ जायेते । तौ च स्वयमनुभवंस्तदाकारः संस्तदनुकूलान्येव कार्याणि करोति पुरुषः । तदनन्तरं चोत्तरोत्तरक्षणे क्रमेण हर्षविषादौ न्यूनौ भवतः । पुनरपि कार्यान्तरेषु व्याप्रियते पुरुषः । अतस्तन्निमित्तमाशौचं युक्तमेव ।

नन्वस्तूक्तयुक्तेर्वक्ष्यमाणवचनप्रामाण्याद्वा जननमरणयोराशौचम् । परंतु किंस्वरूपमिदमाशौचमिति विचार्यमाणे भावप्रत्ययान्तशौचशब्दस्य नञा समासे नञः शुचीश्वरेत्यादिपाणिनिसूत्रेण वैकल्पिकया पूर्वपदवृद्ध्या निष्पन्नत्वादाशौचशब्दस्य न शौचमाशौचमिति व्युत्पत्त्या शौचाभावः प्रतीयते। शौचं पुनः पापक्षयो धर्मयोग्यता वा। तदुभयमप्यदृष्टरूपमेवेति केचित्। तत्र पापक्षयः शौचं तदभावस्त्वाशौचमिति पर्यवस्यति । तच्च न युक्तम्। पापलक्षणाभावात् । तथा हि—'चोदनालक्षणोऽर्थो धर्मः' ( जै०१।१।२ ) इत्यस्मिन्सूत्रे धर्मलक्षणं कुर्वता जैमिनिना 'अनर्थोऽधर्मः' इत्यधर्मलक्षणमप्यर्थात्सूचितम् । अनर्थश्चानिष्टसाधनम् । यथोक्तं भाष्यकृता—'कोऽर्थो योऽभ्युदयाय कोऽनर्थो योऽनभ्युदयाय' इति। पापाधर्मौ च पर्यायौ। तथा चास्य पापक्षयाभावरूपस्याऽऽशौचस्यानिष्टसाधनताबोधकचोदनाभावान्नाधर्मतेति । ये तु दुःखासाधारणकारणमधर्म इत्यधर्मलक्षणमाहुस्तेषामपि मत आशौचस्याधर्मत्वं न सिध्यति । दुःखहेतुत्वाभावात्। यत्तु विहिताननुष्ठानान्निन्दितसेवनाद्वा पापमुत्पद्यते । नचाऽऽशौचिनां विहिताननुष्ठानं निन्दितसेवनं वाऽस्ति। न च विहितपञ्चयज्ञाद्यननुष्ठानमस्तीति वाच्यम्। तेषां 'पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः' इत्यनेन निषिद्धत्वात्। तस्मादुत्पादकाभावान्न पापमाशौचमिति । तन्न। ऐहलौकिकयोर्विहिताननुष्ठानप्रतिषिद्धकरणयोरभावेऽपि जन्मान्तरीययोस्तयोः कल्पनस्य संभवात् । यथा मिथ्याभिशापादिदर्शने तज्जनकदुरितोत्पादकं जन्मान्तरीयं निषिद्धाचरणादिकं कल्प्यते, एवमिहापि सपिण्डजननादिदर्शनेनाऽऽशौचरूपपापोत्पादकं जन्मान्तरीयं प्रतिषिद्धाचरणादिकं कल्पयितुं शक्यत इति न विशेषः ।

नच जन्मान्तरीयकारणोत्पन्नपापरूपाशौचस्य जननादिप्राक्कालेऽपि सत्त्वात्सर्वदैव कर्मप्रतिबन्धः स्यादिति वाच्यम्। निश्चितस्यैव तस्य कर्मप्रतिबन्धकत्वात् । तन्निश्चयश्च जननादिनिमित्तनिश्चयाद्भवति। तस्मा+दुक्तपूर्वपरिहारोऽत्र ज्यायानिति ।

अथैवं मन्यसे कर्माधिकारः शुद्धिः, तद्विपर्ययश्चाशुद्धिरिति । तदपि

---

+ पापलक्षणाभावादित्युक्त इत्यर्थः ।

न। तथा सति ‘ आशौचे दानप्रतिग्रहस्वाध्याया निवर्तन्ते ’ इत्यादावाशौचकर्मानधिकारयोरुद्देश्यविधेयभावो न स्यात्। तस्य भेदायत्तत्वात्।

नच दानाद्यनधिकार एवाऽऽशौचमिति वाच्यम्। ‘दशाहं शावमाशौचं सपिण्डेषु विधीयते ’ इत्यादिवाक्यान्तरप्राप्ताशौचानुवादेन तदनधिकारबोधनात्।

किंच कर्मानधिकार एवाऽऽशौचं सपिण्डेष्विति वदन्प्रष्टव्यः किं कर्ममात्रानधिकारः कर्मविशेषानधिकारो वा। नाऽऽद्यः। आशौचिनामप्युदकदानाद्यधिकारात्। न परः। ब्राह्मणादे राजसूयाद्यनधिकारेणाऽऽशौचित्वप्रसङ्गात्। अपि च यदि दानाद्यनधिकार एवाऽऽशौचं तर्हि पिण्डोदकदानाद्यधिकारोऽप्याशौचं स्यात्। नचेष्टापत्तिः। अनेकशक्तिकल्पनाप्रसङ्गात्। तस्मान्न कर्मानधिकार आशौचमिति।

यत्तु ‘ अम्लादिसंयोगप्रयोज्यस्ताम्रादौ तत्तद्देवतासंनिधिरेव शुद्धिः। अस्पृश्यसंबन्धप्रयोज्यस्तत्तद्देवतासंनिध्यभावश्चाशुद्धिः ’ इति तार्किकलक्षणम्। तदपि न प्रकृतोपयोगि। अचेतनेषु तत्संभवेऽपि चेतनेषु यावज्जीवं तदसंभवात्। तदुक्तम् —

जीवञ्जन्तुर्भवेद्यावत्तावत्तदभिमानिनी।
देवता वर्तते तत्र मृते तस्मिन्निवर्तते॥ इति।

अत्राऽऽहुः—‘कालस्नानाद्यपनोद्यः पिण्डोदकदानादिविधेर्हेतुभूतोऽध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषगतः कश्चनातिशय आशौचम् ’ इति याज्ञवल्क्यटीकायां मिताक्षरायां षडशीतिटीकायां च शुद्धिचन्द्रिकायां निरूपितम्।

तच्चाऽऽशौचं केषां भवति कदा भवति कुत्र न भवति। तत्र कथं वर्तनीयं किं कर्तव्यं किं न कर्तव्यमित्यादिनिर्णयायाद्यावधि नैकशो निबन्धाः प्रणीताः सन्ति। तत्राऽऽदौ मनुप्रभृतिभिर्मान्यैर्दिव्यदृष्टिभिर्महर्षिभिः स्मृतिपुटाङ्कितं निखिलमाशौचप्रकरणम्। तदनन्तरं भिन्नभिन्नार्षिभिः प्रणीतानां परस्परं विरुद्धानामिवावभासमानानामपि वस्तुतोऽविरुद्धानां वचनानामेकवाक्यत्वाय धर्ममर्मभिज्ञैर्विज्ञानेश्वरापरार्कप्रभृतिभिः सम्यङ्मीमांस्य पूर्वोत्तरपक्षपुरःसरं बहवो निबन्धा व्यरचिषत। तेभ्यस्तेभ्यः स्मृतिवचोभ्यस्तत्तन्निबन्धेभ्यश्च सारमादायेयं त्रिंशच्छ्लोक्युद्धृता।

अस्यां त्रिंशदेव श्लोकाः स्रग्धराच्छन्दोनिबद्धा निबद्धाः। न तत्र ग्रन्थारम्भसूचकः श्लोको नापि तत्समाप्तिप्रतिपादक इति नास्य त्रिंशच्छ्लोक्याः कर्तुर्नामादिकं प्रयत्नेनापि परिचेतुं शक्यम्। बहुशत्खेदस्थानं यद्ग्रन्थकारा अपि लेखनेन स्वनामादेः परिचयं न ददति। अथवा स्वाहंकारपरिजिहीर्षया महतां तथा लेखो न दृश्यत इति कल्पना सुखावहा। अन्यथा तादृशविस्तृतग्रन्थकाराणां किं स्ववंशाद्यलेखनस्य कारणम्। तत्त्वनिर्णयजिज्ञासूनां यथा तद्ग्रन्थार्थपरिज्ञानमुपकारकं न तथा तद्ग्रन्थकर्तुर्नामादेः परिज्ञानं लेशतोऽप्युपकारकमित्यलं तत्र मतिव्ययेन कालक्षेपेण च।

त्रिंशतः श्लोकानां समाहारस्त्रिंशच्छ्लोकीति व्युत्पत्तेर्योगरूढमिदं नाम। यद्यपि टीकाकृता भट्टरघुनाथेन 'त्रिंशच्छोकविवेचनम्' इत्युक्तेर्न ङीबन्तेन त्रिंशच्छोकीति नाम्ना व्यवहृतं किंतु त्रिंशच्छ्लोकेत्यकारान्तेन। तथाऽपि शब्दस्वरूपभेदेऽपि तात्पर्यतोऽर्थभेदाभावान्न विरोधः। तदर्थकाकारान्तत्रिंशच्छ्लोकशब्दोपपत्तिस्तु मत्कृतटिप्पण्यां द्रष्टव्या। प्रसिद्धतरत्वात्सर्वत्र तथैव व्यवहाराच्च ङीबन्तमेव नामास्माभिरादृतम्। एतद्ग्रन्थकर्तुरन्या कृतिर्न काचिदपि श्रुता दृष्टा वा।

सेयं त्रिंशच्छ्लोकी पद्यात्मिकाऽतीव संक्षिप्ता चेति मन्दाधिकारिणः प्रति न कथमपि बोधोदयं दद्यादिति काभ्यांचिदनिर्दिष्टनामभ्यां पण्डिताभ्यामस्या उपरि द्वे व्याख्याने वृत्तिभाष्यनाम्नी उपनिबद्धे स्तः। ते अप्यतिसंक्षिप्ते शब्दप्रतिशब्दरूपे इति न मध्यमोत्तमाधिकारिणौ प्रति हृदयंगमे नापि विशदतया निःसंदिग्धं बोधप्रदे इत्याकलय्य भट्टकुलकैरवसुधांशुना तदानींतनभरतखण्डीयविद्वन्मण्डलीमण्डनायमानेन निजयशःसुधाधवलितदिङ्मण्डलेन पदवाक्यप्रमाणपारदृश्वना मूर्तिमता धर्मेणेवाऽऽगर्भादिद्वद्वंश्येन महामहिमशालिना रघुनाथेनेव भट्टरघुनाथेन लोकोपकृतये त्रिंशच्छ्लोकीरहस्यावबोधनाय च सुविशदया सरलया सुबोधया मीमांसादिशास्त्रीयविषयगुम्फितयोपपत्तिमत्याऽत एव विद्वन्मनोरञ्जन्या विवृतिनाम्न्या व्याख्यया सनाथीकृतेयं त्रिंशच्छ्लोकी। साऽसावत्युपयुक्ताऽपि विरलप्रचारतया नाद्यावधि कुत्रापि संमुद्य प्रकाशिता। सैवेदानीं यथामति संशोध्य पाठान्तरैष्टिप्पणीभिः सुविस्तृतैश्चालंकृत्य संमुद्य निर्णयं जिज्ञासमानानां विदुषां करकमलेषूपायनी क्रियते।

अथास्य ग्रन्थस्य कः कर्ता कदा समुत्पन्नः कस्मिन्देशे कस्मिंश्च कुलेऽस्य जनिरजनि, किमनेन कृतं के के वा निबन्धा निबद्धा इति जिज्ञासा प्रकृतग्रन्थप्रेक्षिणां मनसि निसर्गत एव समुत्पत्स्यते । तत्र मूलप्रणेतृविषयेऽस्याः कर्तारं भट्टाचार्यं केचिद्वदन्ति । केचिच्च मीमांसाभट्टमन्ये रामेश्वरभारतीमपरे पुनर्बोपदेवं प्राहुरित्येवं श्रूयते । प्रयत्नेनापि तत्र प्रमाणं दृढं नोपलभ्यते । केवलमासेतु आ च हिमाचलात्तत्कृतिस्त्रिंशच्छ्लोकी प्रकाशमाना विद्वद्वृन्दमान्या सर्वत्र प्रचलिता च विराराजीति । विवृतिकृता हि निजपरिचयाय ग्रन्थावसाने—

कामेषुवेदरसभूमिमिते शकाब्दे चैत्रासिते हरितिथौ रघुनाथनामा ।
रामेशसूरिसुतमाधवबिन्दुजन्मा टीकां समापयदिमां स्मृतिपारदृश्वा ।

इत्युक्तत्वात्, तथा ग्रन्थालंकारपट्टिकायां ‘ इति श्रीमत्पदवाक्यप्रमाणज्ञमहामहोपाध्यायभट्टमाधवसुतभट्टविश्वनाथानुजभट्टरघुनाथनिर्मिता त्रिंशच्छ्लोकविवृतिः संपूर्णा ’ इति स्वयमेवोक्तत्वाच्च बाणाब्धिऋतुभूमिता-( १६४५ ) च्छकाब्दात्पूर्वं स्थूलमानेन ( १६१० ) शकाब्दोऽस्य जन्मसमयः । भट्टरामेशसूरिरस्य पितामहः । पिता भट्टमाधवबिन्दुः । ज्यायान्भ्राता भट्टविश्वनाथः । आत्मना तु स्मृतिपारदृश्वा भट्टरघुनाथष्टीकाकृदिति विज्ञायते । तत्र माधवबिन्द्विति लिङ्गाद्भट्टोपपदलिङ्गाच्च काशीनिवासिना भाट्टकुलावतंसेन महाराष्ट्रीयब्राह्मणेन भट्टरघुनाथेन भवितव्यमित्यनुमीयते । काशीस्थं भाट्टकुलं च मूलतः पैठणपत्तनस्थं देशस्थब्राह्मणकुलमिति हि प्रसिद्धम् । यत्र कुले वेदर्षिरसेन्दु ) १६७४ )मिते ख्रिस्ताब्दे रायगडोपरि श्रीशिवच्छत्रपते राज्याभिषेककर्ता विश्वेश्वरभट्टापरपर्यायो महापण्डितो गागाभट्ट उदगात् । नह्यपरं भट्टकुलं श्रुतचरं प्रथितं वा समस्ति। येनासौ भट्टरघुनाथस्तत्र निःसंदेहं निक्षिप्येत ।

किंच निर्णयसिन्धुग्रन्थात्प्राक्तनीयं त्रिंशच्छ्लोकीति विज्ञायते । यतो द्वाविंत्युत्तराष्टादशशततमे ( १८२२ ) शकाब्दे निर्णयसागरमुद्रिते निर्णयसिन्धुपुस्तके चतुर्नवत्युत्तरात्रिशततमे ( ३९४ ) पृष्ठे ‘ त्रिंशच्छ्लोक्याम् ’ इत्युल्लिख्य प्रेतेष्वाचार्येत्यादि नवमश्लोकान्तं श्लोकद्वयमुद्धृतं दृश्यते । निर्णयसिंधुकालश्चैकत्रिंशदुत्तरपञ्चदशशततमः ( १५३१ ) शकाब्द इति ‘ ऋतुऋतुरसभूमिते गतेऽब्दे नरपतिविक्रमतोऽथ याति रौद्रे ’ इति तदीयलेखादवसीयते । प्रकृतविवृतिटीकासमयस्तु

'कामेषुवेदरसभूमिमिते शकाब्दे' इति स्वीयलेखात्पञ्चचत्वारिंशदुत्तरषोडशशततमः (१६४५) शकाब्द इति हि पूर्वमुक्तमेव। तथा च निर्णयसिन्धोरूर्ध्वं चतुर्दशोत्तरैकशतमिताब्दैर्वि (११४) वृत्तिटीकोदायिष्टेत्यपि सिद्धम्। सत्येवं मातृकुलजनुषाऽनेन भट्टरघुनाथेन स्वातन्त्र्येण निबन्धनिर्माणं परित्यज्य किमित्येतद्ग्रन्थोपरि विवृतिटीका निरमायीत्यपि चिन्तनीयम्। तदेवं विचार्यमाण एतदेव स्पष्टमवगम्यते यत्तदात्वेऽस्य त्रिंशच्छ्लोकीग्रन्थस्य महति परिमाणे सर्वतः प्रचार आसीत्। तादृक्प्रचाराय च शतकसार्धशतकालोऽपेक्षित इति मदीयैव कल्पना समापतति। ततश्च मातृकुलप्रसूत एव परंपरसंततिस्थो वा भट्टरघुनाथः प्रकृतटीकाकृन्महाराष्ट्रीयो देशस्थब्राह्मण इति विश्वासिमः।

तदेवमेतदवधि मूलकारस्य विवृतिकारस्य चेतिवृत्तं यावल्लब्धं यावद्वाहितुं योग्यं तत्सर्वं निरूपितम्। निरूपितं चेतत्प्रतिपाद्यस्य मुख्यस्य निर्णेष्यमाणस्याऽऽशौचस्य सामान्यतः स्वरूपम्। तच्चाऽऽशौचं द्विप्रकारकम्—सूतकं मृतकं चेति। सूतिः प्रसूतिस्तन्निमित्तकमाशौचं सूतकं जननाशौचमित्यर्थः। यन्महाराष्ट्रभाषायां (वृद्धि सोहेर) इत्यादिशब्दैर्निर्दिश्यते। अस्मिन्नाशौचे मातृव्यतिरिक्तसपिण्डेषु व्यवहारकालेऽस्पृश्यता न भवति। किंतु कर्मानधिकारित्वमात्रं भवति। अत एवेदमाशौचं कर्मानर्हत्वलक्षणं कर्मायोग्यत्वलक्षणमित्यादिशब्दैर्व्यवह्रियते। मृतिर्मरणं तन्निमित्तमाशौचं मृतकम्। मृताशौचमित्यर्थः। अत्र कर्मानधिकारोऽस्पृश्यता चाधिकेति कृत्वा पूर्वापेक्षयाऽस्मिन्दोषाधिक्यमवगम्यते। अत एवेदं मृतकं स्पर्शायोग्यमस्पृश्यलक्षणमित्यादिभिर्व्यपदिश्यते। तादृशास्पृश्यत्वरूपस्य केवलकर्मानधिकारित्वरूपस्य वाऽऽशौचस्य यावता कालेन स्नानादिक्रियासहितेनापगमो भवति तत्प्रतिपादनमाशौचनिर्णयः। एवं चाऽऽशौचनिर्णयाख्योऽस्य ग्रन्थस्य विषयोऽपि संक्षेपतो निरूपितः।

इत उत्तरं प्रतिपिपादयिष्यमाणेऽर्थे आनन्दाश्रमसंस्थाधिकारिणां न लेशतोऽपि संबन्धस्ततस्तेषामिदं मतमिति न मन्तव्यम्। किंत्वग्रे स्वनामोपनाम्नोरुट्टङ्कनस्य कर्ता प्रकृतलेखकः स्वातन्त्र्येणेदृशार्थप्रवचने प्रवृत्तस्ततस्तस्यैवात्र सर्वात्मना संबन्ध इति श्रावयित्वा प्रसङ्गसंगतया चण्डालाद्यस्पृश्यविषये कंचिद्विचारं बुद्धिवैशद्यार्थं प्रवर्तयति—

येयं चण्डालादिष्वस्पृश्यता सा किं जातिनिबद्धाऽथवाऽस्पृश्यत्वानन्तरमाशौचादिवत्केनचिन्निमित्तेन समुत्पन्ना । तथेयमस्पृश्यता निवर्तते न वा । किंच याऽसावस्पृश्यतानिबद्धा चाण्डालत्वादिजातिः सा किं जन्मना सह जायत आहोस्विद्गुणकर्मभ्यां निष्पद्यत इति । अत्र केचिदाधुनिका नव्यसंस्कारसंस्कृतहृदया अस्पृश्यानां मन्दिरप्रवेशमभिन्यमानाश्चाण्डालादिगतामस्पृश्यतां नैमित्तिकीं वर्णयन्ति । तथा चाण्डालत्वादिजातिं केवलगुणकर्मनिष्पाद्यामभिमन्यन्ते । अत एव च सा परिवर्तनमर्हतीति ब्रुवते ।

अत्र ब्रूमः—चाण्डालत्वादिजातिर्हि नैहिककर्मकृताऽपि तु शरीरसंनिवेशविशेषमाश्रिता सती जन्मसिद्धा । अत एव सा न परिवर्तनार्हा । तदुक्तम्—

यच्छरीरविनिवेशविशेषं संश्रिता सपदि या खलु जातिः ।
तच्छरीरपरिवर्तनं विना सा कथं नु विनिवर्ततेतराम् ॥ १ ॥ इति ।

एवमादिविस्तरेण प्रतिपादितं गुरुचरणैर्धर्मतत्त्वनिर्णयनिबन्धे । मयाऽपि धर्मतत्त्वनिर्णयपरिशिष्टप्रस्तावनायां कर्मकृतजातिवादिमतनिरूपणपुरःसरं शास्त्रीयविचारप्रदर्शनेन तन्मतं निरस्य जन्मसिद्धैव जातिरिति साधितं तत्तत्रैव द्रष्टव्यमिति न पुनस्तत्र मनो व्यापारयितुमिच्छामि ।

यत्तूच्यते—चाण्डालादिगतास्पृश्यत्वं न जातिनिबद्धं किंत्वाशौचादिवन्नैमित्तिकमिति । तन्न । स्मृतिषु क्वापि तादृशार्थकवचनानुपलम्भात् । किंच चाण्डालगताऽस्पृश्यता नैमित्तिकीति ब्रुवता तादृशास्पृश्यतायां निमित्तत्वेन किमभिमेयते त्वया ? । 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्नीषत एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' (कौ० ब्रा० ३ । ८) 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' (बृ० ३।२) इत्यादिश्रुत्यनुसंधानादपुण्यं कर्म तन्निमित्तत्वेन विज्ञायत इति चेद्धन्तैवं प्रष्टव्यो भवान् , किं तदपुण्यं कर्म, ऐहिकं सत्तन्निमित्तत्वेनाऽऽश्रीयतेऽथवा प्राक्तनजन्मकृतम् । तथा लौकिकमलौकिकं वेति । ऐहिकमिति चेदुत्पत्तिसमसमयं यच्चाण्डालबालकेऽस्पृश्यत्वं सर्वलोकप्रसिद्धं तत्कथमिव संगच्छताम् । नहि तादृशातिशयितशैशवावस्थायां कस्यचिदपि कर्मणः करणे तस्य काचिदपि शक्तिरस्ति । अस्ति वा ब्रह्मभूयमिव गतेषु चोखामेळाप्रभृतिषु साधुषु हरिजनेषु तादृशस्य कर्मणः संभवः । येन पूर्वोक्तोदाहरणस्थले लोकविश्रुता शास्त्रसिद्धा चास्पृश्यता वक्तुं युज्येत । जन्मान्त-

रीयं वदिति चेद्ब्रूमे हन्तैवं काऽनुपपत्तिश्चाण्डालादिगतास्पृश्यताया जन्मजातत्वे। उच्चनीचां सृष्टिं विदधानः परमेश्वरस्तत्तत्प्राणिगतजन्मान्तरीयकर्मसहायः सन्नेव जगत्सर्गे प्रवर्तते न तु प्राणिकृतवर्तमानकर्मसापेक्षः। अत एव नेश्वरे वैषम्यादिदोषप्रसक्तिरिति स्पष्टं प्रतिपादितम्—'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' इति बादरायणसूत्र आचार्यचरणैरिति न कथमपि चाण्डालादिजातिगतास्पृश्यतायां तत्तत्प्राणिकृतैहिककर्मणो हेतुत्वं प्रत्याशा धर्तव्या। तथा च वर्तमानकर्मनिमित्तकं चाण्डालाद्यस्पृश्यत्वमिति निराधारं शास्त्रविरुद्धं च तव वचनम्।

ननु तादृशवचनानुपलम्भेऽप्यनुमीयत एषोऽर्थः। वर्णयन्ति च प्राण्यन्तर्गतः कश्चिदेकः प्राणी जन्मतोऽस्पृश्यः कथं भवितुमर्हेत्? । स तथा भवितुं नार्हतीत्यनुमानेन पूर्वोक्तमस्पृश्यत्वं न जातिनिबद्धं किंतूत्पत्त्यनन्तरं केनचित्कर्मणा समासक्तमिति भासयितुं यतन्ते। तथा चायमनुमानप्रयोगः—'प्राणिविशेषं पक्षीकृत्य जन्मतोऽस्पृश्यत्वाभावः साध्यते। प्राणित्वाद्धेतोः। ब्राह्मणादिवत्' इति। तन्न समीचीनम्। अनुकूलतर्काभावेनानुमानस्य कस्यचिदप्यर्थस्यासाधकत्वात्। व्यभिचाराच्च। चण्डालविशेषेषु प्राणित्वेऽप्यस्पृश्यत्वाभावस्यासिद्धत्वात्। एवं सत्यपि यद्यनुमानं भवत्येवेत्याग्रहस्तर्हि त्वदुक्तेनैव मार्गेण वयमेवमनुमास्यामः—प्राणिविशेषं पक्षीकृत्य स्पृश्यत्वाभावः साध्यते प्राणित्वात्। चण्डालादिवत्, इति। तथा च तव मते यथा न कोऽपि प्राण्यस्पृश्यस्तथा मम मते न कोऽपि प्राणी स्पृश्यः।

किंच दृष्टविरुद्धमप्यनुमानम्। प्राणिविशेषं पक्षीकृत्य जन्मतो मनुष्यत्वाभावः साध्यते, प्राणित्वात्—व्याघ्रादिवत्। यथा जन्मतो मनुष्यत्वाभावानुमानं दृष्टविरोधि तथा त्वदीयं चण्डालाद्यस्पृश्येष्वस्पृश्यत्वाभावानुमानमपि दृष्टविरुद्धमित्यर्थः। इतरथा प्राक्तने जन्मनि चटकादिपक्षिणां मध्ये कस्त्वमासीः? केन चैहिकेन कर्मणा त्वयि मनुष्यत्वं संसक्तं तद्वक्तुं संनद्धः। एवं च चण्डालादिषु याऽस्पृश्यता न सैहिककर्मकृताऽपि तु जातिनिबद्धैव। 'चण्डालं पतितं चैव दूरतः परिवर्जयेत्' इत्यादयः श्रुतिस्मृतयोऽपि चाण्डालजातिमुल्लिख्य तत्स्पर्शपरिवर्जनमभिदधत्योऽस्पृश्यताया जातिनिबद्धतायां साक्षिण्यो भवन्ति। 'येऽपि स्युः पापयोनयः' (भ० गी० ९। ३२) इति श्लोकान्तर्गतपापयोनिशब्दार्थनिर्वचनाव-

सरे 'अन्त्यजा जातिदोषेण दुष्टाः' इति मधुसूदनसरस्वतीभिः कण्ठरवेणोक्तत्वाच्चाण्डालाद्यस्पृश्यताया जातिनिबद्धत्वं व्यक्तमेवावगम्यते । अत एव यथा देहपरिवर्तनमन्तरा जातिर्न निवर्तते तथा तादृशजातिनिबद्धाऽस्पृश्यताऽपि न देहपरिवर्तनमन्तरा निवर्तितुमुत्सहत इति प्रवाहेणैव सिध्यति। अत एव चोत्पत्तिक्षणमारभ्य यावद्देहपातं शैशवादियत्किंचिदवस्थाविशिष्टस्य चाण्डालाद्यस्पृश्यस्य स्पर्शं यत्र क्वाप्युच्चावचस्थले परिवर्जयन्ति शिष्टाः।

भवत्वेवं चाण्डालाद्यस्पृश्यता जन्मसिद्धाऽत एव चापरिवर्तनीया । परं त्वस्पृश्यानां मन्दिरप्रवेशे न किंचिद्बाधकं पश्यामः । न च चाण्डालस्पर्शस्य प्रत्यवायापादकत्वं बोधयन्ती 'चाण्डालं पतितं चैव दूरतः परिवर्जयेत्' इत्यङ्गिरःस्मृतिरेव तत्र प्रतिबन्धिकेति वाच्यम् ।

देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥

इति स्थलविशेषे चाण्डालाद्यस्पृश्यस्पर्शदोषं प्रतिषेधन्त्याऽपवादिकयाऽत्रिसंहितयाऽङ्गिरःस्मृतेर्बाधितत्वात् । इति चेद्भ्रान्तोऽसि ।

'स्पृष्टास्पृष्टिर्न विद्यते' इत्यत्रिसंहितास्थं वचनं न चाण्डालाद्यस्पृश्यस्पर्शविधायकं नापि तादृशस्पर्शजन्यदोषनिषेधकम् । तथा हि—स्पृष्टास्पृष्टिरित्यत्र स्पृष्टं स्पर्शः । भावे क्तः । अस्पृष्टिरस्पर्शः । स्पर्शाभाव इति यावत् । भावे स्त्रियां क्तिन् । समासोत्तरमेकवचनश्रवणान्नायमितरेतरयोगद्वंद्वः । नापि समाहारद्वंद्वः । समासोत्तरं विभक्तिश्रवणादेव । किं तर्हि कर्मधारयः । स्पृष्टं चासावस्पृष्टिश्चेति विग्रहः । यादृशस्य वस्तुनः स्पर्शत्वमस्पर्शत्वं च भवति तादृशः स्पृष्टास्पृष्टिशब्दार्थ इत्यर्थः । स चार्थः पारम्परिकोऽस्पृश्यस्पर्शः । यथा साक्षाच्चाण्डालस्पृष्टो देवदत्तः । तादृशदेवदत्तस्पृष्टो यज्ञदत्तः । अत्र चाण्डालमारभ्य तृतीयेन यज्ञदत्तेन सह पश्चाण्डालस्पृष्टदेवदत्तस्पर्शः स स्पृष्टास्पृष्टिशब्दवाच्यः । कथं पुनरेकस्यैव वस्तुनो विरुद्धधर्मद्वयाक्रान्तत्वम् । यथैकदेशस्येष्टस्य करणात्कृतत्वम् । अनिष्टस्यापरैकदेशस्य करणादकृतत्वम् । इत्येकस्यैव वस्तुनः कृताकृतत्वं कृतं च तदकृतं च कृताकृतमित्यत्र व्यवह्रियते तद्वत्प्रकृते तृतीययज्ञदत्तनिष्ठे चाण्डालस्पृष्टदेवदत्तस्पर्शेऽस्पृश्यस्य चाण्डालस्य परम्परया संबन्धात्स्पर्शत्वं साक्षात्संबन्धाभावेन चास्पर्शत्वं,

बोध्यम् । लक्षणया च तादृशस्पर्शजन्यदोषपरत्वम् । एवं च ' स्पृष्टास्पृष्टिर्न विद्यते ' इत्यत्रिवचनस्य देवयात्राविवाहादिषु स्थलविशेषेषु परम्परयाऽस्पृश्यस्पर्शजन्यः प्रत्यवायो नास्तीत्यर्थः संपद्यते । तेन चाण्डालादारभ्य तृतीय यज्ञदत्तनिष्ठश्चाण्डालस्पृष्टदेवदत्तस्पर्शः स्वसमवायिनि यज्ञदत्ते प्रत्यवायं नोत्पादयेत् । परंतु द्वितीये साक्षाच्चाण्डालस्पृष्टे देवदत्ते चाण्डालस्पर्शः स्थलविशेषेऽपीतरत्रेव प्रत्यवायमुत्पादयेदेवेति कथमनयोरङ्गिरोऽत्रिसंहितावचनयोरपवाद्यापवादकभावः । चाण्डालस्पर्शस्य दोषवत्त्वं बोधयन्त्या अङ्गिरःस्मृतेश्चाण्डालो विषयः । चाण्डालस्पृष्टदेवदत्तस्पर्शस्य दोषवत्त्वाभावमभिदधतोऽत्रिवचनस्य तु साक्षाच्चाण्डालस्पृष्टो देवदत्तो विषय इत्युभयोर्भिन्नविषयत्वात् । तथा च कथं चात्रिवचनमस्पृश्यानां मन्दिरप्रवेशेऽनुकूलं भवेत् । एतेन ' स्पृष्टिदोषो न विद्यते ' ( शातातपः ) इति पाठानुसारात्स्पृष्टास्पृष्टिपदे लक्षणावृत्तिं स्वीकृत्यास्पृश्यस्पर्शजन्यदोषो न विद्यत इत्यर्थमङ्गीकुर्वाणाः परास्ता वेदितव्याः । अस्पृष्टिपदवैयर्थ्यप्रसङ्गात् । तत्पदस्वारस्यभङ्गाच्च ।

किंच यदि स्पर्शजन्यो दोषो नास्तीत्येवार्थोऽभिमेतः स्यात्तर्हि ' साक्षात्स्पर्शो न विद्यते ' अथवा ' स्पर्शदोषो न विद्यते ' इत्येव वक्तव्यं स्यात् । तथा तु नोक्तम् । तस्मान्मदुक्त एवार्थो युक्तः । तथा सति नास्पृष्टिपदवैयर्थ्यं नापि तत्स्वारस्यभङ्गः । एतदेकवाक्यतया 'स्पर्शदोषो न विद्यते ' 'स्पृष्टिदोषो न विद्यते ' इत्यादौ यत्र स्पृशधातोः प्रयोगस्तत्रापि पारम्पारिक एव स्पर्शः स्पृशधातोरर्थः । अन्यथा वाक्यभेदलक्षणदोषापत्तेः ।

एवं च ' स्पृष्टास्पृष्टिः ' इत्यत्र स्पृष्टं स्पर्शः, अस्पृष्टिरस्पर्शः, इत्यर्थनिर्वचनस्य मान्यतां प्रदर्श्य स्पृष्टास्पृष्टिपदयोरितरेतरयोगद्वंद्वे ' स्पृष्टास्पृष्टी ' इति दीर्घान्तेन भाव्यं समाहारद्वंद्वे तु ' स्पृष्टास्पृष्टि ' इति ह्रस्वान्तेन भाव्यं तत्तादृशं किमिति न संजातमिति यदाक्षिपन्ति तत्तुच्छम् । तत्र द्वंद्वस्यैवाभावात् । कर्मधारयसमासस्योपपादितत्वाच्च ।

ननु स्मृतौ ' स्पृष्टास्पृष्टिः ' इति प्रथमैकवचनान्ते स्पष्टं दृश्यमाने सति कथमयं शङ्काप्रसरो द्वंद्वोऽयमिति ? । स्पृष्टं स्पर्शः । अस्पृष्टिरस्पर्शः । इति तद्व्युत्पत्तिवर्णनेनेति चेत् । राजा नृपः । पुरुषः सेवकः, इत्यर्थनिर्वचनेन ' राजपुरुषः ' इति तत्पुरुषस्य द्वंद्वसमासत्वं कोऽप्यभ्युपैति । अथा-

र्थनिर्वचनानन्तरं धर्मतत्त्वनिर्णये 'स्पर्शास्पर्शयोः' इत्युल्लेखात्स्पृष्टा-स्पृष्टिरिति द्वंद्वमवगच्छामीति चेदहो पाण्डित्यम्। यतः—'गुणशतमपि दोषः कश्चिदेकोऽतिवृद्धः क्षपयति यदि नान्यस्तद्विरोधी गुणोऽस्ति' इति श्लोकान्तर्गतस्य गुणानां शतमित्यर्थकस्य गुणशतशब्दस्य व्याख्यानावसरे काव्यप्रकाशसाहित्यदर्पणटीकयोः 'गुणशतयोः समासत्वे' इत्युक्त्वा गुणशतशब्दयोर्द्वंद्वं कृत्वा प्रदर्शितत्वेन तावता गुणशतमित्ययं द्वंद्व इति कस्त्वदन्यः पण्डितंमन्योऽप्यभिमन्येत, वद।

किंच स्पृष्टास्पृष्टिशब्दस्य द्वंद्वसमासत्वेऽपि न काचित्क्षतिः। यदा हि समाहारद्वंद्वः समाहारद्वंद्वप्रयुक्तनपुंसकलिङ्गता च तदा 'स्पृष्टास्पृष्टि' इति लुप्तविभक्त्यन्तेन ह्रस्वान्तेन भाव्यमेव। उपलभ्यते च तथा पाठो रत्नाकरग्रन्थे 'स्पृष्टास्पृष्टि न विद्यते' इति। यदा तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति वार्तिकोक्तेः 'स्तोः श्चुना श्चुः' स्तोरिति समाहारद्वंद्वः। सौत्रं पुंस्त्वम्। इति मनोरमोक्तदिशा समाहारद्वंद्वप्रयुक्तां नपुंसकतां बाधित्वाऽऽर्षत्वात्पुंस्त्वमाश्रीयते तदा यथास्थितपाठः समीचीन एव। स एवाद्यास्मत्पुरतोऽवतिष्ठत इति किमनुपपन्नम्। येन कलहायसे।

नन्वेवं भवतु स्पृष्टास्पृष्टिरित्यस्य द्वंद्वस्य साधुत्वम्। तथाऽपि चाण्डालस्पृष्टदेवदत्तादेरेव स्पर्शो न दोषोत्पादकश्चाण्डालस्पर्शस्तु दोषोत्पादक एव (परम्परयाऽस्पृश्यस्पर्शे स्पृष्टास्पृष्टिर्नेति निषेधः प्रवर्तते न साक्षाच्चाण्डालस्पर्शे) इत्ययमर्थः कथमस्माल्लभ्यत इति चेत्सावधानतया शृणु—स्पृष्टं स्पर्शः। अस्पृष्टिरस्पर्शः। उभयत्रापि स्पृशधातोर्भावे प्रत्ययः। स चैकत्र क्तोऽपरत्र क्तिन्। तथा च यात्रादिषु चाण्डालादीनामस्पृश्यानां स्पर्शो देवदत्तस्य जातः। यज्ञदत्तस्य च न जातः। तादृशदेवदत्तयज्ञदत्तानिष्ठयोस्तयोः स्पर्शास्पर्शयोर्भेदो नास्ति नाम जनसंमर्दे जायमानोऽपि देवदत्तस्य चाण्डालस्पर्शो देवदत्तेऽशुचित्वमुत्पादयन्नपि तादृशाशुचित्वप्रयुक्तामस्पृश्यतां नोत्पादयति। चाण्डालस्पृष्टचाण्डालास्पृष्टयोः परस्परं स्पर्शे दोषो नास्तीति यावत्।

अयं भावः—अस्पृश्यताया अकारणिकाया असंभवेन तन्मूलं किमिति जिज्ञासायामस्पृश्यस्पर्शवर्जनान्यथानुपपत्त्याऽशुचित्वं तन्मूलमिति वक्तव्यम्। लोके हि सर्वत्र नियमेनाशुचेरेव पदार्थस्य परिवर्जनं क्रियमाणं

दृश्यते । अशुचित्वं हि कश्चन दोषरूपोऽतिशयविशेषः । स चात्र चाण्डालादिषु जन्मान्तरीयकर्मजन्यो जीवदेहनिष्ठो यावदाश्रयभावी । अस्पृश्यस्पृष्टे तु—अशुचिस्पर्शादिकारणान्तरजन्यः स्नाननिवर्त्यः क्षणिकः सः । अशुचित्वस्य च कार्यत्रयम् । कर्मानधिकारोऽस्पृश्यताऽस्पृश्यतोत्पादनद्वाराऽशुचित्वं चेति । तत्र प्राथमिकं कार्यद्वयमशुचित्वाश्रये पुरुषे समुत्पद्यते । अन्त्यं त्वशुचित्वाश्रयपुरुषसंस्पृष्टे पुरुषान्तरे ( अस्पृश्यस्पृष्टदेवदत्ते ) जायत इति वस्तुस्थितिः । तादृशकार्यत्रयमध्ये यद्द्वितीयं कार्यमस्पृश्यताख्यं तदनेन निषिध्यते—अस्पृश्यता नास्तीति । तृतीयकार्यस्य च यात्रादिषु जनसंमर्देऽपि न निषेधो भवति । अतस्तत्रापीतरत्रेव चाण्डालस्पृष्टेषु देवदत्तादिष्वशुचित्वमुत्पद्यत एव ।

ननु यद्यशुचित्वस्य द्वितीयकार्यभूता याऽस्पृश्यता सा निषिध्यतेऽस्पृश्यता नास्तीति तर्हि कथमुच्यते यात्रादिषु जनसंमर्देऽपीतरत्रेव चाण्डालस्पृष्टेषु देवदत्तादिष्वशुचित्वमुत्पद्यत एवेति । यतः स्पृष्टास्पृष्टिर्न विद्यत इति प्रकृतवचनं तत्र बाधकमिति चेदद्दढं भ्रान्तोऽसि । कुत इति चेत्—चाण्डालस्पृष्टेषु तत्प्रवृत्तावपि चाण्डाले तत्प्रवृत्तौ प्रमाणाभावात् । तथा हि—स्पर्शास्पर्शौ हि तत्प्रवृत्तौ लिङ्गम् । स्पृष्टास्पृष्टिरित्युक्तत्वात् । न तच्चाण्डाले दृश्यते । किंतु चाण्डालस्पृष्टेषु तदस्पृष्टेषु च । तथा च स्पर्शास्पर्शयोर्भेदो नास्तीत्यर्थबोधकस्य तस्य वचनस्य चाण्डालस्पृष्टेषु देवदत्तादिषु तदस्पृष्टेषु यज्ञदत्तादिषु च प्रवृत्तावपि चाण्डाले नैव प्रवृत्तिः संभवति । किं तर्हि तेन निषिद्धमिति चेदुच्यते । यथा चाण्डालगतेनाशुचित्वेन स्वसामानाधिकरण्येन कर्मानधिकारास्पृश्यते वैयधिकरण्येनाशुचित्वं चेत्येवं कार्यत्रयमुत्पादितं तथा तत्रत्येन तृतीयकार्यभूतेन चाण्डालस्पृष्टदेवदत्तगतेनाशुचित्वेनापि स्वाश्रये कर्मानधिकारास्पृश्यते स्वाश्रयसंसृष्टसंसृष्टे ( चाण्डालस्पृष्टदेवदत्तस्पृष्टे पुरुषान्तरे ) अशुचित्वं चेत्येतत्कार्यत्रयमुत्पादनीयम् । तत्र च चाण्डालस्पर्शरूपलिङ्गसत्त्वेन 'स्पृष्टास्पृष्टिर्न' इतिवचनप्रवृत्त्या निरुक्तकार्यत्रयमध्ये यद्द्वितीयं कार्यं देवदत्तादिष्वस्पृश्यतोत्पादनं तन्निषिध्यते । तृतीयकार्यस्य च तत्संस्पृष्टे परत्राशुचित्वोत्पादनरूपस्य द्वितीयाधीनत्वाद्द्वितीयस्याभावे तृतीयस्याप्यर्थादेवाभावः । देवदत्तादिष्वनुत्पन्ना ह्यस्पृश्यता कथं देवदत्तस्पृष्टे चैत्रेऽशुचित्वमुत्पादयितुं प्रभवेत् ?

चाण्डालस्पर्शजन्यस्य देवदत्तादिगताशुचित्वस्य प्रथमं कार्यं कर्मानधिकार-रूपं तु जायत एव । अतस्तदशुचित्वं देवदत्तादिभिः स्नानादिना निर्हरणीयमेव ।

अयमाशयः—अस्पृश्यता च स्पर्शजन्यो दोषः । स्पर्शश्च चाण्डालस्पृष्ट-देवदत्तस्य तदस्पृष्टयज्ञदत्तेन सह जायमानः । तादृशश्च स्पर्शः पारम्परिक एव । तथा च स्पर्शास्पर्शरूपलिङ्गेनास्पृश्यस्पर्शवदस्पृश्यस्पर्शाभाववतोर्यः स्पर्शस्तस्यात्र ग्रहणसूचनात्पारम्परिकस्पर्शजन्य एव दोषः स्पृष्टास्पृष्टिर्नैतिव-चनेन यात्रादौ जनसंमर्दे निषिध्यते नतु स्थलविशेषेऽपि चाण्डालदेवदत्तयोः साक्षात्स्पर्शजन्यदोषो निर्ह्रियते । तयोः स्पर्शास्पर्शरूपालिङ्गवत्त्वाभावात् । एवं च साक्षाच्चाण्डालस्पर्शे यात्रादिष्वपि देवदत्तादीनामशुचित्वं विद्यत एव । परम्परया स्पर्शे तु देवदत्तस्पृष्टयज्ञदत्तादीनां नाशुचित्वमिति सिध्यति । सत्येवं यदिदं वचनं साक्षाच्चाण्डालस्पर्शेऽपि प्रवर्तयितुं प्रयतसे तदेतन्मोह-विलसितापरपर्यायं महत्पाण्डित्यम् । अस्पृष्टिर्न विद्यत इत्येतावतैवास्पृश्यता नास्तीति त्वदाभिमतार्थसिद्धेः । तथा च स्पृष्टपदवैयर्थ्यं स्पृष्टमेव । एवं च स्पृ-पदं निवेशयतोऽत्रेरपि स्पृष्टमेवमेवाऽऽशयोऽवगम्यते यत्र स्पर्शास्पर्शौ भव-तस्तत्रैवेदं वचनं प्रवर्तत इति । तथा च स्पृष्टास्पृष्टिरित्यत्र कर्मधारये वा द्वंद्वे वा न रूपभेदः । नाप्यर्थभेदः ।

किंच 'देवयात्राविवाहेषु' इत्यत्र देवानां यात्राः देवयात्राः । देवयात्राश्च विवाहाश्च देवयात्राविवाहास्तेषु इति तत्पुरुषगर्भो द्विपदद्वंद्वः । नतु देवश्च यात्रा च विवाहश्चेत्यनेकपदद्वंद्वः । तथा च देवयात्रायां विवाहे चेत्यादिस्थले स्पर्शदोषो नास्तीत्येवार्थः संपद्यते नतु देवालये स्पर्शदोषो नास्तीति । तत्कथमिवेदं वचनमस्पृश्यानां मन्दिरप्रवेशेऽनुकूलमित्युच्यते ।

अत्र किञ्चिदाह—समासोत्तरं श्रूयमाणबहुवचनप्रत्ययोपपत्त्यर्थमनेकप-दानामेव द्वंद्व आश्रयणीयो भवति । देवपदेन च लक्षणया देवालयं गृह्यते । ततश्च देवालये स्पर्शदोषो नास्तीत्यर्थप्रतिपादकत्वादस्पृश्यानां मन्दिरप्रवेशोऽ नुकूलमिदं वचनं भवति । यदि तु तत्पुरुषगर्भो द्विपदद्वंद्वः क्रियेत तदा समासोत्तरं बहुवचनमनुपपन्नं स्यात् । यतः पातञ्जलमहाभाष्ये—'एकवच-नमुत्सर्गतः करिष्यते । द्विवचनबहुवचनयोः प्रयत्नोऽपेक्ष्यते' इत्युक्तत्वात् । शब्दादेकवचनप्रत्ययः स्वभावतः क्रियते, परंतु द्विवचनबहुवचनप्रत्ययोत्पा-

दने द्वित्वबहुत्वार्थप्रतिपादकस्य प्रकरणादेरपेक्षा भवतीति तदर्थः । प्रकृत-स्थले देवयात्रेत्येकेन सामासिकपदेनैकेन विवाहपदेन चानेकदेवयात्राणामनेकविवाहानां च ग्रहणे प्रमाणाभावेन पदद्वयोच्चारणरूपप्रयत्नसत्त्वात् समासोत्तरं द्विवचनमुत्पद्येत न बहुवचनम् । अनेकपदद्वंद्व आश्रीयमाणे तु देवेत्यादिपदत्रयोच्चारणरूपप्रयत्नसत्त्वेन सुलभं बहुवचनं भवतीति ।

अत्रोच्यते—यदि बहुवचनोत्पत्त्यर्थं त्रिचतुरादिपदोच्चारणरूपप्रयत्नापेक्षेति मन्यसे तर्हि 'देवयात्राविवाहेषु' इत्यस्मिन्नेवात्रिवचन उत्तरार्धे 'उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते' इत्यत्रोत्सवेष्विति बहुवचनं नोपपद्येत । नहि तत्र शब्दत्रयोच्चारणमस्ति, अथवा कल्पितनियमानुसारेण तत्र, उ–त्स–व, इति पदत्रयच्छेदं करोषि ? 'बहुषु बहुवचनम्' इति शास्त्रेणार्थानां बहुत्वे बहुवचनं विधीयते न शब्दानां बहुत्वे । अत एवोत्सवानां बहुत्वादुत्सवेष्विति बहुवचनं संगच्छते । अथ तु—उत्सवेष्विति बहुवचनोपपत्त्यर्थं सरूपाणामेकशेषविधानाद्यथाकथंचित्पदत्रयोच्चारणं तत्रास्तीति ब्रूषे तदैकस्मिन्नेव देवयात्राशब्दे विवाहशब्दे च त्वदुक्तरीत्या शब्दत्रयोच्चारणासत्त्वे किं प्रतिबन्धकम् ? एवं च स्वोक्तिविरुद्धं व्याकरणशास्त्रविरुद्धं च तादृशार्थवर्णनम् ।

अपि च—उपर्युक्तस्य 'एकवचनमुत्सर्गतः करिष्यते' इत्यादिभाष्यग्रन्थस्य 'यत् शब्दादेकवचनप्रत्ययः स्वभावतः क्रियते' इत्याद्यर्थवर्णनं तद्व्याकरणशास्त्रात्यन्ताज्ञाननिबन्धनम् । तद्भाष्यस्य देवयात्राविवाहेष्विति प्रकृतस्थले संबन्धाभावात् । यदि तु 'वृत्तौ हि उपसर्जनानामेकत्वसंख्यौत्सर्गिकी द्वित्वादिकं तु प्रयत्नलभ्यम्' इति भाष्ये संयोगसंज्ञासूत्रस्थे स्थितस्य मनोरमोक्तग्रन्थस्य प्रकृतस्थले नियोजनमित्याकूतम् । तदप्यभद्रम् । उपसर्जनपदघटितो राजसंबन्धी पुरुष इत्यर्थको 'राजपुरुषः' इत्यादिः समासस्तदुदाहरणमिति स्पष्टमेव 'वृत्तौ हि उपसर्जनानाम्' इत्युक्तेः । इतरेतरयोगद्वंद्वस्तु नोपसर्जनपदघटितः किंतु सर्वपदप्रधानो भवति । 'उभयपदार्थप्रधानो द्वंद्वः' इति समासचक्र एव तल्लक्षणस्योक्तत्वात् । सोऽयं बालावगम्योऽप्यर्थो न ते स्मृतिपथमायात इति सखेदाश्चर्यकरं तव पाण्डित्यम् । तदेतदस्तु नायं तव विषयः । किंत्विदमेव सर्वपदप्राधान्यं पुरस्कृत्य गृहीतायामुक्तम्—'द्वंद्वः सामासिकस्य च' इति,

एतदपि वेदान्तिशिरोमणिनाऽनन्यादृक्षेण पण्डितेन त्वया स्मृतौ नानीत-मिति महदद्भुतम् ।

एतदग्रे स एव पुनराह—' स्मृत्यर्थसारे ' यात्रादेवगृहेषु ' इत्ययं निःसंदिग्धः पाठ उपलभ्यते । तादृशपाठानुसारेण ' देवयात्राविवाहेषु ' इत्यत्रापि देव, यात्रा, विवाह, इतीदृगेव पदत्रयं मन्तव्यमिति । तस्याय-माशयः—तत्र देवगृहेष्विति समस्तमेकं पदमिति जानाति अङ्कः । देवमन्दिरेष्विति तदर्थः । तथा च 'देवयात्राविवाहेषु' इत्यत्र देवपदेन देवगृहमित्यर्थो ग्रहीतव्यः । न तु देवशब्दस्य यात्राशब्देन समासं कृत्वा देवयात्रेत्येकं पदम् । ततश्च देवयात्राविवाहेत्येतादृशं पदत्रयमत्र फलतीति ।

परंतु स्मृत्यर्थसारे ' यात्रादेवगृहेषु ' इत्यत्र यात्रा, देव, गृह, इत्येता-दृंशि त्रीणि पदानि किमिति न धर्तव्यानि, प्रत्युत बहुवचनोपपत्त्यर्थं स्वकपोलकल्पितपूर्वोक्तनियमानुसारेणात्र पदत्रयमेव धर्तुमुचितं तव । तथाऽपि देवगृहेति षष्ठीतत्पुरुषसिद्धमेकमेव पदमिति त्वयाऽप्यभ्युपग-न्तव्यमेव । अत एव देवयात्राविवाहेष्वित्यत्रत्यदेवपदेन देवमन्दिररूपोऽ-र्थो ग्रहीतुं योग्यो भवति तव । इतरथा देवशब्दवाच्यार्थं परित्यज्य तादृशार्थग्रहणे प्रमाणं नावशिष्येत । तस्मादनेका यात्रा अनेकानि च देव-गृहाणीत्यर्थगतबहुत्वोद्देशेनैव यात्रादेवगृहेष्वित्यत्र बहुवचनप्रत्ययः कृतः, न तु शब्दगतबहुत्वोद्देशेनेति सिध्यति । ततश्च बहुवचनोपपत्त्यर्थं त्रिच-तुरादिपदापेक्षेति नियमस्तदनुसारेण च देवयात्राविवाहेष्वित्यत्र त्रीणि पदानि देवपदेन च देवगृहं गृह्यत इत्येतत्सर्वं व्याख्यानमन्तराले चित्रनि-र्माणमिव भवति ।

' देवयात्राविवाहेषु ' ' यात्रादेवगृहेषु ' इत्येतस्मिन्स्थलद्वये समासार्थ-प्रदर्शने यद्यप्यर्धजरतीयता कृता तथाऽप्यस्पृश्यसंस्पर्शादेवं वर्जयतीति धन्यवादार्हः खलु पूर्वपक्षी ।

अथ बहुवचनप्रत्ययोपपत्त्यर्थं त्रिचतुरादिपदोच्चारणापेक्षेति स्वकपो-लकल्पितनियमाभङ्गाय ' यात्रादेवगृहेषु ' इत्यत्रापि पृथक्पदत्रयमेवोररी-क्रियत इति चेत्तर्हि ब्रूयास्तर्हि सोऽयमीदृक्पदत्रयस्वीकारस्तदर्थनिर्व-चनावसरे यद्देवालयेष्वित्यर्थप्रदर्शनं कृतं तद्विरुद्धो भवति । अथ च 'देव-

यात्राविवाहेषु' इत्यत्रत्यदेवपदेनलक्षणया देवगृहरूपार्थग्रहणे प्रमाणं नोर्वरितं भवति । यदि तु देवगृहशब्दयोः षष्ठीतत्पुरुष आश्रीयते तदैतदेकवाक्यतया 'देवयात्राविवाहेषु' इत्यत्रापि लक्षणावृत्त्या देवशब्देन देवगृहरूपार्थग्रहणं युज्यते नान्यथा । तदेतद्द्वयं यद्यपि स्मृतेरपर्यापितं तथाऽपि त्वदुक्तेन व्याकरणशास्त्रनियमानुसारेण देवगृहयोः पृथक्पदत्वे सति 'स्वकीयगृहेऽपि, अस्पृश्यता नास्ति' इत्येवादृशि शुद्धे ऋजौ चार्थे भवति सति यत्सार्वजनिकेष्वेव देवालयादिष्वस्पृश्यस्पर्शमनुमोदसे तदेतत्स्वगृहं दृढं दत्तार्गलं कृत्वा शर्करामोदकविक्रेतृ(हलवाई)गृहोपरि तुलसीपत्रस्थापनमनुकरोति ।

यत्तूच्यते—'चाण्डालं पतितं चैव दूरतः परिवर्जयेत्' इत्याङ्गिरःस्मृतावविशेषेण स्पर्शदोषमुक्त्वा विशेषस्थले तदपवादत्वेन—

'तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न विद्यते' ।

इत्ययं श्लोकः प्रणीतः । तथा च चाण्डालमिति वचनं बाध्यं स्पृष्टास्पृष्टिर्नेति तु तद्बाधकमिति ।

तत्रोच्यते—वचनयोर्हि तत्रापवाद्यापवादकभावो भवति यत्र सामान्यविशेषभावो नियमेनास्ति । यथा पदाहवनीयशास्त्रयोः । 'यदाहवनीये जुहोति' इति होमत्वावच्छिन्नोद्देशेनाऽऽहवनीयसंज्ञकाग्निरूपाधिकरणविधायकमाहवनीयशास्त्रम् । अश्वमेधे 'अश्वस्य पदे जुहोति' इति विजातीयहोमत्वोद्देशेन यागीयाश्वपदप्रक्षेपस्थानरूपाधिकरणविधायकं पदशास्त्रम् । तत्राऽऽहवनीयविधायकं सामान्यशास्त्रं विशेषशास्त्रं तु पदविधायकम् । एवं च सामान्यविषयकस्याऽऽहवनीयशास्त्रस्य विशेषविषयकं पदशास्त्रं बाधकं भवति । अर्थादपवाद्यत्वेनाभिमतस्य सामान्यशास्त्रत्वमपवादत्वेनाभीष्टस्य तु विशेषशास्त्रत्वमपेक्षितमिति नियमः फलति । प्रकृतस्थलेऽस्पृश्यस्पर्शप्रतिबन्धविधायके बाध्यत्वेनाभिमते चाण्डालमिति वचने विशेषरूपेण चाण्डालोपस्थितिर्जायते, स्थलविशेषेऽस्पृश्यस्पर्शानुमोदके बाधकत्वेनाभीप्सिते स्पृष्टास्पृष्टिर्नेऽत्यत्र तु सामान्यरूपेणास्पृश्योपस्थितिर्भवति । ततश्च त्वन्मतानुसारेणाप्युक्तवचनयोर्मध्येऽपवाद्यापवादकभावस्त्वदभीष्टो न संभवति प्रत्युतोक्तवैपरीत्येनैवापवाद्यापवादकत्वं प्रसज्यते । तथा हि—स्थलविशेषे चाण्डालस्पर्शे जाते सति तत्र स्पृष्टास्पृष्टिर्नेति प्रवृत्तस्यापि वचनस्यास्पृश्यस्पर्श-

दोषनिषेधकस्य प्राप्तावपि तस्य चाण्डाले पतितं चैवेत्यङ्गिरोवचनेन बाधो भवति । स्पर्शानुग्राहकस्य सामान्यमुखप्रवृत्तत्वात्स्पर्शप्रतिबन्धकस्य च विशेषमुखप्रवृत्तत्वात् । एवं च स्थलविशेषेऽप्यस्पृश्यस्पर्शानुमोदकस्यैव स्पर्शप्रतिबन्धकं बाधकं भविष्यति ।

युक्तं चैतत् । यतः—चाण्डालसूतिकारजस्वलादिस्पृष्टश्चैत्रः प्रथमः । तादृशचैत्रस्पृष्टो द्वितीयः कश्चित् । तादृशद्वितीयस्पृष्टस्तृतीयः । तादृशतृतीयस्पृष्टश्चतुर्थो मैत्रः । तादृशचतुर्थस्पृष्टः पञ्चमः । अत्र प्रथमः साक्षात्स्पृष्टः । द्वितीयतृतीयचतुर्थास्तु परम्परया । तेषां चतुर्णां मध्ये प्रथमस्य सचैलस्नानमष्टशतगायत्रीजपः । द्वितीयतृतीययोश्च पूर्ववत्स्नानं तत्तदर्धजपः । चतुर्थस्य तु केवलं स्नानम् । इत्यनुक्रमेणास्पृश्यस्पर्शदोषपरिहारार्थं प्रायश्चित्तमुक्तं स्मृत्यर्थसारे । एतेन प्रथमं चैत्रमारभ्य चतुर्थमैत्रपर्यन्तमस्पृश्यत्वमुक्तं भवति । तच्चास्पृश्यत्वमुत्तरोत्तरं न्यूनन्यूनप्रमाणेनानुवर्तमानं भवत्पञ्चमे किंचिदपि नानुवृत्तं भवति ।

स्पृष्टास्पृष्टिर्नेतिवचनस्य च त्वदुक्तरीत्या तीर्थादिस्थलविशेषे स्पर्शदोषो नास्तीत्यर्थः । स च स्पर्शः कस्येत्याकाङ्क्षायां योग्यत्वादर्थसंगतेश्चास्पृश्यस्यैवेत्येव वक्तव्यम् । सामान्यरूपेणोपस्थितताया आकाङ्क्षायास्तेनैव रूपेण पूरणीयत्वस्योचितत्वात् । अस्पृश्यश्च कीदृश इति जिज्ञासायां प्राथमिकचैत्रमारभ्य मैत्रपर्यन्तमुक्ताश्चत्वारो गृह्यन्ते । ननु अस्पृश्यो नामास्पृश्यत्वविशिष्टः । तच्चास्पृश्यत्वं चाण्डाले चाण्डालस्पृष्टदेवदत्तादौ च समानमिति स्पृष्टास्पृष्टिरित्यत्र चाण्डालव्यतिरिक्ताश्चत्वार एव गृह्यन्त इत्युक्तिः कथं संगच्छतामिति चेदुच्यते ।

यद्यपि चाण्डाले चाण्डालस्पृष्टदेवदत्तादौ चेत्युभयत्राप्यस्पृश्यत्वं विद्यते तथाऽपि चाण्डालेऽस्पृश्यत्वं तज्जन्मतः सिद्धम् । जन्मतः सिद्धं च तज्जन्मपरिवर्तनमन्तरा नैव निवर्तनमर्हति । अत एव नित्यमित्युच्यते । देवदत्तादौ विद्यमानमशुचित्वं त्वस्पृश्यस्पर्शादिकारणान्तरजन्यं कारणनाशात्कार्यनाश इति न्यायेन निवर्तनक्षमम् । अत एवानित्यमित्युच्यते तत् । तयोरनयोर्द्विविधयोरस्पृश्यत्वयोर्मध्ये कीदृशमस्पृश्यत्वं स्पृष्टास्पृष्टिर्नेत्यनेन निषिध्यतामिति वीक्षायां चाण्डालगतस्यास्पृश्यत्वस्य नित्यत्वान्नित्यस्य च निषेद्धुमनर्हत्वाद्यस्य निषेधः संभवति तादृशास्पृश्यत्वस्यैव निषेधस्योचितत्वेन

स्थलविशेषेऽपि चाण्डालस्पृष्टदेवदत्तगतास्पृश्यत्वस्यैव निषेधो नतु कथं-मपि चाण्डालगतास्पृश्यत्वस्य निषेधः। एवं च कदाऽपि क्वापि चाण्डालगता-स्पृश्यत्वस्यानिषेधान्नित्यास्पृश्याश्चाण्डाला इति व्यवहार उपपद्यते। अन्य-था तादृशव्यवहारोच्छेदः स्यात्। अत एव परिभाषेन्दुशेखर एकस्मि-न्नुदाहरणे नित्यानित्ययोर्द्वयोः शास्त्रयोः प्राप्तौ केन किं बाध्यमिति विचारेऽ-क्लृप्ताभावकस्य (यस्याभावो न संभवति तस्य) बाधकल्पनापेक्षया क्लृप्ताभावकस्यैव (यस्याभावः संभवति तस्यैव) तत्कल्पनं युक्तिसहमित्युक्तं नागोजिभट्टैः। स्पष्टं चेदं व्याकरणशास्त्रपरिशीलनशालिनाम्।

अथास्पृश्यस्पर्शानुग्राहके स्पृष्टास्पृष्टिर्नेति वचने तीर्थादिस्थलविशेष-निर्देशोऽस्ति। चाण्डालं पतितं चैवेत्याद्यस्पृश्यस्पर्शप्रतिबन्धकवचने तु स नास्तीति कृत्वा स्थलविशेषांशेन स्पृष्टास्पृष्टिर्नेति विशेषशास्त्रम्। स्थलसा-मान्यांशेन तु चाण्डालमिति सामान्यशास्त्रम्। तथा च निरुक्तवचनयोर्मध्ये सामान्यविशेषभावसत्त्वेन शङ्कोक्तरीत्या बाध्यबाधकभावविज्ञाने किमस-मञ्जसमिति चेत्पृच्छसि तर्हि ब्रूमः—

एकैकांशेन वचनद्वयेऽपि पूर्वोक्ते सामान्यविशेषभावः समानः। तथा हि—स्पर्शप्रतियोग्यस्पृश्यविशेषचाण्डालांशेन चाण्डालमिति विशेषवचनं स्थलसामान्यांशेन तु सामान्यवचनम्। अथ च स्पृष्टास्पृष्टिर्नेत्य-पि स्थलविशेषांशेन विशेषवचनं स्पर्शप्रतियोग्यपृश्यसामान्यांशेन च सामान्यवचनम्। तथा च सामान्यविशेषभावस्योभयत्रापि समत्वेन द्वे अपि वचने तुल्यबले भवतः। तत्र प्रबलदुर्बलभावः सर्वथा वक्तुमशक्यः। एवं च यत्र क्वापि स्थले साक्षाच्चाण्डालस्पर्शस्य प्रतिबन्धप्रदर्शनं चाण्डाल-मित्यस्य मुख्यं कर्तव्यम्। अथ च स्थलविशेषे चाण्डालस्पृष्टचैत्रादिस्पर्शस्य (पारम्परिकस्पर्शस्य) दोषाभावकथनं स्पृष्टास्पृष्टिर्नेत्यस्य कर्तव्यम्। इत्येवं प्रकारेण तयोर्द्वयोर्वचनयोर्विषयस्य भिन्नत्वात्तत्र बाध्यबाधकभावो न संभ-वतीति तात्पर्यम्।

ननूच्यते—तीर्थादिस्थलविशेषेषु चाण्डालस्पृष्टदेवदत्तादेरस्पृश्यता नास्ती-ति स्पृष्टास्पृष्टिर्नेत्यनेन स्पष्टं प्रतिपादिते सत्यर्थाच्चाण्डालस्पर्शेन देवदत्ते कश्चिदपि स्वल्पोऽपि दोषो नोत्पादित इति चाण्डाले विद्यमानाऽप्यस्पृ-श्यता तत्राकिंचित्करी सत्यविद्यमानकल्पैव भवति। तस्मात्तीर्थादिस्थल-विशेषे चाण्डालानामस्पृश्यता नास्तीत्येव न सिध्यति किम्? इति।

तीर्थादिस्थले चाण्डालानामस्पृश्यता नास्तीत्येवं तव वचनमेमेपरीक्षायां विद्यार्थिनोऽनुत्तीर्णतया तदध्यापके महति शिक्षके (प्रोफेसरसा०।।) अज्ञताकल्पनमिवात्यन्तमसमञ्जसम् । कथं तत्पश्य—चाण्डालस्पृष्टेषु प्रथमं चैत्रमादिं कृत्वा चतुर्थमैत्रपर्यन्तेषु प्रत्येकमस्पृश्यतामुक्त्वा पञ्चमे नैवास्पृश्यतेत्युक्तं स्मृत्यर्थसारे । तत्र पञ्चमेऽस्पृश्यताभावात्त्वदुक्तरीत्या चतुर्थेऽपि सा न स्यात् । एवं चतुर्थे तदभावात्तृतीयेऽपि तदभावस्तृतीये तदभावाद्द्वितीयेऽपि तदभावो द्वितीये तदभावात्प्रथमेऽपि तदभावः प्रथमे तदभावाच्च चाण्डालेऽपि तदभावः संपद्येत । तथा सति बहु व्याकुलीं स्यात्। चाण्डालेऽस्पृश्यतां प्रतिपादयन्ति चाण्डालं पतितं चैवेत्यादीनि ऋषिवचनानि तथा चाण्डालस्पृष्टेषु प्रथमप्रभृति चतुर्थपर्यन्तं प्रत्येकमस्पृश्यतां प्रदर्शयन्स्मृत्यर्थसारश्चासंगतः स्यात् । तीर्थादिव्यतिरिक्तस्थले स्वयंगृहीतायाश्चाण्डालास्पृश्यताया विरुद्धेयं कल्पनेति विशेषस्थलेष्वेव चाण्डालेष्वस्पृश्यताभावं वर्णयतस्ते मनसि नाऽऽयातमिति दृश्यते । एवं च सकलस्मृतिविरुद्धं स्वोक्तिविरुद्धं चेदं चाण्डालेष्वस्पृश्यताभाववर्णनमिति बोध्यम् ।

किंचास्पृश्यताया अकारणिकाया असंभवेन तन्निदानभूतमशुचित्वं स्वसमवायिनि पुरुषे कर्मानधिकारमस्पृश्यतामथ च स्वसंस्पृष्टपुरुषान्तरेऽशुचित्वं चेत्येतत्त्रयमुत्पादयतीति पूर्वमुक्तमेव । तत्र चाण्डालस्पृष्टे देवदत्ते चाण्डालस्पर्शादुत्पन्नेनाशुचित्वेन स्वाश्रये देवदत्ते कर्मानधिकारोऽस्पृश्यता चेत्येतद्द्वयमपूर्वमागमयितव्यम् । अर्थाच्चाण्डाल-चाण्डालस्पृष्टदेवदत्तेत्युभयगताऽस्पृश्यता भिन्नभिन्नस्वरूपा भवति । चाण्डालगताऽस्पृश्यता ध्वंसाप्रतियोगिनी नाम नित्या भवति । चाण्डालस्पृष्टदेवदत्तगता तु ध्वंसप्रतियोगिनी नामानित्या वर्तते । तत्रानित्यायाश्चाण्डालस्पृष्ट उत्पत्स्यमानाया अस्पृश्यताया निषेधे क्रियमाणे तावता चाण्डालेष्वस्पृश्यता नास्तीत्येवमृष्यसंमतामत एवानुचितां कल्पनां कस्त्वदन्यः कर्तुं शक्नुयात् । तस्माच्चाण्डालगतास्पृश्यतायाः कदाऽपि क्वापि निषेधाभावेन नित्यमस्पृश्यास्ते भवन्ति । चाण्डालस्पृष्टगतास्पृश्यतायास्तु क्वचित्स्थले निषेधसत्त्वादनित्यास्पृश्यास्ते मोच्यन्ते लौकिकवच्छास्त्रेऽपि ।

चाण्डालस्पृष्टदेवदत्तगतास्पृश्यताया निषेधो नाम तादृशदेवदत्तस्पर्शो यज्ञदत्तस्य जायमानः स देवदत्तसंस्पृष्टे यज्ञदत्तेऽशुचित्वं नोत्पादयतीत्येवं

वचनात्प्रतीयमाने सत्यर्थाद्देवदत्तसंस्पृष्टे यज्ञदत्ते कर्मानधिकारोत्पादकत्वा-दित्रितयान्तर्गतमेकमपि यत्किंचिदपि च नास्तीति सिध्यति । परंतु चाण्डा-लस्पृष्टे देवदत्ते चाण्डालस्पर्शादुत्पन्नेनाशुचित्वेन संजातस्य कर्मानधिकार-रूपदोषस्य निर्हरणार्थं स्नानादिकं तेन कर्तव्यमेव भवति ।

अपि च 'यात्रादेवगृहेषु च' ( स्मृ० सारः ) इत्यत्र गृहशब्दं स्वतन्त्रं गृहीत्वा यस्मिन्कस्मिन्नपि गृहे स्पर्शदोषो नास्तीत्येवमर्थः किमिति न ग्रही-तव्य इत्येवं पृच्छ्यमाने तादृशार्थवर्णनस्य क्वापीतरत्र स्मृतिवचने संवादो नोपलभ्यतेऽतो देवस्य गृहमित्यर्थकः षष्ठीतत्पुरुषसिद्धो देवगृहमित्येवमेक एव शब्दो ग्रहीतव्यः । गृहीतश्च स तथा शङ्करकेन । तद्वद् 'देवयात्रा-विवाहेषु' इत्यत्रिस्मृतौ यात्राशब्देन किं देवयात्राऽथवा तीर्थयात्रोत जैत्र-यात्रा ( शत्रूवर स्वारी करणें ) ग्रहीतव्येत्याशङ्कायां जैत्रयात्रेत्यर्थग्रहणे स्मृतावितरत्र संवादोपलब्ध्या यात्राशब्देन देवयात्रेत्यर्थो न गृहीतः स्यात् । स पुनरत्राभीष्ट इति सूचनार्थमेवाऽऽहत्यात्र देवशब्दः प्रयुक्तः । तथा च स्वतन्त्रो देवशब्दो न यात्राशब्देन षष्ठीतत्पुरुषमापन्न इति त्वदुक्तिर्व्या-हता । यदि स्वतन्त्र एव देवशब्द इति दुराग्रहेणोच्यते तदा देवगृहेत्यत्रा-पि गृहशब्दः स्वतन्त्रः किं न ग्रहीष्यते । तस्मात्षष्ठीतत्पुरुषसिद्धो देवयात्रे-त्येतावानेक एव शब्दो ग्रहीतव्य इति सिध्यति ।

एतदनन्तरमग्रेऽपि शङ्करकमहाशयः स्वोक्तार्थनिर्वाहार्थं छलिकपाण्डित्यं प्रवर्तयितुमारब्धवान् । तत्र स हस्तिस्कन्धादिव सर्वात्मना निःसृत्य कण्ट-कादिचिते पङ्के कथं निपतित इत्येतद्विशदीकृत्य दर्शयित्वा लेख उप-संह्रियते । इदं हि तत्पाण्डित्यम्—

'स्पृष्टास्पृष्टिर्न विद्यते' इत्यस्य स्पर्शदोषो नास्तीत्येतावानेव हि तात्प-र्यभूतः सरलोऽर्थः । किंच व्याकरणशास्त्रनियमानुसारेण स्पृष्टास्पृष्टिरि-त्यस्य समासस्य सारल्येनार्थो भवितुं शक्नोतीति प्रतिज्ञाय विग्रहप्रदर्शन-पूर्वकं तदर्थो वर्णितः । स चेत्थम्—

'स्पृष्टस्य अस्पृष्टिः न विद्यते'

नाम यस्य ( अस्पृश्यस्य ) स्पर्शो जातः स्यात्तस्य अस्पृष्टिः— अस्पृश्यता नास्तीत्येवं षष्ठीतत्पुरुषाश्रयणेन सरलो व्याकरणपरिशुद्ध-श्चार्थो लगति । यस्येत्यस्य यं प्रतीत्यर्थः । नत्वस्पृश्यस्येत्यनेन समाना-

धिकरणं सत् । इत्येतादृशममुमर्थं विलिख्यानेन पण्डितम्मन्यकाण्डेन वादि-पक्षीयं नीतिविसम( वकील )पत्रं गृहीत्वा प्रतिवादिपक्षीयार्थसमर्थन-कर्त्रा यथाजातनयकोविदेन (कायदेपण्डित) इव स्वमतप्रच्युतिदोषः स्वगले बद्ध्वा गृहीतोऽस्ति । कथं तत्पश्यत—अहो वाचकमहाभागाः ! यूयमेवं तावज्जानीयात, यत्—'मरणनिमित्तकसूतकी मनुष्योऽस्पृश्यो ज्ञेयः ' इत्य-नुशासिते सति तस्मादनुशासनवाक्यात् ' सूतकिनो मनुजस्य स्पर्शो दोषापादक इति कृत्वा स स्पर्शः शुद्धैरस्माभिः परिवर्जनीयः, नाम केना-पि प्रकारेण तस्य स्पर्शो यथा न भवेत्तथा वर्तितव्यम् ' इत्येतावानर्थो मनस्यायाति । अर्थादनेनानुशासनेन सूतकिमनुजस्पर्शस्य प्रतिबन्धः कृतः । तथा ' सूतकिस्पृष्टमनुजस्य अस्पृश्यता नास्ति ' इत्यावेदिते ' सूतकिस्पृष्टस्य मनुजस्य स्पर्शो दोषापादको नेति कृत्वा तादृशस्य देव-दत्तस्य स्पर्शो यदि च शुद्धानामस्माकं कथंचिज्जातस्तर्हि जायतां, न तत्र कश्चिद्दोषः ' इत्ययमर्थः सारल्येन बुद्धिमारोहति । परंत्वस्माद्वाक्यात् ' सूतकिनो मनुजस्य स्पर्शे दोषो नास्ति ' इत्ययमर्थः स्वप्नेऽपि कस्यापि मनसि नाऽऽयातीति वाचकैरवश्यमिदं मनसि संनिधातव्यम् । अनेनोपदेशेन सूतकिस्पृष्टमनुजस्य स्पर्शोऽनुमोदित इति स्पष्टम् । एवं वस्तुस्थितौ सत्यां ' पूर्वोक्तेन केनचित्पाण्डितम्मन्यकाण्डेन लिखितात् ' स्पृष्टस्य अस्पृष्टिः न विद्यते ' इति वाक्यात् ' यस्य चाण्डालस्पर्शो जातस्तस्य स्पर्शे दोषो नास्ति ' इत्येवार्थः सारल्येन प्रतीतो भवति । प्रतिपादितश्च स्पष्टं तादृशार्थस्तेन महाराष्ट्रभाषायां स तथैव लोकप्रत्ययार्थमनूद्यते( ज्याला ( अस्पृश्याचा ) स्पर्श झाला असेल त्याला अस्पृश्यता ( अस्पृष्टिः ) नाहीं. ) परंतु ' चाण्डालस्पर्शे दोषो नास्ति ' ईदृगर्थस्तादृशात्पूर्वोक्ताद्वा-क्यान्न कथमपि निष्कष्टुं शक्यः । इदं कंचित्कालं समाहितेनोपमाङ्गेन विचारे क्रियमाणेऽनायासत एव केनाप्यवगन्तुं शक्येत । किंच देवालये चाण्डालस्पर्शे दोषोऽस्तीत्येव प्रत्युत दृढं भवति । यतस्तीर्थादिषु चाण्डाल-स्पृष्टेऽस्पृश्यता नास्तीत्येवाऽऽहृत्य तेनैवार्थवर्णनात् । तस्माच्चाण्डालं पतितं चैवेति वचनेन यश्चाण्डालस्पर्शे प्रतिबन्धः कृतः स देवालयादि-ष्वपि तथैवावशिष्यते । एवं च वादिजनसंमतस्मृतिवचनार्थानुसारेणापि साक्षाच्चाण्डालस्पर्शेऽनुज्ञामात्रमपि न कदाऽपि क्वापि शास्त्रेषूपलब्धुं शक्यम् । सत्येवं कल्पनासङ्कुचितमार्गेऽस्पृश्यमन्दिरप्रवेशात्मक आलेख्ये व्याकरण-कपोज्ज्वलवर्णपूरणे गाढमासक्तत्वाच्चाण्डालस्पर्शे शास्त्रानुज्ञामदर्शनरूपो यो

मूलभूतो देशस्तद्वैपरीत्येनाऽयमुज्ज्वलवर्णः प्रपूर्वत इत्यस्य मनस्यनायासेना-ऽनेन पण्डितमकाण्डेन तीर्थादौ चाण्डालस्पृष्टेऽस्पृश्यता नास्तीत्येवमात्मिका प्रति-वादिनोऽनुकूलाऽन्यादृश्येव संमतिः प्रदत्ताऽस्ति । सोऽयं स्वमतप्रच्युतिविशेषः । तथा चाऽऽनन्दाश्रममुद्रितधर्मतत्त्वनिर्णयाख्यनिबन्धान्तर्गतास्पृश्यास्पृश्यवि-चारविरोधित्वेन लेखनमुपक्रम्य अन्तराऽन्तराऽसमञ्जसमपि किंचिद्विलिख्य शेषे यथावस्थितस्यैवाऽऽनन्दाश्रममुद्रितस्य स्पृश्यास्पृश्यविचारस्य चर-णावभिवन्दितौ । नेदं वाचकैर्विस्मर्तव्यम् । यदत्र न्यूनाधिकमुच्चावचं मम भाषणं तत्क्षन्तव्यं विचारपरिशीलनशालिभिः । यतोऽस्मिँल्लेखे वादि-लेखस्यैव प्रयोजकत्वात् । धर्मतत्त्वजिज्ञासयेतोऽप्यधिकापेक्षायां धर्मतत्त्व-निर्णयतत्परिशिष्टयोरवलोकने तत्रभवतां भवतां मनीषा संजायतामिति सक-लविद्याप्रवर्तयितारं सच्चिदानन्दविग्रहं श्रीपरमेश्वरं चराचरप्रपञ्चगुरुं सं-प्रार्थ्य विरतो भवदनुज्ञामाकाङ्क्षते—

मारुलकरोपाह्वः शंकरशास्त्री–भारद्वाजः ।



# त्रिंशच्छ्लोकीस्थविषयाणामनुक्रमणिका ।

| विषयाः । | पृ० | प० |
|---|---|---|
| अप्रतिग्राह्यत्वमक्रेयत्वं च नास्तीति कथनम् ... ... | ,, | ८ |
| कीदृशस्य मृतस्य दाहः केनाग्निना कर्तव्य इति विचारः | १९० | २४ |
| दाहे चाण्डालादीनामग्नीन् वर्जयेदिति कथनम् .... | १९३ | १ |
| शूद्राहृतेनेन्धनादिनाऽपि दाहो न कर्तव्य इति कथनम् .... | ११ | ८ |
| दाहेतिकर्तव्यतायास्तदधिकारिणश्च कथनम् .... .... | ,, | १९ |
| उपनयनविधेरूर्ध्वं स्वगृह्योक्तप्रकारेण दाहादि सर्वं कर्तव्यमिति कथनम् ... | १९३ | २९ |
| शिशुबालकुमाराणां लक्षणम् | १९६ | ९ |
| शवविधौ मुख्याधिकारिनिरूपणम्... .... .... | १९७ | ५ |
| सपिण्डनोत्तरभावीनि सांवत्सरिकादीन्यविभक्तानामेकस्य विभक्तानां पृथगिति निरूपणम् .... .... | २०० | ८ |
| सपिण्डनान्तानां पार्थक्येन करणे निषेधकथनम् .... | २०१ | १ |
| सपिण्डनान्तानि विभक्तैरपि पृथङ्नैव कार्याणीति कथ० | २०२ | ५ |
| औरसपुत्राणां सर्वेषामधिकारित्वेऽपि साक्षात्कर्तृत्वमेकस्यैवेति कथनम् ... | ,, | १० |
| सपिण्डीकरणं साग्निकश्चेत्कर्तैकादशाहे कर्तव्यम् | २०३ | १७ |
| मुख्याधिकार्यभावे गौणाधिकारिकथनम् ... ... | ,, | २४ |
| क्षेत्रजाद्येकादशपुत्रलक्षणम् | २०५ | १ |
| वसिष्ठोक्तः पुत्रग्रहणप्रकारः | २०६ | १ |
| गर्भिणीविवाहोपपत्तिप्रतिपादनम् .... .... .... | २०७ | २७ |
| मेधातिथिप्रभृतीनां मते गर्भिणीविवाहसंस्कारो न भार्यापतिभावसंपादक इति कथ० | २१० | ६ |
| गर्भिणीविवाहस्य प्रयोजनकथनम् .... .... | ,, | २७ |
| कन्याकुमारीशब्दयोः प्रवृत्तिनिमित्तविषये तत्त्वप्रतिपादनम् ... ... | २१२ | ५ |
| पूर्णवर्षत्रयस्य पुत्रस्य समन्त्रकक्रियाकरणेऽधिकार इति कथनम्... ... .... | २१४ | ११ |
| गौणमुख्यपुत्राभावेऽधिकारिक्रमं दर्शयति .... .... | ,, | २९ |
| स्त्रीश्राद्धेऽधिकारिक्रमे विशेषकथनम् ... ... | २२० | १५ |
| पूर्वा मध्यमा उत्तराश्चेति त्रिप्रकारकक्रियाणां मध्ये केषामधिकारिणां किमावश्यकमिति प्रतिपादनम् .... | ,, | २१ |
| अन्त्यक्रियायां प्रथमेऽह्नि यो दद्यात्स एव दशाहं समापयेदिति कथनम् .... .... | २२३ | ६ |
| वयोवस्थाविशेषेण दाहखननयोर्नियतानियतकर्तव्यव्यवस्थां दर्शयति .... .... | २२४ | १४ |

समाप्तेयं त्रिस्थलीसेतुदर्पणवृत्तिकाय्याः विषयानुक्रमणिका ।



ॐ तत्सद्ब्रह्मणे नमः ।

# शंकरशास्त्रिविरचितटिप्पणीसंवलितश्रीमत्पदवाक्यप्रमाणज्ञमहामहोपाध्यायभट्टमाधवसुतभट्टविश्वनाथानुजभट्टरघुनाथनिर्मितविवृतिसहिता—

# त्रिंशच्छ्लोकी ।

* प्रणम्य रामं हेरम्बं पितृव्यं पितरौ तथा ।

---

नत्वा दक्षिणकेदारं स्मृत्वा गुरुपदाम्बुजम् ।
विवृतौ टिप्पणीं दत्ते शंकरो रङ्गनाथभूः ॥ १ ॥

* त्रिंशतं श्लोकान्व्याचिख्यासुर्भट्टरघुनाथनामा कश्चिद्विबुधः प्रेक्षावत्प्रवृत्तिसिद्धये विषयसंबन्धप्रयोजनाद्यनुबन्धानां दिग्दर्शनं कुर्वन्प्रारिप्सितनिर्विघ्नसमाप्तयेऽपि च ग्रन्थारम्भे शिष्टपरम्पराप्राप्तस्वेष्टदेवतादिप्रणामलक्षणं मङ्गलमाचरति—प्रणम्येति । प्रणामं नमस्कारं कृत्वा । ल्यबन्तमेतत् । समासेऽनञ्पूर्वेति क्त्वो ल्यबादेशः । प्रणामश्च स्वनिष्ठापकृष्टतानिरूपितयत्किंचिन्निष्ठोत्कृष्टताज्ञापनानुकूलः करशिरःसंयोगतदर्थकशब्दप्रयोगान्यतररूपो व्यापारः । राममिति । जानकीजानिं दाशरथिमित्यर्थः । नमस्कार्यत्वेन प्रथममुपादानादस्य कुलदेवतात्वं तत्र भक्त्यतिशयश्च ध्वन्यते । रमन्ते योगिनोऽस्मिन्निति रामः । 'रमु क्रीडायाम्' इति धातोः करणाधिकरणयोश्चेत्यधिकारस्थेन घापवादेन 'हलश्च' (पा० सू० ३ । ३ । १२१) इत्यनुशासनेन घञ्युपधावृद्धिः । अगस्तिसंहितायामपीयमेव व्युत्पत्तिर्दर्शिता—रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ इति । सर्वतोऽभ्यर्हिततत्वाद्ग्रन्थारम्भे सर्वेभ्यः पूर्वं कुलदेवतानमनमुचितं श्रेयस्करं चेति भावः । हेरम्बमिति । हे शंकरे रम्बते शब्दं करोत्यसौ हेरम्बः । अबि रबि शब्दे । इदित्वान्नुम् । पचाद्यच् । तत्पुरुषे कृतीति सप्तम्या अलुक् । 'हः शंकरे हरौ हंसे रणरोमाञ्चवाजिषु' इति नानार्थरत्नमाला । करिष्यमाणग्रन्थनिर्विघ्नपरिसमाप्त्यर्थं प्रतिबन्धकप्रत्यूहव्यूहध्वंसकं गणाधिपमित्यर्थः । कुलदेवताप्रणामानन्तरं विघ्नप्रतिबन्धद्वारा ग्रन्थपूर्त्यनुकूलत्वात्स्फूर्तिदातृत्वाद्देवतात्वेनाभ्यर्हितत्वाच्चापि पूर्वं पितृव्याद्यभिवादनाद्विनायकनमनम् । पितृव्यमिति । पितुर्भ्रातरम् । पितृव्यमातुलमातामहपितामहाः' (पा० सू० ४ । २ । ३६) इति निपातनात्पितृशब्दाद्भ्रातरि व्यति प्रत्यये साधुः । विघ्नराजप्रणामानन्तरमेककुटुम्बवर्तित्वात्पित्रपेक्षया ज्यायस्त्वाद्विद्वत्तमत्वाच्च प्राक्पितृवन्दनात्पितृव्यवन्दनमिति बोध्यम् । पितराविति । माता च पिता च पितरौ । 'पिता

रघुनाथः प्रकुरुते त्रिंशच्छ्लोकविवेचनम् ॥ १ ॥

मात्रा' ( पा०सू० १।२।७० ) इत्येकशेषे न तु सरूपाणामिति । तथा सति पितराविति द्विवचनानाऽस्याप्तेः । कथंचित्तदाक्षेऽपि पित्रपेक्षयाऽप्यधिकतराभ्यर्हितमातृवन्दनपरिजिहीर्षाया अत्यन्तासंभवाच्च । जननीं जनकं चेत्यर्थः । रघुनाथ इति । एतदभिख्यो भट्टोपपदधारी पण्डितः । न च 'आत्मनाम गुरोर्नाम' इति स्मृत्या स्वनामग्रहणनिषेधाभिधानात्कथं रघुनाथ इति स्वनामग्रहणं तथा च स्मृत्युल्लङ्घनदोषापत्तिरिति वाच्यम् । गोनर्दीयस्त्वाह, नागेशः कुरुते, भट्टोजिदीक्षितकृतिः, इत्यादिमहाभाष्यकाराद्युक्त्या स निषेधस्तूच्चारणे न तु लेखन इति बोध्यम् । एतेन स्वस्योहापोहकुशलत्वं स्वव्याख्यानस्य स्मृत्यनुसारित्वं च स्फोरितम् । केचित्तु यथा कूपं खनंस्तत्समये समुत्पतितं धूल्यादि तदुत्थपाथोघेन प्रक्षालयति तद्वद्ग्रन्थनिर्माणसमयीयस्वनामग्रहणजन्यो दोषो ग्रन्थनिर्माणद्वारा जायमानलोकोपकारजनितसुकृतमहिम्ना प्रहण्यत इत्याहुः । तन्न समीचीनम् । 'एष ह्येव साधु कर्म कारयति यमूर्ध्वमुन्निनीषते' इत्यादिश्रुत्या, लोकोपकाररूपसाधुकर्मणः स्वोत्कर्षजनकसुकृतप्रयोजकत्वेऽपि स्वनामग्रहणनिषेधकस्मृत्युल्लङ्घनोत्थदोषप्रहाणजनकसुकृतप्रयोजकत्वे मानाभावात् । अन्यथा प्रायश्चित्तविधिवैयर्थ्यापत्तेरिति । प्रकुरुत इति । निर्मिमीते रचयतीत्यर्थः । ननु 'प्रकुर्वे रघुनाथोऽहम्' इति स्वाभिप्रायस्य साक्षान्निर्देशे कर्तव्ये कथमात्मनि परोक्षवन्निर्देश इति चेदुच्यते—ग्रन्थप्रणेतॄणां संख्यावत्तमानां स्वाहंकारादिदोषविवर्जिषया स्वाभिप्राये परोक्षवन्निर्देशस्य ग्रन्थकर्तृसमयसिद्धत्वात् । लोकसमवेतस्मृत्यर्थावबोधजन्यसुकृतफलस्याऽऽत्मगामित्वात्प्रकुरुत इत्यात्मनेपदम् । अथ 'ज्ञातार्थं ज्ञातसंबन्धं श्रोतुं श्रोता प्रवर्तते । ग्रन्थादौ तेन वक्तव्यः संबन्धः सप्रयोजनः' इत्यभियुक्तानुभवसिद्धशास्त्रप्रेक्षावत्प्रवृत्तिसिद्धये ग्रन्थादाववश्यवक्तव्यमनुबन्धचतुष्टयं सूचयन्कर्तव्यमुद्दिशति—त्रिंशच्छ्लोकविवेचनमिति । विवेचनेन श्लोकार्थस्य स्मृत्यनुसारित्वं समर्थयन्स्वव्याख्यानस्यापि स्मृत्यनुसारित्वेन सप्रमाणता श्रद्धेयतां शिष्टसमादरणीयतां च सूचयति । उद्देशो नाम नाम्ना पदार्थसंकीर्तनम् । अनुबन्धचतुष्टयं तु—अधिकारिविषयसंबन्धप्रयोजनानि । तत्र स्वप्रतिपाद्यार्थबोद्धारमनवलम्ब्य शास्त्रप्रवृत्त्ययोगादादावधिकार्यनुबन्धापेक्षा । अधिकारिणश्च विषयबोधमन्तरेण प्रवृत्त्यसंभवाद्विषयस्य तदानन्तर्यम् । विषयस्य च शक्यप्रतिपाद्यत्वसिद्धये संबन्धस्य तदानन्तर्यम् । प्रयोजनस्य तु चरमत्वं लोकप्रसिद्धमिति । अत्राभिधेयं त्रिंशच्छ्लोकार्थो गर्भविपत्त्यादिनिमित्ताशौचम् । तन्निर्णयः प्रयोजनम् । तच्च गौणम् । विहिताचरणनिषेधपरिपालनाभ्यां सुखलब्धिरोगदुःखाभावानां मुख्यप्रयोजनत्वात् । संबन्धश्च ग्रन्थाभिधेययोः प्रतिपाद्यप्रतिपादकभावः । ग्रन्थप्रयोजनयोः प्रयोज्यप्रयोजकभावः । अभिधेयप्रयो-

निमित्तभेदभिन्नाशौचप्रतिपादने केनचित्क्रमेणावश्यं कर्तव्ये स्मृति-
ष्वेकरूपत्वाभावाद्वस्तुक्रममनुसृत्य गर्भपाताशौचमाह—

= षण्मासाभ्यन्तरेषु स्वपुरुषनिहिते गर्भमात्रे विनष्टे
माता तन्माससंख्यासमदिनमशुचिः स्नानशुद्धाः सपिण्डाः ।

अनयोर्विषयविषयिभावः । तज्जिज्ञासुरधिकारीति । अत्रायं समासक्रमः—श्लोक-
शब्दः श्लोकसमुदायपरः । त्रिंशदवयवा यस्येति त्रिंशदवयव इति बहुव्रीहिः ।
ततस्त्रिंशदवयवश्चासौ श्लोकश्च त्रिंशच्छ्लोक इति कर्मधारयः । शाकपार्थिवादित्वा-
न्मध्यमपदलोपः । तस्य विवेचनं विविच्य निरूपणमिति षष्ठीतत्पुरुष इति । न तु
त्रिंशतः श्लोकानां विवेचनमिति बहुपदकतत्पुरुषसमासान्तर्गतयोस्त्रिंशच्छ्लोकशब्द-
योरुत्तरपदनिमित्तकः तद्धितार्थोत्तरपदेत्यनेन द्विगुः । द्विगुसंज्ञाप्रयोजकपरिमाणिवाच-
कोत्तरपदस्य बहुपदकतत्पुरुषसमासप्रयोजकत्वस्य ' उत्तरपदेन परिमाणिना द्विगोः
सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम् ' इति वचनबलाल्लाभेऽपि तद्व्यतिरिक्तोत्तर-
पदस्य बहुपदकतत्पुरुषप्रयोजकत्वालाभेन तत्सूत्रस्येहाप्युदाहरणेऽप्रवृत्तेः । न च त्रिंश-
च्छ्लोका इति कर्मधारय इति वाच्यम् । ' दिक्संख्ये संज्ञायाम् ' ( पा० सू०
२ । १ । ५० ) इति नियमात् । त्रिंशच्छ्लोकशब्दस्यासंज्ञात्वात् । ननु त्रिंशतः
श्लोकानां समाहार इति समाहारे द्विगुरस्तु । तथा सति द्विगोरिति ङीपः प्रसङ्गात् ।
त्रिभुवनमित्यादाविव पात्रादित्वान्न ङीप्प्रसङ्ग इति चेत् ' यदि त्रिलोकी गणनापरा
स्यात्' इति नैषधीये महाकविप्रयोगस्यासांगत्यापत्तेः । तस्मात्पूर्वोक्त एव समासक्रमः
साधुरिति बोध्यम् ॥ १ ॥

= एवं श्रोतॄनभिमुखीकृत्य सुखबोधार्थं स्मार्तक्रममुल्लङ्घ्य लोकप्रसिद्धं वस्तुक्रममनु-
सृत्य क्रमेणाऽऽशौचं प्रतिपादयंस्तत्रेदानीं गर्भस्रावाद्याशौचं प्रथमवृत्तेनाऽऽह—
षण्मासाभ्यन्तरेति । षट् अवयवा येषां ते षडवयवाः । षडवयवाश्च ते मासाश्च
षण्मासाः । शाकपार्थिवादित्वान्मध्यमपदलोपः । षण्मासानामभ्यन्तराणि ( मध्यानि )
षण्मासाभ्यन्तराणि । इति विग्रहः । स्वस्याः पुरुषः स्वपुरुषः । स्वपुरुषेण निहितं
स्वपुरुषनिहितम् । तस्मिन्नित्यर्थः । इदं ' गर्भमात्रे ' इत्यस्य विशेषणम् । स्वभर्तृजनिते
इति यावत् । स्वपुरुषनिहित इत्यनेन परपुरुषनिहिते जारजन्यगर्भस्रावादावाशौचा-
भावो ध्वनितः, इत्याशौचसंग्रहविवृतौ भट्टाचार्यः । सर्वे गर्भा गर्भमात्रम् । तस्मिन् ।
मयूरव्यंसकादित्वात्समासः । त्रिचतुरादिमासकृतावस्थाभेदादेकस्यैव गर्भस्य बहुत्वं
बोध्यम् । ते च ते मासास्तन्मासाः । तन्मासानां संख्या तन्माससंख्या । तन्माससं-
ख्यया समानि तन्माससंख्यासमानि । तन्माससंख्यासमानि दिनानि यस्मिंस्तत्तन्मास-

**अन्त्ये मासद्वये तु त्रिदिनमशुचयोऽतः परं सूतिवत्स्या-**
**च्चातुर्वर्ण्यस्य तुल्यं भवति वयसि यत्प्रोच्यतेऽशौचमात्रम् ॥१॥**

गर्भग्रहणादारभ्य षष्ठमाससमाप्तिं यावत्परिणेत्रुत्पन्नेऽचेतने गर्भे पतिते मातैव गर्भपातमाससमसंख्यान्यहोरात्राण्यशुचिः स्यात् । चतुर्थे चत्वारि पञ्चमे पञ्च षष्ठे षडित्यर्थः । आद्यमासत्रये तु नेदं किंतु त्रिरात्रमविशेषेण । 'गर्भस्रुत्यां यथामासमचिरे तूत्तमे त्रयः' इति मरीचिस्मरणात् । अचिरं आद्यमासत्रये । उत्तमे ब्राह्मणे । नन्वचिरपदस्याऽऽद्यमासत्रयपरत्वे किं बीजमिति चेच्छृणु—

षण्मासाभ्यान्तरे यावद्गर्भस्रावो भवेद्यदा ।
तदा माससमैरत्वासां दिवसैः शुद्धिरिष्यते ।

इत्येतद्वाक्यविहितस्य षष्ठमासं यावन्माससमदिवसाशौचस्य वदन्तः-पातिस्रावविषयेण निरवकाशेन 'स्रावे मातुस्त्रिरात्रं स्यात्' इत्येतद्वाक्यविहितेन त्रिरात्राशौचेन बाधात्पातविषयत्वं यद्यपि प्रतीयते तथाऽपि दिवसैरिति बहुवचनानुरोधात्त्रिरात्राशौचस्यैवाऽऽद्यमासत्रयविषयत्वं युक्तम् । न च प्रथममासमात्रं द्वितीयमासमात्रं तदुभयमेव वा तस्य विषयो युक्तः । प्रथमे त्रिरात्रं द्वितीये द्विरात्रमित्यनौचित्यात्प्रथमपक्षासंभवात् । अचिरशब्दानुरोधाल्लिङ्गसमवायगौणस्रावशब्दानुरोधाच्च प्रथमविषयत्वावश्यंभावाद्द्वितीयानुपपत्तेः । तृतीयविषयत्वे विरोधाभावेन तत्परिहार-कारणाभावात्तृतीयानुपपत्तेः । 'गर्भमाससमा रात्रीः संस्रवे गर्भस्य त्र्यहं वा' इति गौतमोक्तपक्षद्वयस्य वचनान्तरानुरोधात्षण्मासमध्यविषयस्य व्यवस्थासंभवेऽव्यवस्थायोगात् । व्यवस्थापेक्षायामाचिरशब्दौचित्यन्यायानुगृहीतेन 'समं स्यादश्रुतत्वात्' ( पू० मी० १०।३।५३ ) इति न्यायेनाऽऽद्योत्तममासत्रयविषयत्वेन व्यवस्थाया युक्तत्वाच्च । स्वपुरुष-निहितग्रहणमुत्तरार्थम् । व्यभिचारजगर्भस्य पूर्णप्रसवेऽपि पितुः संनिध्य-

---

संख्यासमदिनम् । इदमशुचिभवनक्रियाविशेषणम् । स्नानेन शुद्धाः स्नानशुद्धाः समानः पिण्डो ( मूलपुरुषदेहो ) येषां ते सपिण्डाः । ते च सप्तपुरुषावसानाः द्वाववयवौ यस्य तद्द्वयम् । मासयोर्द्वयं मासद्वयम् । तस्मिन् । सूताविव सूतिवत् सप्तम्यन्तादिवार्थे वतिः । चत्वारो वर्णाश्चातुर्वर्ण्यम् । 'चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्' इति स्वार्थे ष्यञ् । इमे द्वे तद्धितवृत्ती ।

संनिधिव्यवस्थितत्रिरात्रैकरात्रसत्त्वेन सपिण्डानां च तथैवैकाहस्नानसत्त्वेन तदपूर्णनिर्गमे तेषामेवाऽऽशौचाभावस्यौचित्यापा(या)तत्वात् । मातुस्तु तत्रापीदमेव ! विशेषानुक्तेः । गर्भमात्र इत्यनुवादः । वक्ष्यदवस्थाया नित्यप्राप्तत्वात् ।

## स्नानशुद्धाः सपिण्डाः ।

सपिण्डाः पित्राद्याः स्नानशुद्धास्तत्कालावच्छिन्नाशौचिनः । पूर्वोक्ते विषये पञ्चमषष्ठौ वर्जयित्वा । तथा च स्मरणम्—'सद्यः शौचं सपिण्डानां गर्भस्य पतने सति ' इति । अशुचित्वाभावे शौचविधानानुपपत्तेर्निष्कारणशौचासंभवाच्च सद्यःशौचं स्नानमात्राच्छुद्धिरित्यर्थः । यत्तु मरीचिवचनम्—'स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम्' इति । तत्सपिण्डानां प्रकृतत्रिरात्राशौचाभावानुवादकं नतु सर्वथाऽशौचनिषेधकम् । यदपि 'गर्भस्रावे मासतुल्या रात्रयः स्त्रीणां स्नानमात्रमेव पुरुषस्य' इति । तदपि मात्राशौचविधायकं सत्पूर्ववाक्यप्राप्तमेव पितुः स्नानमनुवदति नत्वितरेषां स्नानं निवर्तयति । वाक्यभेदप्रसङ्गात् । यद्यप्येतद्वाक्यपर्यालोचनया स्नानमाससमाशौचयोरेकविषयत्वं प्रतीयते तथाऽपि वाक्यान्तरबलाद्भिन्नविषयत्वं कल्प्यमानं न दोषमावहति ।

## अन्त्ये मासद्वये तु त्रिदिनमशुचयः ।

षट्सु मासेष्वन्त्ये पञ्चमषष्ठाख्ये मासद्वये गर्भपाते सपिण्डास्त्रिदिनमाशौचिनः स्युः । तथा च मरीचिः ' * पाते मातुर्यथामासं सपिण्डानां दिनत्रयम् ' इति ।

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं तु नारीणां स्रवः प्रसव उच्यते ॥ इति ।

( ' तिस्रो गर्भविपदस्ताः सर्वाः स्रंसनशब्देनोच्यन्ते ' इति गौतमीयं च ) ।

## अतः परं सूतिवत्स्यात् ।

अतः—अन्त्यमासद्वयादूर्ध्वं सप्तममासप्रभृति गर्भनिर्गमे सूत्यर्हं प्रसवनिमित्तं दशाहादि वर्णभेदेन स्यादिति वक्ष्यमाणमेव नेराकाङ्क्ष्यार्थ-

* पात इति । अत्र पातशब्दः पाताधिकरणीभूतपञ्चमषष्ठमासोपलक्षणपरः । ' पातः पञ्चमषष्ठयोः ' इति धर्मशास्त्रीयपरिभाषणादित्यर्थः ।

युक्तम् । अर्हे मतिः । तथा च षण्मासाभ्यन्तर इत्येतदनन्तरम् ‘अत ऊर्ध्वं स्वजात्युक्तं तासामाशौचमिष्यते’ इति स्मरणम् । अत्र तासां ग्रहणमुपलक्षणम् । अत ऊर्ध्वं प्रसूतिः स्यादिति वाक्यात्सप्तमप्रभृति प्राप्तफलाङ्गस्य जीवतो निर्गमदर्शनात्तत्र च लोके प्रसवव्यवहारात्सप्तमप्रभृति गर्भनिर्गमस्य प्रसवत्वाच्च सप्तमादिप्रसवे च सर्वेषां दशाहाद्याशौचस्य—

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम् ॥ इत्यादिषूक्तत्वात् ।

* चातुर्वर्ण्यस्य तुल्यं भवति + वयसि प्रत्योच्यतेऽशौचमात्रम् ।

गर्भग्रहणात्प्रभृत्यत्र वयो, न जन्मादि, गर्भाष्टमादिवत् । तथा च गर्भग्रहणमासादारभ्य प्रसवपर्यन्तं प्रसवमारभ्योपनयनपर्यन्तं चावस्था-विशेषपुरस्कारेण × यदाशौचमभिहितं वक्ष्यमाणं च तच्चतुर्णां वर्णानां

---

* चातुर्वर्ण्यस्य तुल्यमिति । गर्भग्रहणमारभ्य प्रसवपर्यन्तं यदुक्तमाशौचं तच्चतुर्वर्णसाधारणं भवति । यथा पिण्डोदकदानविधिः सर्ववर्णसाधारणः । यथा वा समानोदकाशौचविधिः संनिपाताशौचविधिश्च । यद्वच्च विदेशस्थाशौचविधिः, यथा वा गुर्वाद्याशौचविधिः साधारणः । तत्तद्विधौ वर्णविशेषानुपादानात् । तथा वयोवस्थानिमित्तमप्याशौचं सर्ववर्णसाधारणं भवितुमर्हति । न कश्चन तत्र वर्णकृतो विशेष इत्यर्थः ।

+न केवलमिदमेव तुल्यम् । अपि तु वयोवस्थाविशेषोपरमनिमित्तमपि चातुर्वर्ण्यसाधारणमित्याह—वयसीति । वयोविशेषोपरमनिमित्तमशौचमात्रं वर्णविशेषोपादानराहित्येन विहितमाशौचं तदपि चातुर्वर्ण्यस्य तुल्यं भवतीति युक्तम् ।

× आशौचमिति । आशौचं नाम कालस्नानाद्यपनोद्योऽस्पृश्यत्वकर्मानधिकारित्वप्रयोजकः कश्चन पुरुषनिष्ठोऽतिशयविशेषः । तन्निमित्तत्वं च जननमरणयोः शास्त्रेषूक्तम् । तच्च जननमरणमुत्पन्नज्ञातमेव निमित्तम् । निर्दशं ज्ञातिमरणं श्रुत्वेत्यादिलिङ्गदर्शनात् । तथा—विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ इत्यादिवाक्यारम्भसामर्थ्याच्च । उत्पत्तिमात्रापेक्षत्वे ह्याशौचस्य दशाहाद्याशौचकालनियमास्तत्प्रभृतिका एवेति अनिर्दशज्ञातिमरणश्रवणे दशरात्रशेषमेवाऽऽशौचमर्थात्सिध्यतीति ‘ यच्छेषं दशरात्रस्य ’ इत्यनारम्भणीयं स्यात् । तस्माज्ज्ञातमेव जननं मरणं च निमित्तमिति बोध्यम् ।

तुल्यं भवति । नोपनीतसपिण्डमरणप्रसवाशौचवद्वर्णभेदाद्भिन्नमित्यर्थः । तद्विधायकवचनेषु वर्णविशेषानुपादानात् । मातामहाचार्याद्याशौचवत् । आचार्याद्याशौचातिदेशस्त्वेवमपि सकलमित्यनेन वक्ष्यमाणत्वात् । 'तुल्यं भवति सर्वेषामतिक्रान्ते तथैव च' इति व्याघ्रपादवचनाच्च । अत्रापि पूर्वोक्तमेव वयः । यद्वा न्यायप्राप्तानुवादत्वेन वयोतिक्रान्तग्रहणस्यानुपात्तवर्णविशेषसर्वाशौचोपलक्षणत्वादुक्ताशौचसाधारण्यलाभः । आचार्याद्याशौचसाधारण्यसिद्ध्यर्थं तस्याऽऽवश्यकत्वात् । मूले तु तदेव वयः । एवमाञ्जस्येन व्याख्यानसंभवे विभज्य व्याख्यानमनुषङ्गाध्याहारापेक्षत्वादव्याख्यानम् ॥ १ ॥

+ जन्माशौचान्तराले यदि शिशुनशनं नालवृद्ध्यूर्ध्वकाले
निष्प्राणो निष्पतेद्वा जननजनितमाशौचमस्त्येव कृत्स्नम् ।
प्राङ्नालच्छेदनाच्चेन्निधनमुपगतस्त्र्यहेणैव शुद्धिः
सर्वेषां सूतिकायास्त्विह च सकलकं प्रेतशुद्धिस्तु सद्यः॥ २ ॥

जन्माशौचान्तराले जनननिमित्ताशौचपरिच्छेदकाहोरात्रमध्ये नालवृद्ध्यूर्ध्वकाले नालच्छेदनानन्तरं जीवत उत्पन्नस्य शिशोर्नशनमुपरमो निष्प्राणो मृत एव वा निष्पतेदुत्पद्येत तदा विषयद्वयेऽपि मातुः पित्रादीनां च जननजनितं जन्मनिमित्तमाशौचं कृत्स्नं दशाहाद्येव×ास्ति । न तु वक्ष्यमाणेन शावाशौचेन निवर्तत इत्यर्थः। तथा च हारीतः—जातमृते मृतजाते वा दशाहं सपिण्डानामिति । जातमृत इति नालच्छे-

+ इदानीं शिशुनशनादौ पूर्णप्रसवनिमित्ताशौचं द्वितीयवृत्तेनाऽऽह—जन्माशौचेति । जन्मनः आशौचं जन्माशौचम् । जन्माशौचस्य अन्तरालं जन्माशौचान्तरालम् । तस्मिन् । शिशोः नशनं शिशुनशनम् । नालस्य वृद्धिः नालवृद्धिः । वृद्धिश्छेदनम् । नालवृद्धेः ऊर्ध्वः नालवृद्ध्यूर्ध्वः । नालवृद्ध्यूर्ध्वश्चासौ कालश्च नालवृद्ध्यूर्ध्वकालः । तस्मिन् । निर्गताः प्राणा यस्य, अथवा प्राणेभ्यो निर्गतः निष्प्राणः । जननेन जनितं जननजनितम् । त्रयाणां अह्नां समाहारः त्र्यहः । तेन । राजाहःसखिभ्यष्टच् । अह्नष्टखोरेवेति नियमाट्टिलोपः । न संख्यादेरित्यह्नादेशनिषेधः । रात्राह्नाहाः इति पुंस्त्वम् । समानेऽहनि सद्यः । सद्यःपरुदिति निपातनात्समानस्य सभावो द्यश्चाहनि ।

× द्येवास्तीति । न शावाशौचेन जननाशौचनिवृत्तिः । किंतु जन्माशौचेनैव शिशुप-

दादूर्ध्वम् ।

यावन्न च्छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥

इति जैमिनिवचनात् । अस्य वचनस्यैतत्प्रकरणपाठान्मृतपूर्णशब्दाबध्याहृत्य योजना ।

प्राङ्नाभिच्छेदनाचेत् ।

जीवन्नुत्पन्नो नाभिच्छेदनान्नालच्छेदात्प्राङ्निधनमुपगतस्तर्हि सर्वेषां पित्रादीनां त्र्यहेणैव शुद्धिर्जननाशौचस्य । सूतिकाया मातुस्त्विह चानन्तरोक्तेऽपि विषये सकलं दशाहाद्येव जननाशौचं पूर्वविषयद्वये त्वस्त्येवेत्यर्थः । तथा च बृहन्मनुः—

जीवञ्जातो यदि ततो मृतः सूतक एव तु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥ इति ।

ततो जननान्तरमेव नालच्छेदादर्वागित्यर्थः ।

प्रेतशुद्धिस्तु सद्यः ।

प्रेतशब्देन तन्निमित्तमाशौचं लक्ष्यते । तस्य शुद्धिर्निवृत्तिः सद्यः + स्नानमात्रेणैव त्रिष्वपि विषयेष्वित्यर्थः । तथा च शङ्खः—प्राङ्नामकरणात्सद्यः शौचमिति । सद्यस्त्वं च स्नानकालावच्छिन्नत्वमेव । पूर्वोक्तयुक्तेर्विज्ञानेश्वरेण तथा व्याख्यानाच्च । यत्तु—दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः । शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ।

इति बृहन्मनुवचनं तत्पूर्णाशौचनिषेधकम् । प्राङ्नामकरणादिति च जन्माशौचकालोपलक्षणम् । आशौचान्ते नामकरणविधानात् । अत एव विष्णुवचनम्—

अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति ।
सद्य एव विशुद्धिः स्यान्न प्रेतं नोदकक्रिया ॥ इति ।

एतच्चानन्तरं वक्ष्यमाणमपि जननजनितत्वविशेषणव्यावर्त्यप्रदर्शनार्थमुक्तम् ॥ २ ॥

---

रमनिमित्ताशौचानिवृत्तिरिति भावः । तदुक्तं बृहन्मनुना—दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः । शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥ इति ।

+ स्नानेति । अकारणिकायाः शुद्धेरसंभवात्सद्यःपदं स्नानपरमिति बोध्यम् ।

स्नानं * प्राङ्नामतोऽर्वाग्दशनजननतोऽहः परेतेऽग्निदग्धेऽ-
दग्धे त्वत्रापि सद्यस्तदुपरि दिनमा च्चूडतश्चौलशून्ये ।
सच्चौले तु त्रिरात्रं त्रिदिनमितरथाऽप्या व्रताज्जात्यशौचं
मातापित्रोस्तु पुत्रे त्रिदिनमदशने संनिधौ नष्टचेष्टे ॥ ३ ॥

परेत इति सर्वत्र संबध्यते । गतार्थम् ।

अर्वाग्दशनजननतो० सद्य इति ।

प्राक्त्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्यान्नाम्नि चापि कृते सति ॥

इति मनुवचने साहचर्यादुदकक्रियोपलक्षितस्य दाहस्यापि नामकरणोत्तरकालं विकल्पितत्वान्नामकरणादूर्ध्वं दन्तोत्पत्तेस्तत्कालाद्दन्तजन्म सप्तमे मासीत्युपनिषद्दर्शनात्सप्तममासलक्षणादर्वाक्परेते मृतेऽग्निदग्धे + सत्यहः, अहोरात्रमाशौचम् । अदग्धे तु, न केवलं पूर्वोक्त एव विषयेऽत्रापि विषये सद्यः स्नानमात्रं भवति । तथा च यमः—

अदन्तजाते तनये शिशौ गर्भच्युते तथा ।
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम् ॥ इति ।

याज्ञवल्क्योऽपि—आदन्तजन्मनः सद्य इति । अनयोश्च कल्पयोर्व्यवस्थापेक्षायाम्—अदन्तजाते बाले प्रेते सद्य एव नास्याग्निसंस्कारो नोदकक्रियेति विष्णुवचनेऽग्निसंस्कारनिषेधसाहचर्यात्सद्यःशौचस्यादाहविषयत्व इतरस्य दाहविषयत्वं परिशेषादवगम्यते ।

---

* एवं कालविशेषेण दशाहाद्यशौचापवादमुक्त्वा वयोवस्थाविशेषेण तदपवादं तृतीयवृत्तेनाऽऽह—स्नानं प्राङिति । दशनानां जननं दशनजननम् । तस्मात् । आद्यादित्वात्तसिः । त्रयाणां दिनानां समाहारस्त्रिदिनम् । अजाता दशना यस्य अदशनः । तस्मिन् । सत्—विद्यमानं चौलं चूडाकर्म यस्य सच्चौलः । तस्मिन् । जातेरशौचं जात्यशौचम् । शुचेर्भावः शौचम् । 'इगन्ताच्च लघुपूर्वात्' इत्यण् । आदिवृद्धिः । ततो नञ्समासः । यदा तु शुचिशब्देन नञ्समासं कृत्वा ततो भावप्रत्ययः क्रियते तदा 'नञः शुचीश्वर' इत्यादिनोत्तरपदस्य नित्या वृद्धिः, पूर्वपदस्य तु विकल्पेनेति पक्षे आशौचमिति भवति । आशौचं नाम स्पृश्यत्वाभोज्यान्नत्वकर्मानधिकारित्वप्रयोजकत्वे सति पिण्डोदकदानादिविधेः प्रयोजकः कालस्नानाद्यपनोद्यः पुरुषगतः कश्चन दोषविशेषः । तिसृणां रात्रीणां समाहारस्त्रिरात्रम् । 'अहः सर्वैकदेश' इति समासान्तोऽच् । 'संख्यापूर्वं रात्रं क्लीबम्' इति नपुंसकत्वम् ।

+ आशौचप्रकरणे सर्वत्राहर्ग्रहणमहोरात्रोपलक्षणं वेदितव्यम् ।

तदुपरि दिनमा त्र्यब्दतश्चौलशून्ये ।

दन्तजननोपरि आ त्र्यब्दतः, त्रिवर्षो यावज्जायते तावत्पर्यन्तं तृतीयवर्षसमाप्तिं यावदित्यर्थः । अभिविधावाङ् । तृतीयवर्षमभिव्याप्येत्यर्थः । चौलशून्ये परेते दग्धे च दिनमहोरात्रमाशौचम् । तथा च विष्णुः—दन्तजातेऽप्यकृतचूडे त्वहोरात्रेण शुद्धिरिति । इदं च दन्तजननोर्ध्वं दाहेऽप्यहोरात्राशौचाभिधानं मिताक्षरानुसारेण । मम तु प्रतिभाति—ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रमिति । वसिष्ठोक्तत्रिरात्रस्य विष्णूक्तैकरात्रस्य च व्यवस्थापेक्षयाम्—

यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः ।
दाहयित्वा तथाऽप्येनमाशौचं त्र्यहमाचरेत् ॥

इत्यङ्गिरोवचनाद्दाहे त्र्यहोऽदाहे त्वहरिति । यत्तु—वर्षत्रयादूर्ध्वं कुलधर्मापेक्षया ऽकृतचूडो यस्तद्विषयत्वमङ्गिरोवचनस्य विज्ञानयोगिनोक्तं तदयुक्तम् । जातदन्तपदवैयर्थ्यापत्तेः । नहि पूर्णत्रिवर्षोऽप्यजातदन्तः संभाव्यते । इदमेवाभिप्रेत्याशौचदशकादाविदमेवोक्तम् । यत्तु—आचूडान्नैशिकी स्मृतेत्यादौ चूडाग्रहणस्य कालोपलक्षणत्वात्तृतीयवर्षस्य च तत्कालत्वाद्दन्तजननकालात्सप्तममासादूर्ध्वं वर्षद्वयाभ्यन्तर एकाह इति प्राच्यैरुक्तं तदयुक्तम् । कालोपलक्षणत्वासंभवस्य वक्ष्यमाणत्वात् । तत्सत्त्वेऽपि यद्यपि शंयिवडान्तन्यायात्तृतीयवर्षोपक्रमस्यैवावधित्वं प्राप्नोति, तथाऽपि—विभे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकीत्यङ्गिरोवचनबलात्तदन्तस्यैवावधित्वं युक्तम् । यत्तु वसिष्ठवाक्ये ऊनद्विवर्षग्रहणं तत्तस्य निखननपक्षस्य मुख्यत्वाद्दाहाभावेन त्रिरात्राप्राप्तौ तद्विधिद्वारा तस्यापि पाक्षिकदाहविधिद्योतनार्थम् । अन्यथा …ऽप्यानर्थक्यात् । यदप्यूनद्विवार्षिके बाले प्रेतत्वमनुगच्छतीत्यादियमवचन एकाहविधौ तद्ग्रहणं तदपि तस्य निखननमुख्यत्वद्योतनार्थं तदितरस्य च दाहमुख्यत्वद्योतनार्थकमिति दिक् ।

सच्चौले तु = त्रिरात्रम् ।

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥ इति ।
ततः संवत्सरे पूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्तव्यं स्मृतिदर्शनात् ।

= रात्रेति । इह प्रकरणे रात्रिपदमहर्ग्रहणवदहोरात्रोपलक्षणं बोध्यम् ।

इति च मनुयमवचनाभ्यां प्रथमाब्दादावपि चूडाकरणस्योक्तत्वाद्दन्तजननादूर्ध्वं सचौले कृतचौले परेते वर्षत्रयमध्येऽपि त्रिरात्रम् । तथा च मनुः—नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता ।

निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥ इति ।

चूडाकरणं तु नामकर्मदन्तजननवत्स कालोपलक्षणम् । तस्यानियतकालत्वेन कालविशेषस्योपलक्षयितुमशक्यत्वात् । न च —

नामधेयं दशम्यां तु द्वादश्यां वाऽपि कारयेत् ।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ।

इति मनुवचनान्नामकरणमप्यनियतकालमिति वाच्यम् । तस्याऽऽशौचान्तपरत्वात् । तथा हि-दशम्यां रात्रावतीतायां ब्राह्मणो द्वादश्यामतीतायां क्षत्रियो नामधेयं कुर्यात् । इदं चोपलक्षणम् । वैश्यशूद्रौ षोडशे एकत्रिंशे च । एवं सत्यनेन प्रकारेण स्वस्वाशौचान्ते नाम कुर्यादित्युक्तं भवति । पुण्य इत्यादिस्त्वनुकल्प इति तस्यार्थः । यद्वा ब्राह्मणं प्रत्येवैकादशे दिने व्यतीपातादिमहादोषसंभवे द्वादशमनुकल्पत्वेन विधीयते । महादोषसत्त्वे मुख्ये कालेऽपि शुभकर्माननुष्ठानमुक्तं गर्गेण —

व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि ।
श्राद्धे कुर्याच्छुभं नैव प्राप्तकालेऽपि मानवः ॥ इति ।

अन्यत्रापि—अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाऽऽचरेदिति । यत्तु तिथिपरत्वेन सर्वज्ञेनास्य व्याख्यानं कृतं तत्सकलगृह्यविरोधादज्ञव्याख्यानमेव । यदपि मेधातिथिना रात्रिविशेषणत्वात्स्त्रीलिङ्गौ दशमीद्वादशीशब्दावहोरात्रपरौ कृत्वा वचनबलादाशौचमध्येऽपि जातकर्मवन्नामकर्माप्याद्यपक्षे कर्तव्यम् । अध्याहारोपलक्षणयोः प्रमाणाभावादित्युक्तम् । तदप्ययुक्तम् । प्रमाणाभावासिद्धेः । अशौचव्यपगमे नामधेयम्, आशौचे च व्यतिक्रान्ते नामकर्म विधीयत इत्यादि विष्णुशङ्खवचनसद्भावात् । दशम्यामुत्थाप्य पिता नाम कुर्यादिति गृह्येषु च सूतिकोत्थानानन्तरकालविधानात् । यच्च रुद्रधरेण सत्यपि चूडाकरणस्य प्रथमवर्षादिकालत्वे विभे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकीत्यादिवाक्यैस्तृतीयंवर्षात्पूर्वमहोरात्राशौचविधानात्तदेकवाक्यतया तृतीयवर्षमेवाऽऽचूडान्नैशिकी स्मृतेत्यादिवचनेष्वपि गृह्यत इत्युक्तम् । तदप्यूनद्विवर्ष इत्यादिवसिष्ठादिवाक्यैस्तत्रैव त्रिरात्रस्यापि विधानादयुक्तम् । तृतीयाब्द

उत्सर्गतश्चूडाकालः प्रथमाब्दादिस्तु कुलधर्मापेक्षयाऽपवाद इति हारलतादिवचनं तु चूडाकर्म द्विजातीनामित्यत्र प्रथमतृतीययोस्तुल्यवन्निर्देशाच्चूडा कार्या यथाकुलमित्यादिषु च कुलधर्मप्राप्तत्वेनैव सर्वेषां निर्देशाद्यत्किंचिदेव । तस्मान्नामकर्मदन्तजननयोरेव कालोपलक्षणत्वं नतु चूडाकरणस्य । एवमुपनयनस्यापि । वचनबलात्तु त्रिवर्षादूर्ध्वमकृतचूडस्यापि त्र्यह इति । यस्तु वाचस्पतिना यमवचने संवत्सरे पूर्णे इत्येव द्वितीयलाभात्तदानर्थक्यपरिहारार्थं तत्र पूर्ण इत्यनुषज्य तृतीयपदानर्थक्यपरिहारार्थं तस्य तृतीयवर्षचरमावयवपरत्वं पूर्वस्य तु तदाद्यावयवपरत्वमिति व्याख्याक्लेशः कृतः सोऽकारप्रश्लेषाज्ञाननिबन्धनः ।

त्रिदिनमितरथाऽप्या व्रतात् ।

तृतीयवर्षादूर्ध्वमा व्रतादुपनयनपर्यन्तमितरथाऽपि कुलधर्मापेक्षयाऽकृतचौलेऽपि परेते त्रिदिनम् । कृतचौले तु यावदुपनयनं सर्वदा त्रिरात्रमुक्तमेव । तथा चाङ्गिराः—

यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः ।
दाहयित्वा तथाऽप्येनमाशौचं त्र्यहमाचरेत् ॥ इति ।

इदं च वचनं विप्रे न्यूने त्रिवर्षे तु मृते शुद्धिस्तु नैशिकीति तेनैवाभिहितत्वादपूर्णत्रिवर्षाकृतचूडविषयमिति मिताक्षरोक्तेऽस्मिन्नर्थे भवति मूलम् । द्वितीये पक्षेऽपीदमेव मूलम् । न च तस्मिन्पक्ष एतस्य वाक्यस्य त्रिवर्षात्रिवर्षोभयविषयत्वेऽत्रिवर्षे व्यवस्थाविषयसमर्पकत्वाद्दाहयित्वेति विवक्षितं त्रिवर्षे तु दाहस्य नित्यत्वादविवक्षितमिति वैरूप्यं स्यादिति वाच्यम् । आत्रिवर्षविषयादेवास्माद्दण्डापूपन्यायेनास्याप्यर्थस्य सिद्धेः । आ व्रताज्जा+त्यशौचम् । आ व्रतादिति पूर्वावधिसमर्पकत्वेनात्रापि संबध्यते । मध्यगतत्वेन विशेषाग्रहणादपेक्षितत्वाच्च । उपनयनात्प्रभृति उपरमे ब्राह्मणत्वादिजातिनिमित्तं दशाहादि आशौचम् । तत्सपिण्डानां भवतीति वक्ष्यमाणमेव नैराकाङ्क्ष्यार्थमुक्तम् । तथा च याज्ञवल्क्यः–'त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम्' इति । दशरात्रमिति जात्यशौचोपलक्षणम् । अशौचमित्यत्र शौचशब्दस्य नञ्समासः । तेन नोभयपदवृद्धिः । अर्वागित्याद्युक्तस्योच्चावचाशौचस्य मातापित्रोरपि प्रसक्तावाह—

---

+ एवं वयोवस्थाविशेषेणाऽऽशौचमभिधाय जात्यशौचमाह—जात्यशौचमिति । उपनयनान्तरं जातिपरत्वेन विहितमाशौचं दशाहादिकं भवतीत्यर्थः ।

## मातापित्रोस्तु पुत्रे त्रिदिनमदशने ।

नाम्नः प्रागुक्तस्याशौचस्य नापवादः । किंत्वदन्तजातायुक्तस्येति प्रदर्शनार्थमदशनग्रहणं नतु सदशनव्यावृत्त्यर्थम् । नामकरणादूर्ध्वं यावदुपनयनं पुत्रेऽपत्ये परेते वयोवस्थाविशेषानाश्रयणेन मातापित्रोस्त्रिदिनमाशौचम् । पुत्रग्रहणमुपलक्षणम् । बालानामजातदन्तानां त्रिरात्रेण शुद्धिरिति काश्यपवचनात् । बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहमिति च सामान्येन स्मरणात् ।

प्रत्तामत्तासु योषित्सु संस्कृतासंस्कृतासु च ।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ॥

इति शङ्खवचनेऽपत्येऽपि त्रिरात्रविधानाच्च । इदं च स्त्र्यपत्येऽपि त्रिरात्रम् । दन्तजननादुपर्यजातदन्तासु पित्रोरेकरात्रमिति कार्ष्णाजिनिवचनादिति माधवीये विशेषः ।

### +संनिधौ नष्टचेष्टे ।

संनिधिशब्देनात्र यत्रस्थेनाशौचकालमध्ये श्रूयते स उच्यते । तादृशसंनिधौ नष्टचेष्टे मृते पूर्वोक्तं जात्याशौचव्यतिरिक्तं सकलं मरणाशौचं भवति । तत्र प्रथमदिनश्रवणे पूर्णम् । तद्भिन्नाशौचदिनमध्यश्रवणे तच्छेषः । अतिक्रान्ते त्वाशौचकाले श्रवणे जात्याशौचवन्नास्तीत्यर्थः । तथा च व्याघ्रपादः—=उपनीते तु विषमं तस्मिन्नेवातिकालजमिति । वक्ष्यमाणदशाहात्प्रभृतीति विशेषणेनाऽऽचा[र्यमातामहादि]वदनुपनीतमरणेऽप्यतिक्रान्ताशौचनिषेधे सिद्धेऽपि वक्ष्यमाणेनाद्विवर्षविषयमातापितृ[ सोदराणां दशाह ]पक्षेऽप्यनुपनीतोपरमविभिन्नत्वादतिक्रान्ताशौचं नास्तीति प्रदर्शनार्थमिदमुक्तम् ॥ ३ ॥

---

+ एतत्सर्वम् ‘ अर्वाग्दशनजननतोऽहः ’ इत्यादिना पूर्वोक्तं संनिधौ शिशुमरणे वेदितव्यमित्याह–संनिधाविति । नष्टा चेष्टा यस्येति नष्टचेष्टे मृते सतीति यावत् । एतेन यत्रस्थोऽशौचकालव्यपगमानन्तरं शृणोति तादृशेऽसंनिधौ शिशुमरणे जात्याशौचवदेतदतिक्रान्ताशौचं न भवतीति सूच्यते ।

= उपनीते त्विति । तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च । इति, अस्य पूर्वार्धं बोध्यम् । अस्यार्थः—वयसि त्रिवर्षादिरूपे यदाशौचमा दन्तजन्मनः सद्य इत्यादिवाक्यविहितं तत्सर्वेषां ब्राह्मणादिवर्णानां तुल्यमविशिष्टम् । उपनीते तु कृतोपनयने पुनरुपरते दश द्वादश पञ्चदश त्रिंशद्दिनानीत्येवं विषममाशौचं ब्राह्मणादीनाम् । तस्मिन्नेवोपनीतोपरम एवातिकालजमातिक्रान्ताशौचं भवति । न वयोवस्थाविशेषनिमित्ताशौचातिक्रम इतीति मिताक्षरा ।

ऊनद्विवर्ष उभयोः सूतकं मातुरेव हीत्यस्य विज्ञानेश्वरकृतं * प्रथम-व्याख्यानमभिप्रेत्याऽऽह--

+ ऊनद्व्यब्दे त्वसंज्ञे जनिकरजननीसोदराणां दशाहं
यद्वाऽस्पृश्यत्वमेवाधिकमिह विषये सूतकं तु त्रिरात्रम् ।
स्त्रीषु स्नानेन शुध्येत्रिपुरुषविषये ज्ञातिराक्षौरकाला-
दर्वाग्वाग्दानतोऽह्नां त्रिभिरुपयमनाद्भर्तृगोत्रं स्वकं च ॥४॥

योगीश्वरवाक्य ऊनद्विवर्षग्रहणादत्राप्यूनद्व्यब्दग्रहणमस्मिन्पक्षे = न तु पूर्णद्विवर्षव्यावृत्त्यर्थम् । तत्राशौचस्य सुतरां × तावत्त्वात् । तस्मिन्न संज्ञे मृते जनिकरस्य पितुर्जनन्याः सोदराणां च दशाहमाशौचम् । इतरसपिण्डानां तूक्तम् । इदं च पित्रोर्जननादूर्ध्वमेव सोदराणां तु नाम-करणादूर्ध्वं वेदितव्यम् । तथा च पैठीनसिः—गर्भस्थे प्रेते मातुर्दशाहं जात उभयोः कृते नाम्नि सोदराणां चेति । जन्माशौचकालमध्ये सद्यः-शौचप्रतिपादकैस्तदूर्ध्वं च त्रिरात्रादिप्रतिपादकैर्मन्वा ⊙ दिवाक्यैर्विरोधा-

---

* प्रथमव्याख्यानमिति । तच्चेत्थम्—त्रिरात्रं दशरात्रं वेति पूर्वार्धेन जननमरण-निमित्तकं दशाहाशौचं सपिण्डेष्वभिधाय 'एवमविशेषेण सपिण्डानामाशौचे प्राप्ते क्वचिन्नियमार्थमाह— ऊनद्विवर्षे संस्थित उभयोरेव मातापित्रोर्दशरात्रमाशौचं न सर्वेषां सपिण्डानाम् । तेषां तु वक्ष्यति—'आदन्तजन्मनः सद्य इति ' इति ।

+ ऊनद्व्यब्द इति । ऊनौ—अपरिपूर्णौ द्वौ द्विसंख्याकौ, अब्दौ संव-त्सरौ यस्य स ऊनद्व्यब्दः । तस्मिन् । अथवा—द्वयोरब्दयोः समाहारो द्व्यब्दम् । पात्राद्यन्तत्वात्स्त्रीत्वाभावः । ऊनं द्व्यब्दमस्येति ।

= न तु व्यावृत्त्यर्थमिति । ऊनद्व्यब्देऽपि मृते मातापित्रोर्दशरात्रमाशौचं भवति । तत्र पूर्णद्व्यब्दे मृते तु दशरात्रं भवतीति किमु वक्तव्यमित्यर्थविवक्षया ऊनद्व्यब्द-ग्रहणं पूर्णद्विवर्षव्यावृत्त्यर्थं न भवतीत्यर्थः । अन्यथाऽपूर्णद्विवर्षे संस्थिते दशरात्र-माशौचं पूर्णद्विवर्षे तु संस्थिते नेत्यसमञ्जसं स्यादिति भावः ।

× तावत्त्वादिति । तत्परिमाणत्वात् । दशरात्रपरिमितत्वादित्यर्थः । पूर्णद्विवर्षे मृते तत्र दशरात्रपरिमिताशौचस्य सुतरां सत्त्वादिति यावत् ।

⊙ 'नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता' 'आदन्तजन्मनः सद्य आचूडा-न्नैशिकी स्मृता' 'प्राङ्नामकरणात्सद्यः शुद्धिः' बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहम्' 'निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते' इत्यादिमन्वादिवाक्यैरित्यर्थः ।

श्लोकविद्विष्टत्वाच्चास्य पक्षस्य निबन्धकारैरनादरादूनद्विवर्षपद*वैयर्थ्यापत्तेश्च याज्ञवल्क्यवचनस्य तत्परत्वेन व्याख्यानस्य सुतरामयुक्तत्वाद्+द्वितीयव्याख्यानमभिप्रेत्याऽऽह—

**यद्वाऽस्पृश्यत्वमेवाधिकमिह विषयेऽशौचकं तु त्रिरात्रम् ।**

इह विषये ऊनद्विवर्षे मृते पित्रोरस्पृश्यत्वं स्पर्शायोग्यत्वमेवेतरसपिण्डापेक्षयाऽधिकम् । अस्पृश्यत्वस्य चावधिं वक्ष्यति—अथ निधनेत्यादिना । आशौचं तु कर्मानधिकाररूपं पित्रोस्त्रिरात्रं सोदराणां त्वितरसपिण्डवदेव न तु दशाहम् । एवं च पित्रितरसपिण्डानामूनद्व्यब्दो-

* वैयर्थ्यापत्तेश्चेति । त्रिरात्रं दशरात्रं वेति पूर्वार्धेन जननादूर्ध्वं पुत्रमरणे सति मातापित्रोरिव तदितरसपिण्डानामपि मरणनिमित्तकेऽस्पृश्यत्वलक्षणे दशरात्राशौचे प्राप्ते क्वचित्तन्नियमार्थमिदमुच्यते— ऊनद्विवर्षे उभयोरिति । अयं हि तस्यार्थः—'अस्पृश्यत्वलक्षणं दशरात्राशौचमुभयोर्मातापित्रोरेव भवति नेतरसपिण्डानामिति । तत्रोनद्विवर्षग्रहणस्य न किमपि प्रयोजनं लक्ष्यते । न च तदभावे पूर्णद्विवर्षादिमरणे सति तत्रापि सपिण्डानामाशौचं न स्यात् कृते तु तद्ग्रहणे ऊनद्विवर्षमरणे सपिण्डानां नाशौचं, पूर्णद्विवर्षादिमरणे तु सपिण्डानां तद्भवतीति व्यवस्था सिध्यतीति वाच्यम् । सपिण्डेषु सामान्यतः प्राप्तस्य मरणाशौचाभावस्य 'आ दन्तजन्मनः सद्यस्त्वाचूडान्नैशिकी स्मृता । त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम्' इत्यादिवचनविहितैकरात्रत्रिरात्रादिविधिना बाधात् । कृतेऽपि तद्ग्रहणेऽस्यापवादस्याविशिष्टत्वात् । तत्रैतावान्विशेषः—ऊनद्विवर्षग्रहणे सति पूर्णद्विवर्षोपरमे सपिण्डेषु प्राप्तस्य दशरात्राशौचस्य मातापितृव्यतिरिक्तेषु संकोचकोऽयमपवादः । असति तु तस्मिंस्तेषु प्राप्ताशौचाभावस्य त्रिरात्रादिविधिना निवर्तकोऽयमिति । ततश्चोनद्विवर्षग्रहणस्य वैयर्थ्यापत्तिरित्यर्थः ।

+ द्वितीयव्याख्यानेनेति । तदित्थम्—'अयवाऽयमर्थः—ऊनद्विवर्षे संस्थित उभयोर्मातापित्रोरेवास्पृश्यत्वलक्षणमाशौचं न सपिण्डानाम् । तथा स्मृत्यन्तरे 'ऊनद्विवर्षे प्रेते मातापित्रोरेव नेतरेषाम्' इति । अस्पृश्यत्वलक्षणमभिप्रेतम् । इतरस्य पुनः कर्मण्यनधिकारलक्षणस्य सपिण्डेष्वपि 'आ दन्तजन्मनः सद्यः' इत्यादिभिर्विहितत्वात् । अत्र दृष्टान्तः—'सूतकं मातुरेव हीति । यथा सूतकं जनननिमित्तकमस्पृश्यत्वलक्षणमाशौचं मातुरेव केवलं तथोनद्विवर्षोपरमे मातापित्रोरेवास्पृश्यत्वमिति' । अस्मिन् पक्षे पूर्णद्विवर्षोपरमे सपिण्डानामस्पृश्यत्वं भवतीति सूचनार्थमूनद्विवर्षग्रहणमुपयुज्यते । तदुक्तं विज्ञानेश्वरेण तत्रैव—'ऊनद्विवर्षे सपिण्डानामस्पृश्यत्वं प्रतिषेधताऽन्यत्रास्पृश्यत्वमभ्यनुज्ञातं भवति' इति ।

परमेऽनुगमननियमवन्नास्त्यस्पृश्यता, किंतु पूर्णद्विवर्षोपरम एव वक्ष्यमाणावधिका सेत्युक्तं भवति । तथा च स्मृत्यन्तरे—ऊनद्विवर्षे संस्थित उभयोरेव नेतरेषामिति । इदं च कर्मानधिकारलक्षणस्याऽऽशौचस्य निषेद्धुमशक्यत्वादस्पृश्यत्वस्यैव निषेधकम् । सूतकं मातुरेव हीत्यवयवव्याख्यनार्थमिताक्षरापर्यालोचनया विज्ञानयोगिनोऽपीदमेव व्याख्यानमभिप्रेतमिति लक्ष्यते । अर्वागित्यादिनोक्तस्येतरसपिण्डाशौचस्य कन्याविषयेऽपवादमाह—

* स्त्रीषु स्नानेन शुध्येत्त्रिपुरुषविषये ज्ञातिरा क्षौरकालात् ।

नाम्न ऊर्ध्वमा क्षौराच्चौलपर्यन्तमकृतचौलासु स्त्रीषु प्रेतासु त्रिपुरुषविषये कूटस्थमारभ्य पुरुषत्रिपये कूटस्थमारभ्य पुरुषत्रयपर्यन्तं सपिण्डः स्नानेन शुध्येत् । तथा चाऽऽपस्तम्बः—'अचूडायां तु कन्यायां सद्यःशौचं विधीयते' इति । वासिष्ठोऽपि—अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायत इति । तृतीयवर्षपरं कालग्रहणमुत्तरार्थम् । तृतीयवर्षादूर्ध्वं कुलधर्मवशेनाकृतचूडाया अप्यहोरात्रस्येष्टत्वात् । ननु सद्यःशौचप्रतिपादक ऋषिवाक्ये कालोपलक्षणप्रदर्शनपरम् । तस्य पूर्वोक्तयुक्तेरयुक्तत्वात्प्रथमवर्षकृतचूडाया अपि सद्यःशौचप्रसङ्गाच्च । तस्माद्यदा कदाचित्क्रियमाणचौलपर्यन्तं सद्यःशौचं तदूर्ध्वं यावद्वाग्दानमहोरात्रम् । तृतीयवर्षादूर्ध्वं त्वकृतचूडायामपि यावद्वाग्दानमेव पुत्रवत्ये त्र्यहवत्स्त्रियामेकाह इत्येतावद्विवक्षितम् ।

अर्वाग्वाग्दानतोऽह्नाम् ।

तृतीयवर्षाच्चोर्ध्वं वाग्दानं यावत्स्त्रीषु प्रेतासु त्रिपुरुषविषये ज्ञातिरहोरात्रेण शुध्येत् । तथा च याज्ञवल्क्यः—अहस्त्वदत्तकन्यासु बालेषु च विशोधनमिति । इदं चाकृतचूडाया सद्यःशौचविधानात्तदूर्ध्वम्—

अविशेषेण वर्णानामर्वाक्संस्कारकर्मणः ।
त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते ॥

इत्याङ्गिरोवचने यत्र पुत्रवत्ये त्रिरात्रं तत्र कन्यास्वहोरात्रविधानात्तृतीयवर्षादूर्ध्वं चाकृतचूडायामपि प्रवर्तत इति निबन्धृणामभिप्रायो लक्ष्यते ।

* अथ स्त्रीषु वयोवस्थाविशेषेणाऽऽशौचविशेषमाविष्करोति—स्त्रीष्विति ।

त्रिभिरुपयमनाद्भर्तृगोत्रं स्वकं च ।

वाग्दानादूर्ध्वमुपयमनाद्विवाहादर्वाक्स्त्रीषु प्रेतासु भर्तृगोत्रं स्वकं पितृगोत्रं च सप्तमपर्यन्तं त्रिभिरहोरात्रैः शुध्येत् * । तथा च मरीचिः—

= अवारिपूर्वं प्रत्ता तु या नैव प्रतिपादिता ।
असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम् ॥ इति ।

विवाहादूर्ध्वं तु वक्ष्यति ॥ ४ ॥

+ जन्मन्यौपेतमृत्यावपि च दश × निशा द्वादशाहानि पक्षं मासं वर्णाः क्रमेणाशुचय उचितकृच्छूद्रजातिस्तु पक्षम् । वानप्रस्थे यतौ चोपरमति कुलजे षण्ढके चाऽऽप्लुतःस्यायोषिद्गोविप्रगुप्त्यै मृतवति च दिनं युद्धविद्धे तु सद्यः॥५॥

जन्मनि पूर्णप्रसवे । उपेत ⊙ एवौपेतः, उपनीतः, तन्मृत्यावपि च, उत्पन्नमृतसपिण्डा ब्राह्मणक्षत्रियवैश्यशूद्रा वर्णाः क्रमेण दश द्वादश पञ्चदश त्रिंशच्चाहोरात्राण्यशुचयः स्युः । उचितकृद्द्विजशुश्रूषादिस्वधर्मानुष्ठानपरः शूद्रस्तु पक्षं पञ्चदशरात्रमशुचिः स्यात् । तथा च याज्ञवल्क्यः—दशरात्रमतः परम् ।

---

* शुध्येदिति । इयं च शुद्धिः ' स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः । यथोक्तेन च कालेन शुध्यन्ति तु सनाभयः ॥ इति मनूक्ता वेदितव्या । अस्यार्थः—वाग्दानोत्तरं विवाहसंस्कारात्प्राक् स्त्रीणां मृतौ बान्धवाः पतिपक्ष्याः सपिण्डास्त्रिरात्रेण शुध्यन्ति । सनाभयस्तु पितृपक्ष्याः सपिण्डा यथोक्तेनैव कालेन 'निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ' इत्यादिनोक्तेन त्रिरात्ररूपेण शुध्यन्तीति । अत्रोभयत्रापि सप्तमपुरुषावधिकं सापिण्ड्यम् । ' अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम् ' इति वचनात् । अत एव निर्णयसिन्धौ ' तदुत्तरं प्राग्विवाहाद्भर्तृकुले पितृकुले च सप्तपुरुषावधि त्रिरात्रम् ' इत्युक्तं संगच्छते । यत्तु ' अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते ' इति वसिष्ठेन स्त्रीणां तृतीयपुरुषावधिकं सापिण्ड्यं प्रदर्शितं तद्वाग्दानात्प्राग्विषयकं बोध्यम् ।

= अवारीति । मिताक्षरायां तु ' वारिपूर्वं प्रदत्ता तु ' इति पाठो दृश्यते ।

+ एवं चतुर्वर्णसाधारणीं शुद्धिमभिधाय वर्णविशेषेण दशाहाद्याशौचं पञ्चमवृत्तपूर्वार्धेनाऽऽह—जन्मनीति ।

× निशा इति । अत्र ' कालाध्वनोरत्यन्तसंयोगे ' इति द्वितीया । दशदिनपर्यन्तमित्यर्थः । एवं पक्षं मासमित्यत्राप्यत्यन्तसंयोगे द्वितीया बोध्या ।

⊙ औपेत इति । स्वार्थिकः प्रज्ञाद्यण् । कृतोपनयन इत्यर्थः ।

त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते ।
क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ।
त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ॥ इति ।

उपनयनस्य च पूर्वावधित्वं त्रैवर्णिकपुरुषविषयम् । स्त्रीशूद्रयोस्तु विवाहस्य पूर्वावधित्वं जा*त्याशौचे, वयोवस्थानिमित्ताशौचे तूत्तरावधित्वं द्रष्टव्यम् । वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृत इत्यस्योपनीतपुरुषाधिकारिकधर्मेषु स्त्रीणां विवाहितानामधिकारप्रतिपादनार्थत्वात्, तत्तो दत्तानां भर्तुरेव हि, स्वजात्युक्तमशौचं स्यान्मृतके जातके तथेति ब्रह्मपुराणीयविशेषवचनाच्च । स्त्रीशूद्रयोश्च समानधर्मत्वात् । बहुकालमविवाहितस्य शूद्रस्य षोडशाब्दादूर्ध्वं मासाशौचम् ।

अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् ।
मृत्युं समभिगच्छेच्चेन्मासात्तस्यापि बान्धवाः ॥
शुद्धिं समधिगच्छन्ति नात्र कार्या विचारणा । इति शङ्खस्मरणात् ।

अत्र दक्षस्मृतौ—सद्यःशौचं तथैकाहस्त्र्यहश्चतुरहस्तथा ।
षट् दश द्वादशाहश्च पक्षो मासस्तथैव च ॥
मरणान्तं तथा चान्यद्दश पक्षास्तु सूतके । इत्युपक्रम्य—
ग्रन्था(यथा)र्थतो विजानाति वेदमङ्गैः समन्वितम् ।
सकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम् ॥
एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः ।
हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा ॥ इत्यादिना

* जात्याशौच इति । इदं पूर्वान्वयि । जातिप्रयुक्ताशौचविषये स्त्रीविवाहस्य शूद्रविवाहस्य च पूर्वावधित्वं बोध्यमिति । अयं भावः—' दश निशा द्वादशाहानि पक्षं मासं वर्णाः क्रमेण ' इत्युक्तं ब्राह्मणत्वादिजातिप्रयुक्तं स्वान्यसपिण्डजननमरणनिमित्तमाशौचं स्त्रीशूद्रयोः कीदृगवस्थयोः प्रवर्तत इत्यपेक्षायां विवाहितयोरेव प्रवर्तत इत्यर्थः । विवाहमारभ्य प्रवर्तत इति यावत् । एवं च जात्याशौचप्रवृत्तौ स्त्रीशूद्रविवाहस्य पूर्वावधित्वं संपन्नमिति विवाहात्प्राक्स्त्रीशूद्रयोराशौचं नास्तीति सामान्यत उक्तं भवति । विवाहात्प्रागपि स्त्रीशूद्रयोर्मातापितृमरणनिमित्तकं दशाहाद्याशौचं भवतीति धर्मसिन्धुतः प्रतीयते । तथा त्रिवर्षोर्ध्वं स्त्रीशूद्रयोर्मरणे यत्त्रिदिनमाशौचमुक्तं तत्कीदृगवस्थयोः स्त्रीशूद्रयोर्मरणे भवतीत्यपेक्षायां विवाहात्प्राङ्मृतयोः सतोर्भवति । तथा च वयोवस्थानिमित्ताशौचविषये स्त्रीशूद्रयोर्विवाहस्योत्तरावधित्वं फलतीति बोध्यम् ।

एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः ।
त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥

इत्यादिस्मृत्यन्तरेण च ब्राह्मणस्य

क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः ।
तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात् ॥
शूद्रो विंशतिरात्रेण *शुध्यते मृतसूतके ।
त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ॥

इत्यादिवचनैश्च क्षत्रियवैश्यशूद्राणामप्युपाधिविशेषोपादानपुरःसरं संकुचिताशौचकल्पाः प्रतिपादिताः ।

सर्वेषामेव वर्णानां सूतके मृतके तथा ।
दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत् ॥

पञ्चदशरात्रेण राजन्यो विंशतिरात्रेण वैश्य इत्यादिवचनैश्च सामान्यत एवोच्चावचा आशौचकालाः प्रदर्शिताः । तत्र व्यवस्थिताशौचकल्पप्रतिपादकानां तावदग्निवेदकार्याग्निहोत्रादिस्वाध्यायविषयता, द्रव्यार्जनं विना सीदत्कुटुम्बाश्वस्तनिकादिकर्तृकतद्भरणोपयोगिद्रव्यार्जनविषयता च विज्ञानेश्वरादिभिः प्रपञ्चेन प्रतिपादितैव । सामान्यतः प्रवृत्तानां तु मनुयाज्ञवल्क्यादिमहास्मृतिविरोधाच्छिष्टसमाचाराभावाच्च यद्यपि तैरनादरणीयत्वमेवोक्तं तथाऽपि मन्वाद्युक्तापेक्षयाऽल्पकालाशौचप्रतिपादकानां तावद्यस्य यावति काले येन विनाऽऽर्थभावस्तस्य तद्विषये तावत्कालाशौचप्रतिपादकत्वेन पूर्वतुल्यतैव । अत एव—

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
अर्वाक्संचयनादस्थ्नां त्र्यहमेकाहमेव च ॥

इति सामान्यप्रवृत्तमपि मनुवचनं—

+कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा ।
त्र्यहैहिको वाऽपि भवेदश्वस्तनिक एव वा ।

---

* शुध्यत इति । दैवादिकस्य शुध्यतेः परस्मैपदित्वेन तत्स्थाने ‘ शुध्येत्तु ’ इति पाठः कल्प्यः । अथवाऽऽर्षमात्मनेपदं ज्ञेयम् ।

+ कुसूलधान्येति । कसूलशब्दस्तालव्यमध्योऽपि ‘ कुशूलं व्रीह्यगारं स्यात् ’ इत्याभिधानिकाः । अत्र कालापेक्षायां ‘ यस्य त्रैवार्षिकं भक्तम् ’ इति मनूक्त एव कालो ग्राह्यः । तेन नित्यनैमित्तिकधर्मकृत्यपोष्यवर्गसहितस्य गृहिणो यावता धान्यादिधनेन वर्षत्रयं समधिकं वा निर्वाहो भवति तावद्धनः कुशूलधान्यक उच्यते । वर्ष-

इति प्राज्ञमतिपादितचतुर्विधगृहस्थाभिप्रायमित्युक्तं मिताक्षरायाम् । अधिककालाशौचप्रतिपादकानां तु जातिमात्रक्षत्रियादिविषयतेत्यपि वक्तुं शक्यमित्यादिरन्यत्र विस्तरः । खड्गः—

हीनवर्णा तु या नारी प्रमादात्प्रसवं व्रजेत् ।
प्रसवे मरणे तज्जमाशौचं नोपशाम्यति । इत्यादिपदार्थः ।

इदमेव दशममभिप्रेतं दक्षस्मृताविति विस्तरार्थः । सोदकाविषयोच्चाव चाशौचकल्पप्रतिपादकानामप्येषैव व्यवस्था ।

माधवस्तु दशद्वादशाहादिन्यूनाशौचकल्पा युगान्तरविषयाः ।
वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा ॥ इति स्मृत्यन्तरात् ।
दशाह एव विप्रस्य सपिण्डमरणे सति ।
कल्पान्तराणि कुर्वाणः कलौ भवति किल्बिषी ॥

इति हारीतवचनाच्चेत्याह । एतच्च ब्राह्मणादिग्रहणात्सजातीयविषयमेव । विजातीयेषु तु—विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।

अम्बष्ठः शूद्र्यां निषादो जातः *पारशवोऽपि वा ।
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां +विन्नास्वेष विधिः स्मृतः ॥

---

निर्वाहोचितधान्यादिधनः कुम्भीधान्यकः । ईहा चेष्टा तस्यां भवमैहिकम् । त्रयाणामह्नां समाहारस्त्र्यहः । त्र्यहपर्याप्तमैहिकं धनं यस्य स त्र्यैहिकः । दिनत्रयनिर्वाहोचित-धनः । श्वो भवं श्वस्तनम् 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यः' इति ट्युप्रत्ययस्तस्य तुट् च । ततो मत्वर्थे 'अत इनिठनौ' इति ठन् । इकादेशः । ततो नञ्समासः । श्वोभूतदिन-पर्याप्तं यस्य धनं न भवति किंत्वद्यतनदिननिर्वाहोचितं यस्य धनं भवति तथा-भूतो वा भवेदश्वस्तनिकः ।

* पारशव इति । ब्राह्मणात्परिणीतायां शूद्रायामुत्पन्नः पुत्रो निषादनामा भवति । तस्यैव पारशव इति संज्ञान्तरं क्रियते । ननु किमर्थं संज्ञान्तरमिति चेदुच्यते–निषादो नाम कश्चिन्मत्स्यघातजीवी प्रतिलोमजः सोऽत्र मा भूदिति पारशवोऽयं निषाद इति संज्ञान्तरं बोध्यम् ।

+विन्नास्विति । विन्नासु–अनिन्द्येन विवाहविधिनोढासु कन्यकासूत्पादितानां पुत्रा-णामेष मूर्धावसिक्तादिः संज्ञाविधिः शास्त्रकारैः स्मृत इत्यर्थः । एते च मूर्धावसि-क्ताम्बष्ठनिषादमाहिष्योग्रकरणाः षडनुलोमजाः पुत्रा वेदितव्याः । एतेन पुरा युगे ब्राह्मणस्य चातुर्वर्णिकस्त्रीविवाहे क्षत्रियस्य त्रैवर्णिककन्योद्वहने वैश्यस्य द्वैवर्णिकभा-र्याकरणे चाधिकार आसीदित्यनुमीयते । अन्यथैष संज्ञाविधिरनुपपन्नः स्यादिति भावः ।

ब्राह्मणादेर्मूर्धावसिक्तादिषु तावदनन्तरे षडह एकान्तरे त्र्यहो व्यन्तर एकरात्रम् । तथा च हारीतेनोक्तम्—

दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु ।
षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥ इति ।

बौधायनेन तु स्वजात्याशौचमेव तत्रापीत्युक्तम्—

क्षत्रविट्शूद्रजातीया ये स्युर्विप्रस्य बान्धवाः ।
तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥ इति ।

अनयोश्च पक्षयोर्जातिमात्रस्वधर्मपरविषयत्वेनाऽऽपदनापद्विषयत्वेन वा व्यवस्था । मूर्धावसिक्तादेर्ब्राह्मणादिषु सपिण्डेषु जातेषु मृतेषु वा जात्याशौचं द्रष्टव्यम् । तथा च विष्णुः—ब्राह्मणस्य क्षत्रियविट्शूद्रेषु सापिण्डेषु षड्रात्रत्रिरात्रैकरात्रैः, क्षत्रियस्य विट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्राभ्यां, वैश्यस्य शूद्रे सपिण्डे षड्रात्रेण शुद्धिः । हीनवर्णानां तूत्कृष्टेषु सपिण्डेषु जातेषु मृतेषु वा तदाशौचव्यपगमे शुद्धिरिति । मूर्धावसिक्तादीनां सजातीयसपिण्डेषु तु क्षत्रियादिजात्याशौचम् । ब्राह्मणात्क्षत्रियायामुत्पन्नः क्षत्रिय एव । क्षत्रियाद्वैश्यायामुत्पन्नो वैश्य एव । वैश्याच्छूद्रायामुत्पन्नः शूद्र एवेत्यस्य मूर्धावसिक्तादीनां क्षत्रियादिधर्मलाभप्रतिपादनार्थत्वात् । † सूतादिप्रातिलोमजानां प्रतिलोमा धर्महीना इति स्मरणादाशौचं नास्त्येव । केवलं जनने मरणे च मूत्रपुरीषोत्सर्गवन्मलापकर्षणार्थं शौचमात्रमिति विज्ञानेश्वरः । माधवादयस्तु यन्निमित्ते शूद्रस्य यदाशौचं तन्निमित्ते प्रतिलोमजानां तदेव । शौचाशौचं प्रकुर्वीरञ्छूद्रवद्वर्णसंकरा इति ब्रह्मवचनादित्यादि दिङ्मात्रम् । तथा सत्यपि सपिण्डत्वेऽनौरसेषु = क्षेत्रजादिषूत्पन्नेषु मृतेषु च बीजिक्षेत्रिणोः, प्रतिलोमभिन्नान्याश्रितासु पत्नीषु प्रसूतासु मृतासु च पूर्वापरपत्योश्च त्रिदिनमाशौचं नतु दशाहादि । तथा च त्रिरात्रेण शुध्येदित्यनुवृत्तौ विष्णुः—

---

† सूतादीति । ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा । शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः ॥ क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च । शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥ इत्युक्ताः सूतवैदेहिकचण्डालमागधक्षत्रायोगवाः षट् प्रतिलोमजाः सूतादयो बोध्याः ।

= क्षेत्रजेति । क्षेत्रजदत्त्रिमकृत्रिमगूढजापविद्धकानीनसहोढक्रीतकपौनर्भवस्वयंदत्तपाराशवेत्येकादश नवमाध्याये मनुस्मृतावुक्ताः क्षेत्रजादयो बोध्याः ।

* अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
+ परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥ इति ।

अनौरसपदेन चात्रौरसो धर्मपत्नीज इति पारिभाषितौरसभिन्ना गृह्यन्ते। तेन बीजिनोऽपि क्षेत्रजादौ त्रिरात्रसिद्धिः । अत एव बृहस्पतिना— अन्याश्रितेषु दारेषु परपत्नीसुतेषु चेत्युक्तम् । यस्त्वौरस एव दानेन विक्रयेण वाऽन्यस्य पुत्रीकृतस्तत्र पूर्वपितुर्न त्रिरात्रं पूर्वसंबन्धनिवृत्तेश्च न दशाहादीति प्रतिभाति । परपूर्वाग्रहणाच्च यद्यपि द्वितीयपत्युरेव त्रिरात्रमिति प्रतीयते तथाऽपि बार्हस्पत्येऽन्याश्रितग्रहणात्पूर्वस्यापि । पितृपति-

---

* अनौरसेष्विति । अत्र भार्यापुत्रशब्दयोः संबन्धिशब्दत्वात्प्रत्यासत्त्या यत्प्रतियोगिकं पुत्रत्वं भार्यात्वं वा तस्यैवेदं त्रिदिनमाशौचम् । सपिण्डानां त्वाशौचाभाव एव । एतदभिप्रेत्यैवोक्तम्— बीजिक्षेत्रिणोरिति पूर्वापरपत्योरिति चेति ।

+ परपूर्वास्विति । परो ब्राह्मणवर्णापेक्षया परः क्षत्रियादिः स्ववर्णीयः, पूर्वः प्रथमः पतिर्यस्याः सा परपूर्वा ; अथवा परः स्ववर्णापेक्षयोत्कृष्टवर्णीयः पूर्वः प्राथमिकः पतिर्यस्याः सा । क्षत्रियादिजात्युद्भवा ब्राह्मणेन परिणीता स्त्रीत्यर्थः । सा यदि प्राथमिकं स्वपतिमुत्सृज्यान्यं ब्राह्मणं स्वस्वजातीयं वा पुरुषं समाश्रिता सती प्रसूतायां मृतायां वा सत्याम् । ब्राह्मणविषये— परो ब्राह्मणजातीयः कश्चन पूर्वः प्रथमः पतिर्यस्याः सेति बोध्यम् । अत एवोक्तं—प्रतिलोमव्यतिरिक्तमाश्रितास्विति । उत्तमवर्णीयया भार्यया हीनवर्णीयसमाश्रयणं प्रतिलोमाश्रयणम् । तद्व्यतिरिक्तं तद्भिन्नमित्यर्थः । । हीनवर्णीयया भार्यया स्वापेक्षयोत्तमवर्णीयसमाश्रयणमनुलोमाश्रयणमित्यर्थः । एवं च क्षत्रियादिपरवर्णीया भार्या प्राथमकल्पिकं स्वपतिमुत्सृज्य सवर्णमन्यं स्ववर्णापेक्षयोत्तमवर्णीयं वाऽन्यं कामात्समाश्रिता सती मृतायां प्रसूतायां वा सत्याम्, अथवा ब्राह्मणी भार्या स्वपतिमुत्सृज्य कामात्सवर्णमन्यं कंचन पुरुषमाश्रिता सती प्रसूतायां मृतायां वा सत्यां प्राथमकल्पिकपत्युः सपिण्डत्वात्प्राप्तदशरात्रापवादत्वेन त्रिरात्राशौचं जननमरणनिमित्तं विधीयते । परपत्युस्तु कचिद्दशरात्रापवादत्वेन कचित्तु-अप्राप्तमेव त्रिरात्राशौचं विधीयत इति निष्कर्षो ज्ञेयः । परस्य पतित्वं च मुख्यपतिसादृश्यात् । सादृश्यं च परिपालनपूर्वकतद्भोगादिना बोध्यम् । अत एव प्रसूतास्विति संगच्छते । एतेनोत्कृष्टजातीया भार्याऽपकृष्टवर्णं समाश्रिता सती यदि प्रसूता मृता वा तदा पूर्वपरपत्योराशौचं नास्तीति सूचयति । तादृशव्यभिचारस्यातिदोषावहत्वेन पातित्यापादकत्वादिति भाति । अत एव प्रतिलोमाश्रितास्वाशौचाभाव एवेति विज्ञानेश्वरेणोक्तम् ।

सपिण्डानां त्वेकरात्रम् । तथा च मरीचिः—

सूतके मृतके चैव त्रिरात्रं * परपूर्वयोः ।
एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ॥ इति ।

पितृग्रहणं पत्युपलक्षणम् । हारीतोऽपि—

परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।
भर्तृपित्रोस्त्रिरात्रं स्यादेकाहं + तु × सपिण्डतः ॥ इति ।

याज्ञवल्क्येन तु पित्रोः पत्योश्चैकाह उक्तः—अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु चेति । तस्य चासंनिहितविषयत्वं निर्गुणविषयत्वं वा । त्रिरात्रैकरात्रयोः सवर्णासवर्णविषयत्वेन व्यवस्थेत्यपि कश्चित् । एकाहपक्षे च सपिण्डानां स्नानमात्रम् । एवं च—

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता ॥

इति प्रजापतिवचने समभिव्याहारात्पतिपितृतत्सपिण्डत्रिरात्रस्नानयोरत्यन्तसमानविषयत्वं यद्यपि प्रतीयते तथाऽपि त्रिरात्रविषये सपिण्डाना मरीचिहारीतवचनाभ्यामेकाहविधानात्सामान्यतः समानविषयत्वाङ्गीकारेण पूर्वोक्तोऽवान्तरविषयविभागः कल्पनीयः । एवं च सद्यःशौचानुवृत्तौ—अन्यपूर्वासु भार्यासु पुत्रेषु कृतकेषु चेति शङ्खलिखितवचनमपि भार्यापुत्रशब्दयोः संबन्धिशब्दत्वादुपास्थितयोः पतिपित्रोः सपिण्डानामित्यध्याहारेण सपिण्डविषयमेव व्याख्येयम् । अत्यधमजातीयभार्याऽग्राह्मीयपुत्रविषयमित्यपि कश्चित् । भिन्नपितृकसोदरे च जाते एकाहः । मृते त्र्यहः । तथा च मरीचिः—

मात्रैकया द्विपितृकौ भ्रातरावन्यगोचरौ ।
एकाहं सूतके तत्र त्रिरात्रं मृतके तयोः ॥ इति ।

---

* परपूर्वयोरिति । परः पूर्वः पतिर्यस्या भार्यायाः सा परपूर्वा । परः पूर्वः पिता यस्य क्रीतादेः पुत्रस्य स परपूर्वः । परपूर्वा च परपूर्वश्च परपूर्वौ । 'पुमान्स्त्रिया' इत्येकशेषः । तयोः परपूर्वयोरित्यर्थः ।

+ एकाहं त्विति । एकाहमित्यत्रात्यन्तसंयोगे द्वितीया बोध्या । अन्यथा 'रात्राह्नाहाः पुंसि' इति पुंस्त्वात् 'एकाहः' इत्यापत्तेरिति बोध्यम् ।

× सपिण्डत इति । सपिण्डानामित्यर्थः । आद्यादित्वात्सार्वविभक्तिकस्तसिः ।

×वानप्रस्थे यतौ +चोपरमति कुलजे षण्ढके चाऽऽप्लवः स्यात् ।

कुलजे सगोत्रसपिण्डे वानप्रस्थे यतौ संन्यासिनि षण्ढके तृतीयप्रकृतौ चोपरमति मृते सत्याप्लवः स्यात्, स्नानमात्रमेव शुद्धिहेतुः स्यात्सर्वेषाम् । तथा च पराशरः—

देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ ।
मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः ॥ इति ।

इदं च स्नानमौर्ध्वदेहिककर्तृभिन्नविषयम् । संनिहितसपिण्डत्वाद्यनापाद्यनिमित्तकाशौचमात्रापवादत्वेनौर्ध्वदेहिकानुष्ठाननिमित्ततदपवादाभावात् । एवमग्रेऽपि । यतेस्त्वौर्ध्वदेहिकमेव नास्ति । कुलजग्रहणमाशौचप्रयोजकानापाद्यसंबन्धमात्रोपलक्षणम् ।

योषिद्गोविप्रगुप्त्यै मृतवति च दिनम् ।

योषितां गवां विप्राणां गुप्त्यै रक्षणाय मृतवति तत्संबन्धिनां दिनमहोरात्रमाशौचम् । तथा च स्मृतिः—

ब्राह्मणार्थे विपन्नानां योषितां गोग्रहेऽपि वा ।
आहवेऽपि हतानां च एकरात्रमशौचकम् ॥ इति ।

आहवहते विशेषमाह—

युद्धविद्धे तु सद्यः ।

विद्धशब्दो मृतलक्षणार्थः । युद्धभूमिमृते सद्यः स्नानमात्रेण शुद्धिः । एकयोगनिर्दिष्टत्वात् । पूर्वत्रोपलक्षिते युद्धहते विशेषद्योतनार्थस्तुशब्दः । तथा च मनुः—

उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च ।
सद्यः संतिष्ठते यज्ञस्तथाऽऽशौचमिति स्थितिः ॥ इति ।

अत्रोद्यतैरित्यादिविशेषणबलाद्युद्धमृधमृतप्रतीतिः । तथा च पूर्ववाक्यं युद्धक्षतेन कालान्तरमृतविषयम् । अत्र त्वौर्ध्वदेहिककर्तृपर्युदासो नास्ति । सद्यः संतिष्ठते यज्ञ इत्युक्तत्वात् । यज्ञोऽन्त्यकर्म ॥ ५ ॥

---

× इदानीं कुलसंबन्धिपुरुषविशेषोपरमे दशाहाद्याशौचापवादमाह—वानप्रस्थ इति । वानप्रस्थे तृतीयाश्रमिणि । संन्यासिनि चतुर्थाश्रमिणि ।

+ उपरमतीति । ' उपाच्च ' ' विभाषाऽकर्मकात् ' इति उपाद्रमेः परस्मैपदविधानाल्लटः शत्रादेशः । निवृत्त्याश्रये सतीत्यर्थः । उपरते सतीति यावत् ।

* शावेऽतीते दशाहात्प्रभृतिविषयगे प्राक्त्रिमासात्त्रिरात्रं
पक्षिण्या षष्ठमासाद्दिनमिह नवमात्स्यात्ततः स्नानमात्रम् ।
स्नानं देशान्तरस्थे त्वथ पितृविषये देशकालाविशेषात्स्वं स्वं
मातुः सपत्न्यास्त्रिदिनमिदमतिक्रान्त्यशौचं समानम् ॥ ६ ॥

विषयगे वक्ष्यमाणलक्षणदेशान्तरभिन्ने यस्मिन्देश आशौचभागिनः सन्ति तस्मिन्नेव देश उत्पन्ने दशाहात्प्रभृति दशाहादिके ब्राह्मणत्वादिजातिप्रयुक्ते शावे मृतिनिमित्ताशौचेऽतीते ज्ञाते सति दशाहादिकालपरिच्छेद्याशौचनिमित्तभूते मरणे दशाहादुत्तरं ज्ञाते सतीति यावत् । + त्रिमासात्तृतीयमाससमाप्तेः प्राङ्मासत्रयमध्ये त्रिरात्रम् । तदूर्ध्वं षष्ठ-

* एतच्च मरणं ज्ञातमेवाशुद्धिनिमित्तमिति निर्णीतं बुधैः । तथा च ज्ञानानन्तरमुत्सर्गतो दशाहाद्याशौचप्राप्तौ क्वचिद्देशकालभेदेन तदपवादमाह षष्ठेन वृत्तेन—शावेऽतीत इति । शावे शावाशौचे दशाहादिकेऽतिक्रान्ते दशदिनानन्तरं ज्ञात इति यावत् । विषयके यस्मिन्देशे मृतिस्तत्रैव ज्ञाते त्रिमासात्प्राक्प्रथममासत्रये त्रिरात्रम् । त्रिमासानन्तरं षण्मासान्यावत्पक्षिणी । पूर्वापरदिनाभ्यां युक्ता रात्रिरशुद्धिनिमित्तम् । आगामिवर्तमानाहर्युक्तायां निशि पक्षिणीति कोशात् । षण्मासादूर्ध्वं यावन्नवममासपर्यन्तं दिनमहोरात्रम् । ततो नवमासादूर्ध्वं स्नानमात्रं स्यादिति संबन्धः । देशान्तरे मृतिश्रवणेऽविशेषेण त्रिमासादावपि स्नानमेवेत्याह—स्नानं देशान्तरस्थमिति । देशान्तरमृतं श्रुत्वा स्नानेन गोत्रिणः शुध्यन्ति । अस्यापवादमाह—अथेति । देशकालाविशेषात्सर्वदेशे सर्वकाले च पितुर्मातुश्च मरणे सुतानां स्वस्वजातिविहितं दशाहादिकमेव । पितृविषय इत्यत्र पिता च माता च पितरौ, तौ विषयौ यस्येति समासो बोध्यः । मातुर्विशेषमाह—मातुः सपत्न्या इति । सापत्नमातरि मृतायां पुत्रस्य देशकालाविशेषेण नवमासादूर्ध्वं त्रिरात्रम् । अत्र शावशब्दमुपाददता जननाशौचातिक्रान्तावशुद्धिर्नास्तीति सूचितम् । एतदतिक्रान्ताशौचं सर्ववर्णसाधारणमित्याह—इदमिति । इदमतिक्रान्तिसंबन्ध्यशौचं समानं सर्ववर्णसाधारणं वेदितव्यमित्यर्थः ।

+ त्रिमासादिति । 'वृत्तौ संख्यावाचकात्पूरणप्रत्ययस्य लोपमिच्छन्ति' इत्यभियुक्तोक्तेस्त्रिशब्दादुत्तरस्य तीयप्रत्ययस्य लोपः । अत एव तृतीयमासादिति व्याख्यातम् । एतदभिप्रायेणैव 'तपरस्तत्कालस्य' इति सूत्रे भाष्ये कैयटेन 'त्रिमागाधिकाः'

मासमभिव्याप्य तत्समाप्तिपर्यन्तं पक्षिणी। आगामिवर्तमानाहर्द्वययुक्ता मध्यगता रात्रिः पक्षिणी। तदूर्ध्वं नवममासमभिव्याप्य तत्समाप्तिपर्यन्तमिह * विषये दिनमहोरात्रम्। ततोऽनन्तरमुदकदानसहितं स्नानमात्रं कालनिरपेक्षं शुद्धिहेतुः स्यात्सपिण्डानाम्। न पुनर्ज्ञातस्य मरणादेराशौचनिमित्तत्वात्तत आरभ्य पूर्णं दशाहादि भवतीत्यर्थः। तथा च वृद्धवसिष्ठः—मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा।

अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति ॥ इति।

स्नानेनोदकदानमप्युपलक्ष्यते। सर्वेषां वत्सरे पूर्णे प्रेते दत्त्वोदकं शुचिरिति याज्ञवल्क्यवचनात्। यत्तु मानवे—संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति। इत्येवकारकरणं तत्कालनिवृत्त्यर्थम्। अत्र च वाक्यद्वये संवत्सरग्रहणं तदूर्ध्वमपि स्नानप्राप्त्यर्थं न तु वर्षमध्ये नवमासादूर्ध्वमप्यधिकाशौचाभिप्रायेण। उदाहृतवासिष्ठवचनात्। शावग्रहणेन दशाहाद्याशौचनिमित्तभूतस्य जननस्य दशाहाद्यनन्तरं श्रवणे पितृव्यतिरिक्तानामाशौचं नास्तीति दर्शयति। तथा च देवलः—× नाशुद्धिः

---

इत्यस्य तृतीयभागाधिका इत्यर्थः प्रदर्शित इति चेन्न। तादृशाभियुक्तोक्तौ प्रमाणाभावात्। नहि शाब्दिकैस्तादृशं वचनं प्रणीयते। न च लक्षणैव तत्र प्रमाणमिति वाच्यम्। लक्षणायां नियामकादर्शनात्। न च वक्तृतात्पर्यमेव तन्नियामकम्। अन्यथोपपत्तौ वक्तृतात्पर्यस्य तन्नियामकत्वायोगात्। अत एव तत्रैव कैयटीयविवरणे त्रयो भागा अधिका यत्रेत्यर्थस्तृचिनः। केवलसंख्यावाचकानां पूरणप्रत्ययान्तार्थकत्वे मानाभावात्तत्रासाधुत्वाच्चेत्युक्तम्। तस्मात्त्रयाणां मासानां समाहारस्त्रिमासमित्येव व्याख्यातव्यम्। पात्रादित्वात्पञ्चपात्रमितिवत्स्त्रीत्वाभावः। अतो न द्विगोरिति ङीप्। अथवा त्र्यवयवो मासस्त्रिमासः। शाकपार्थिवादित्वादुत्तरपदलोपः। त्रिशब्दसमभिव्याहाराच्च मासशब्दो माससमुदायपरः। अत एव त्रिलोकनाथेत्यादिमहाकविप्रयोगः संगच्छत इति बोध्यम्।

* इहेति। अतीतशावविषय इत्यर्थः।

× नाशुद्धिरिति। 'प्रोषित कालशेषः स्यात्पूर्णे दत्त्वोदकं शुचिः' इति याज्ञवल्क्यीयप्रायश्चित्ताध्यायगतैकविंशश्लोके मिताक्षरायां 'पूर्णे दत्त्वोदकं शुचिः' इति प्रेतोदकदानसहचरितस्याऽऽशौचकालस्य शुद्धिहेतुत्वविधानाज्जन्मन्यतिक्रान्ताशौचं सपिण्डानां नास्तीति गम्यते। पितुस्तु निर्देशेऽपि जनने स्नानमस्त्येव। 'श्रुत्वा पुत्रस्य जन्म च' इति वचनात्। एतच्च पुत्रग्रहणं जन्मनि सपिण्डानामतिक्रान्ताशौचं नास्तीति ज्ञापकम्। अन्यथा 'निर्देशं ज्ञातिमरणं श्रुत्वा जन्म च निर्दशम्'

प्रसवाशौचे व्यतीतेषु दिनेष्वपीति । पितुस्तु स्नानमात्रमस्त्येव ।

* निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाश्रित्य शुद्धो भवति मानवः ॥

इति मनुवचनात् । एतच्च पुत्रग्रहणमन्यसपिण्डजन्मन्यतिक्रान्ताशौचाभावस्य ज्ञापकम् । अन्यथा श्रुत्वा जन्म च निर्दशमित्येवावक्ष्यत् । दशाहात्प्रभृतीत्यनेन त्रिरात्राद्याशौचनिमित्तभूतानुपनीतादिप्रायणेऽप्यतिक्रान्ताशौचं नास्तीति दर्शयति । तथा च व्याघ्रपादः — + उपनीते तु विषमं तस्मिन्नेवातिकालजमिति । अत्र यद्यप्युपनीतग्रहणादनुपनीतपर्युदासेऽप्याचार्यसोदकादिप्रायणेऽतिक्रान्ताशौचं प्रसज्यत एव तथाऽपि त्रिरात्राहोरात्राद्याशौचनिमित्ते मरणे त्रिरात्राद्यनन्तरं ज्ञातेऽपकर्षस्यौचित्येन त्रिरात्राद्याशौचविधानस्यायुक्तत्वादतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्, इति च मनुवचने स्पष्टमेव दशाहग्रहणाद्दशाहादिजात्याशौचविषयत्वमेवातिक्रान्ताशौचविधेर्युक्तमित्यभिप्रेत्य दशाहात्प्रभृतीत्युक्तम् । रुद्रधरेण तु—× प्रोषिते कालशेषः स्यात्पूर्णे दत्त्वोदकं शुचिरिति याज्ञवल्क्यवचनपाठानुसारेण मानवनिर्दशग्रहणस्य निष्क्रान्ताशौचकालपरत्वमङ्गीकृत्य त्रिरात्राद्याशौचातिक्रमेऽपि स्नानोदकदानमात्रमुक्तम् । दशा-

---

इत्येवावक्ष्यत् । न चोक्तं तथेति विज्ञानेश्वर आह : तथा च स्मृत्यन्तरम्—' तस्माद्विपत्तावेवातिक्रान्ताशौचमिति स्थितिः ' इति ।

* निर्दशमिति । निर्गतदशाहमित्यर्थः । दशभ्योऽहोभ्यो निर्गतमिति विग्रहः ।

+ उपनीते त्विति । अयमर्थः—उपनीते पुनरुपरते दशद्वादशपञ्चदशत्रिंशद्दिनानीत्येवं विषममाशौचं भवति ब्राह्मणादीनाम् । शूद्रस्योपनयनस्थाने विवाहः । तदभावे षोडशं वर्षं ग्राह्यम् । तस्मिन्नेवोपनीतोपरम एवातिकालजमतिक्रान्ताशौचं भवतीति । उपनयनोत्तरमरण एव दशाहविधानात्तत्रैव चातिक्रान्ताभिधानात् । अन्ययोगव्यवच्छेदपरेणैवकारेणातिक्रान्ताशौचेऽनुपनीतादिमरणप्रयुक्तत्र्यहाद्यल्पाशौचसंबन्धो व्यावर्त्यत इति त्र्यहाशौचेऽतिक्रान्ताशौचं नास्ति किंतु पूर्णे दशाहाशौच एवातिक्रान्ताशौचं भवति । अत्रोपनीतग्रहणं दशाहाशौचप्रयोजकमरणाश्रयसपिण्डासपिण्डोभयोपलक्षणम् । तेन त्र्यहाद्यल्पाशौचप्रयोजकाचार्यमातामहमातुलादिमरणेऽप्यतिक्रान्ताशौचं न भवति । अन्यथाऽनुपनीतसपिण्डमरणेऽतिक्रान्ताशौचाभावे सिद्धेऽपि त्र्यहाशौचापादकोपनीतासगोत्रसपिण्डासपिण्डमातुलादिमरणेऽप्यतिक्रान्ताशौचं प्रसज्येतेति बोध्यम् ।

× प्रोषित इति । प्रोषिते कालशेषः स्याद्शेषे त्र्यहमेव हि । सर्वेषां वत्सरे पूर्णे प्रेते दत्त्वोदकं शुचिः ॥ इति रुद्रधरसंमतः पाठः ।

न्तरे विशेषस्य वक्ष्यमाणत्वाद्विषयग इत्युक्तम् । अन्तरा तु वक्ष्यति । देवलेन त्वन्यथोक्तम्—

आ त्रिपक्षात्त्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः ।
परमेकाहमावर्षादूर्ध्वं स्नातो विशुध्यति ॥ इति ।

स्नानविषयमदर्शकमिताक्षराग्रन्थेऽर्वाक्संवत्सरादित्युक्तेरभिप्रायं न विदुषः । अत एवात्र नवमादूर्ध्वमविशेषेण स्नानमुक्तम् ।

* स्नानं देशान्तरस्थे तु ।

देशान्तरस्थे तु जात्याशौचनिमित्तज्ञातिमरणे दशाहाद्युत्तरं ज्ञातेऽविशेषेण स्नानोदकदानमात्रं न तु त्रिरात्रादि । तथा च स्मरणम्—

देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ ।
मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः ॥ इति ।

पूर्णे दत्त्वोदकं शुचिरिति च । पूर्णे आशौचकाले । पराशरवचनमपि—

भृग्वग्निमरणे चैव देशान्तरमृते तथा ।
बाले प्रेते च संन्यस्ते सद्यःशौचं विधीयते ॥ इति ।

आ त्रिपक्षादित्यादिसामान्यवचनविहितस्य वर्षाभ्यन्तरे त्रिरात्राद्याशौचस्य देशान्तरमृतेऽपि प्राप्तौ कथं सद्यःशौचमित्याशङ्कानिवृत्त्यर्थं विशेषविहितेन सद्यःशौचेन विरोधात्त्रिरात्रादेस्तत्राप्रवृत्तेः । निषेधमुखेनानुवादपूर्वकं देशान्तरमृत इत्यस्य विवरणमुत्तरत्र वचने—

देशान्तरमृतः कश्चित्सगोत्रः श्रूयते यदि ।
न त्रिरात्रमहोरात्रं सद्यः स्नात्वा शुचिर्भवेत् ॥ इति ।

सगोत्रशब्दोऽत्रसपिण्डपरः । तत्परं गोत्रमुच्यत इति परिभाषितेषु चतुर्दशपुरुषोत्तरेषु सगोत्रेषु समानोदकेष्विव पूर्वोक्तोपपत्त्या त्रिरात्राद्यतिक्रान्ताशौचस्याप्राप्तेरेव तन्निषेधानुवादासंभवात् । यत्तु माधवेन पूर्ववचनं संवत्सराभ्यन्तरेऽसपिण्डविषयमुत्तरं तु संवत्सरादूर्ध्वं सपिण्डविषयमिति पराशरवचनद्वयं व्याकुर्वता देशान्तरमृतेऽप्यतिक्रान्ताशौचं त्रिरात्राद्यङ्गीकृतं तत्सपिण्डविषयपूर्वोत्तरसंदष्टस्य पूर्ववचनगतदेशान्तरमृतग्रहणस्यासपिण्डविषयत्वोत्प्रेक्षाया निर्बीजत्वादुत्तरवचनस्य च संवत्सरोर्ध्वविषय(त्वे)नोत्प्रेक्षायाः संवत्सराभ्यन्तर एव विहितस्य त्रिरात्रादेस्तदूर्ध्वं प्राप्त्यभावादेव तन्निषेधानुवादासंगतेरप्ययुक्तत्वादयुक्तम् । यत्तु पूर्ववचनस्यासपिण्डविषयत्वार्थं संवादत्वेन—

---

* देशान्तरे मृतिश्रवणेऽविशेषेण स्नानमित्याह—स्नानं देशेति ।

बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते।
सवासा जलमाप्लुत्य सद्य एव विशुध्यति ॥

इति मनुवचनमुपन्यस्य तत्र देशान्तरस्थत्वेन चासपिण्डो विशेष्यत इत्युक्तम्। तत्प्रत्यक्षं चकारश्रवणादत्यन्तायुक्तम्। यदपि—

अर्वाक्त्रिपक्षाच्चिनिशं षण्मासाच्च दिवानिशम्।
अहः संवत्सरादर्वाग्देशान्तरमृतेष्वपि ॥

इति दिवानिशशब्देन पक्षिण्यभिधानस्यासंभव*वादसंगतार्थमिवाऽऽभासमानमितरग्रन्थेष्वदृष्टं विष्णुवचनमुदाहृतम्। तत्र देशान्तरशब्देन न परिभाषितदेशान्तरग्रहणं किंतु प्रोषितमात्रग्रहणम्। 'देशान्तरगतो विप्र,' इति पराशरवचनगतदेशान्तरग्रहणवादिति सर्ववचनानामविरोधान्मूलोक्त एव विज्ञानेश्वरादिबहुनिबन्धसंमतः पक्षो युक्तः। देशान्तरलक्षणं च बृहस्पतिनोक्तम्—

महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥
देशान्तरं वदन्त्येके षष्टियोजनमायतम्।
चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव च ॥

एतेषां च पक्षाणां देशपरिग्रहेण व्यवस्था। शुद्धिविवेके तु षष्टियोजनान्तरत्वं तदभ्यन्तरेऽपि भाषाभेदगिरिमहानदीव्यवधानानि चेति लक्षणद्वयमेव निष्कर्षेणोक्तम्। मातापितृमरणे त्वपवादमाह—

## अथ पितृविषये देशकालाविशेषात्स्वं स्वम्।

माता च पिता च पितरौ। तद्विषये तु मरणे दशाहाद्युत्तरं यदा कदाचिद्यस्मिन्कस्मिन्नपि देशे ज्ञाते देशकालाविशेषात्स्वदेशविदेशरूपदेशविशेषं त्रिमासषण्मासादिरूपं च कालविशेषमनालोच्य स्वं स्वं दशाहद्वादशाहाद्याशौचं पुत्रैः कर्तव्यम्। तथा च पैठीनसिः—

---

* असंभवादिति। दिवानिशमिति समाहारे द्वंद्वः। दिवाशब्देन दिवसो निशाशब्देन च रात्रिरित्यहोरात्रवाची दिवानिशशब्दः संपद्यते। यदि तु दिवासमभिव्याहृतनिशाशब्देनाहोरात्रो दिवाशब्देन च दिवसमात्रं प्रतिपाद्यत इत्युच्यते तर्ह्येतस्य पक्षिणीपदार्थपरत्वं यथाकथंचित्संभाव्येत, परंतु नैतादृशनिशाशब्दस्यैतादृशदिवाशब्दस्य वाऽहोरात्रपरत्वं क्वापि दृष्टचरमिति दिवानिशशब्दस्य पक्षिण्यभिधानासंभवादित्यर्थः।

*पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥ इति ।

अपिशब्दात्कालान्तरेऽपि । अपवादान्तरमाह—

**मातुः सपत्न्यास्त्रिदिनम् ।**

देशकालाविशेषादित्यनुवर्तते । मातुः सपत्न्या मरण आशौचकालोत्तरं यदा कदाचिद्यस्मिन्कस्मिन्नपि देशे ज्ञाते त्रिदिनमाशौचं पुत्रैः कार्यम् । तथा च स्मृत्यन्तरम्—

पितृपत्न्यामपेतायां मातृवर्जे द्विजोत्तमः ।
संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत् ॥ इति ।

**इदमतिक्रान्त्यशौचं समानम् ।**

इदमाशौचकालातिक्रान्तौ यदशौचमुक्तं तत्सर्ववर्णानां समानं न वर्णभेदाद्भिन्नम् । तथा च व्याघ्रपादः—तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव चेति ॥ ६ ॥

**+पित्रोर्गेहे समूढाप्रसवमरणयोरेकरात्रत्रिरात्रे**
**स्यातां पित्रादिकानामथ पितृमरणे व्यूढपुत्र्यास्त्रिरात्रम् ।**
**प्रेतेष्वाचार्यमातामहदुहितृसुतश्रोत्रियर्त्विक्सयाज्य-**
**स्वस्त्रीयेषु त्रिरात्रं त्रिदिवसमशुचिः सोदकस्तूभयत्र ॥ ७ ॥**

---

* पितराविति । नन्वेतस्यातिक्रान्तविषयत्वे मानाभावेन समानविषयत्वाभावे कथं मासत्रयवचनापवादत्वम् । न च पुत्रमात्रविषयतया विशेषवचनेऽप्यस्मिन्निर्देशानिर्देशविषयतया सामान्ये पुत्रापुत्रविषयतया सामान्येनाप्यनिर्देशमात्रविषयतया विशेषीभूतेन प्रोषितवचनेन निर्देशविषयत्वसंपादनान्मासत्रयवचनसमानविषयता भविष्यतीति वाच्यम् । अनिर्देशमात्रविषयतया विशेषीभूतेऽपि पुत्रापुत्रविषयतया सामान्ये तस्मिन्नेव निर्देशानिर्देशविषयतया सामान्येन पि पुत्रमात्रविषयतया विशेषीभूतेनानेनैवापुत्रविषयताकरणसंभवात् । तत्किं पुत्रवचनं निर्देशविषयं किंवा प्रोषितवचनं पुत्रभिन्नविषयमिति संदेहो दुर्वार इति चेत्सत्यम् । पुत्रवचनं मासत्रयवचनापवादत्वेनातिक्रान्ताशौचप्रकरणे पठ्यत इति मिताक्षरादिभ्योऽवगम्यते । इत्थं च प्रकरणपाठादतिक्रान्तविषयं पुत्रवचनं मासत्रयवचनमपवदतीति निश्चीयत इति भावः ।

+ एवं स्वकुलोत्पन्नमृताशौचमुक्त्वा कुलान्तराश्रितानामपि मृतानामाशौचं सप्तमाष्टमनवमैस्त्रिभिः श्लोकैराह— पित्रोरिति । मातापित्रोर्गृहे समूढायाः सम्यगूढायाः परिणीतायाः प्रसवमरणे तयोः पित्रादिकानामेकरात्रत्रिरात्रे स्याताम् ।

मातापितृगृहे समूढायाः परिणीताया दुहितुः प्रसवे मरणे च यथाक्रमं पित्रोरेकरात्रत्रिरात्रे स्याताम् । प्रसव एकरात्रं मरणे त्रिरात्रम् । आदिपदग्राह्याणां च भ्रातॄणां मातापितृगृहवासे सति तद्गृहे * तदभावे स्वगृहे भगिन्याः प्रसवे मरणे च पूर्ववदेवैकरात्रत्रिरात्रे । तथा च विष्णुः—संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं चेति । पितृपक्षस्येति शेषः । तदुपक्रमात् । पक्षपदेन भ्रातर एव गृह्यन्ते । वाक्यान्तरेण भगिनीमरणे त्रिरात्रविधानात् । पतिगृहे तु समूढाप्रसवमरणयोः सतोः प्रसवे तावत्सर्वेषां पित्रादीनामाशौचाभावः । प्रापकाभावात् । मरणे तु पित्रोस्त्रिरात्रं भवत्येव ।

बैजिकादभिसंबन्धादनुरुध्यादघं त्र्यहम् ।
प्रत्ताप्रत्तासु योषित्सु संस्कृतासंस्कृतासु च ॥
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ।

इत्यादिसामान्येन स्मरणात् । भ्रातृवच्चाशौचकल्पान्तराश्रवणाद्विष्णुवाक्यगतपितृगृहग्रहणस्य च प्रसवपक्षविषयत्वेन सार्थक्यात् । भ्रा+ तॄणां तु वक्ष्यमाणा पक्षिणी ।

स्वसुर्गृहे मृतो भ्राता भ्रातुर्वाऽथ गृहे स्वसा ।
आशौचं त्रिदिनं तत्र पक्षिण्येवापरत्र तु ॥

इति धर्मप्रवृत्तौ । विवेचने तु—भ्रातृस्वस्रोः संस्कृतयोर्मृतौ स्नानं परस्परमित्युक्तं तद्देशान्तरविषयम् ।

---

यदा पितृमातृगेहे परिणीतकन्या प्रसूता मृता वा भवति तदा तस्याः पित्रादिकानां क्रमादेकरात्रत्रिरात्रे । प्रसव एकरात्रं मरणे त्रिरात्रमित्यर्थः । अत्र ‘ पित्रोर्गेहे ’ इति वदता भर्तृगेहे प्रसूताया मृताया वा पितृपक्षाणां सर्वेषामाशौचाभावः सूचितः । ‘ अथ पितृमरणे ’ इत्यत्रत्याथशब्देनाधिकारान्तरं सूचितम् । व्यूढपुत्र्याः परिणीतकन्याया मातापित्रोर्मरणे त्रिरात्रम् । आचार्यादिषु स्वस्रीयान्तेषु मृतेषु त्रिरात्रम् । सोदकः समानोदकः सप्तमपुरुषानन्तरं सप्तपुरुषावसानः स उभयत्र जाताशौचे मृताशौचे च त्रिदिवसमेवाशुचिः स्यात् ।

* तदभाव इति । मातापितृगृहे भ्रातृवासाभावे सतीत्यर्थः ।

+ परस्परमृतौ भ्रातृभगिन्योः पक्षिणी भवेत् । मातुलाशौचवत्पुत्र्याः पितृव्याशौचमिष्यते । अत्र वतिप्रत्ययेनेव परस्परपदेनापि वचनान्तरप्राप्तानुवादत्वमुक्तम् । तथा च पितृव्याशौचं न प्राप्तं भ्रात्राशौचं तु भगिन्याशौचप्रापकं श्वशुरयोरिति नियमवचनादुन्नीयते । तदाशौचानुक्तेरित्याह—भ्रातॄणां त्विति ।

गृहे यस्य मृतः कश्चिदसपिण्डः कथंचन ।
तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः ॥

इत्यङ्गिरोवचनेन स्वगृहमरणे व्यवस्थापितत्वात् । इदं च वचनमुक्तवक्ष्यमाणविषयस्मृत्यन्तरोक्तपक्षिण्यादिकल्पान्तरविकल्पितत्रिरात्रव्यवस्थापकमेव । लाघवात् । न तु स्वगृहे यत्किंचिदसपिण्डमरणेऽपूर्वत्रिरात्राशौचविधायकम् । गौरवात् । * वाक्यान्तरविहितैकरात्रविरोधाच्च । असपिण्डपदेन च जात्याशौचानर्ह उच्यते । एवं च सति यत्र त्रिरात्राद्येव नियमेनोक्तं तत्र स्वगृहेऽन्यगृहे वा मरणे तदेव । यत्र तु त्रिरात्रं पक्षिण्या एकरात्रेण वा विकल्पितमुक्तं तत्राङ्गिरोवचनात्त्रिरात्रस्य स्वगृहमृतविषयत्वम् । इतरस्य तदितरविषयत्वम् । एकाहविकल्पितायां पक्षिण्यामप्येवमेव व्यवस्था । यत्र तु त्रितयं विकल्पितमुक्तं यथा मातुलादौ तत्र त्रिरात्रस्य पूर्वोक्तविषयत्वमेव । पक्षिण्यास्तु मैत्र्यतिशययोगिविषयत्वं न्यायवर्तिविषयत्वं वा । एकरात्रस्य तु मातुलादिमात्रविषयत्वमित्युत्सर्गेण व्यवस्थाप्रकारः प्रसङ्गादत्रैवोक्तः । + क्वचित्त्वन्यदपि व्यवस्थापकं वक्ष्यामः । षडशीत्या तु—अङ्गिरोवचनस्य विधित्वमभ्युपगम्य सर्वत्रोक्तवक्ष्यमाणविषये × आशौचभागिगृहमरणे त्रिरात्रमुक्तं तद्युक्तिग्रन्थविरोधादुपेक्ष्यम् । तत्रैव दुहितुः समूढायाः पितृगृहादन्यत्र मृतौ पित्रोः पक्षिणीत्युक्तं तदपि मूलाभावादयुक्तम् ।

## अथ पितृमरणे व्यूढपुत्र्यास्त्रिरात्रम् ।

पित्रोर्मरणे व्यूढपुत्र्याः परिणीतदुहितुस्त्रिरात्रमाशौचम् । तथा च वृद्धमनुः—

पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत् ।
त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्यमः ॥ इति ।
अनूढानां तु पुत्रादिवदेवाऽऽशौचम् ।

---

* वाक्यान्तरेति । असपिण्डे स्ववेश्मनि मृतेऽप्येकरात्रमिति विष्णुवाक्यान्तरेत्यर्थः ।

+ क्वचिदिति । दौहित्रे संस्कर्तृत्वं व्यवस्थापकमित्यर्थः ।

× आशौचभागीति । प्राप्ताशौचानुवादेन त्रिरात्रगुणविधाने लाघवमित्यभिप्रायेणोक्तमाशौचभागीति ।

प्रेतेष्वाचार्यमातामहदुहितृसुतश्रोत्रियर्त्विक्सयाज्यस्वस्रीयेषु त्रिरात्रम् ।

आचार्ये उपनीय वेदाध्यापके, मातामहे, दुहितृसुते, श्रोत्रियेऽस्खलितैकशाखाध्यायिनि, * ऋत्विजि सयाज्ये सयजमाने, स्वस्रीये भागिनेये च प्रेते शिष्यदौहित्रादयस्त्रिरात्रमशुचयः स्युः । तथा च बृहस्पतिः—त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेदिति । श्रोत्रिये च समानग्रामीणत्वमैत्रीप्रातिवेश्यत्वादिना स्वाचारेण वोपसंपन्ने त्रिरात्रं द्रष्टव्यम् । श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेदिति स्मरणात् । अनुपसंपन्ने तु समानग्रामीणत्वमात्रेणैकाहम् । सब्रह्मचारिणि समानग्रामीणे च श्रोत्रिय इति वचनाद्वक्ष्यमाण एकाहः । असमानग्रामीणे त्वाशौचाभाव एव । दौहित्रभागिनेययोश्चोपनीतयोस्त्रिरात्रम् । अनुपनीतयोस्तु वक्ष्यमाणा पक्षिणी ।

संस्थिते पक्षिणीरात्रिं दौहित्रे भगिनीसुते ।
संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः ॥

इति वृद्धमनुवचनात् । प्रचेता अपि—मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यतीति । एतच्चाऽऽचार्यमातामहादौ त्रिरात्राद्यन्यस्मिन्नन्त्येष्टिकर्तरि । यदा तु संनिहिताधिकार्यन्तराभावात्स्वयमेव तेषामौर्ध्वदेहिकं करोति तदा संपूर्णमेवाऽऽशौचम् ।

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥ इति मनुवचनात् ।

त्रिदिवसमशुचिः सोदकस्तूभयत्र ।

यद्यपि—सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥

इति मनुना सप्तमपुरुषादूर्ध्वं यावज्जन्मनामज्ञानं सोदकत्वमुक्तं तथाऽप्यग्रे गोत्रजे त्वेकरात्रस्यापि वक्ष्यमाणत्वादत्र सप्तमपुरुषादूर्ध्वं चतुर्दशपुरुषपर्यन्ताः सोदकपदेन गृह्यन्ते । स सोदक उभयत्र सोदकान्तरप्रसवे, उपनीतसोदकान्तरमरणे च त्रिदिवसमशुचिः स्यात् । तथा च मनुः—

जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते ।
शवस्पृशो विशुध्यन्ति त्र्यहात्तूदकदायिनः ॥ इति ।

---

* ऋत्विजीति । अध्वर्य्वादियज्ञकर्मकर्तरि तस्मिन्नेव सयाज्ये याज्यो यजमानस्तेन सहिते । ऋत्विजि यजमाने चेत्यर्थः ।

इदं च 'त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते' इत्यादिवाक्येषु दशरात्रतुल्यकक्ष्यत्वेनोक्तत्वात्ततोऽभिन्नविषयमपि पूर्णप्रसव उपनीतमरणे च वेदितव्यम् । अर्वाक्तु स्नानमात्रं कल्प्यम् ॥ ७ ॥

*पक्षिण्याशौचमृत्विग्दुहितृसुतसहाध्यायिबन्धुत्रयान्तेवासिश्वश्रूसुमित्रश्वशुरभगिनिकाभागिनेयप्रयाणे ।
मातामह्यां च पित्रोः स्वसरि च विरते मातुले मातुलान्यां
चाथो सज्योतिरेव स्वविषयनृपतौ ग्रामनाथे च नष्टे ॥ ८ ॥

दौहित्रभागिनेयावनुपनीतौ । एकस्माद्गुरोर्बहुकालं सह वेदमधीयानः सहाध्यायी । आत्मनः पितृष्वसुर्मातृष्वसुर्मातुलस्य च पुत्रा आत्मबान्धवाः । पितुः पितृष्वसुर्मातृष्वसुर्मातुलस्य च पुत्राः पितृबान्धवाः । मातुः पितृष्वसुर्मातृष्वसुर्मातुलस्य च पुत्रा मातृबान्धवा इति बन्धुत्रयम् । अन्तेवासी सहाध्यायिवदेव बहुकालीनः । यद्वा शिल्पशिक्षार्थी । शेषाः प्रसिद्धाः । ऋत्विगादीनां प्रयाणे मरणे मातामह्यादौ च विरत ऋत्विक्त्वादिनिरूपकसंबन्धिनां याज्यादीनां पक्षिण्याशौचम् । विरतपदस्य लिङ्गविपरिणामेन मातामह्यादावनुषङ्गः । तथा च यमः—

श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले ।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥ इति ।

तथा—मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च ।
आशौचं पक्षिणीं रात्रीं मृता मातामही यदि ॥ इति ।

अत्र गुरुः केवलाध्यापकः । मनुरपि—मातुले पक्षिणीं रात्रीं शिष्यर्त्विग्बान्धवेषु चेति । गौतमोऽपि—पक्षिणीमसपिण्डे योनिसंबद्धे सहा-

---

* अथाष्टमश्लोकार्थमाह—पक्षिण्याशौचमिति । ऋत्विगादयो भागिनेयान्ताः प्रसिद्धाः, तेषां प्रयाणे मृत्याविति यावत् । मातामह्यां च विरतायां पित्रोः स्वसरि मातृस्वसरि पितृस्वसरि च विरतायां मातुले च विरते मातुलान्यां मातुलपत्न्यां च विरतायां पक्षिणी आशौचकारणम् । अथो सज्योतिरिति । स्वविषयनृपतौ स्वदेशाधिपतौ नष्टे मृते ग्रामनाथे च नष्टे सज्योतिरेव कालः शुद्धिहेतुः । समानं ज्योतिरादित्यो नक्षत्रं वा यस्मिन् सज्योतिः । ज्योतिर्जनपदेति सूत्रेण समानस्य सः । दिवा नष्टे यावत्सूर्यदर्शनमशुद्धिर्नक्षत्रदर्शनाच्छुद्धिः । रात्रिनष्टे तु रात्र्यवसानपर्यन्तमेवाशुद्धिः । सूर्यदर्शनाच्छुद्धिरित्यर्थः । अत्र येषां पूर्ववृत्ते त्रिरात्रमुक्तं तेषां पुनः पक्षिणीकथनं देशकालादिभेदतो व्यवस्थापनीयम् ।

ध्यायिनि चेति । योनिसंबद्धा मातुलमातृष्वस्रीयपैतृष्वस्रीयादयः ।

**अथो सज्योतिरेव स्वविषयनृपतौ ग्रामनाथे च नष्टे ।**

स्वदेशाधिपतौ स्वग्रामाधिपतौ च नष्टे सज्योतिराशौचम् । मृतिकालीनेन सूर्यनक्षत्ररूपेण ज्योतिषा सह वर्तते तत्सज्योतिः । दिनमृते दिनं रात्रिमृते रात्रिरित्यर्थः । तथा च मनुः—प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः । इति । वृद्धमनुरपि—

ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि ।
शिष्ये पञ्चत्वमापन्ने शुचिर्नक्षत्रदर्शनात् ॥ इति ॥ ८ ॥

***शिष्योपाध्यायबन्धुत्रयगुरुतनयाचार्यभार्यासगोत्रा-**
**नूचानश्रोत्रियेषु स्वगृहपुरमृतौ मातुले चैकरात्रम् ।**
**रात्रिं सब्रह्मचारिण्यथ तु कथमपि स्वल्पसंबन्धयुक्ते**
**स्नानं वासोयुतं स्यादिदमपि सकलं सर्ववर्णेषु तुल्यम् ॥९॥**

शिष्य एकदेशमध्यापितो वेदविद्यार्थिमात्रं वा । उपाध्याय एकदेशाध्यापकः । गुरोराचार्यस्य तनयः । सगोत्रश्चतुर्दशपुरुषादूर्ध्वं यावज्जन्मनामज्ञानम् । अनूचानोऽङ्गाध्यापकः । श्रोत्रियः समानग्रामीणः । शिष्यादिषु मातुलान्तेषु नष्टेषु, स्वगृहे परस्यासपिण्डस्यैतद्भिन्नस्य मृतौ च निरूपकसंबन्धिनामेकरात्रमाशौचम् । तथा चाऽऽहारित्यनुवृत्तौ याज्ञ-

---

* अथ नवमश्लोकार्थमाह—शिष्योपाध्यायेति । एकदेशाध्यापक उपाध्यायः । अनूचानोऽङ्गानां प्रवक्ता । सगोत्रश्चतुर्दशपुरुषानन्तरं सप्तपुरुषावसानः । इतरत्स्पष्टम् । एतेषु शिष्यादिषु प्रमीतेष्वेकरात्रमहोरात्रमशौचमिति शेषः । तथा स्वगृहपरमृतौ मातुले चैकरात्रम् । तथा सब्रह्मचारिणि चैकरात्रम् । एकाचार्योपनीतः सब्रह्मचारी । तस्मिन्मृते सति रात्रिमहोरात्रमशौचमिति । बन्धुत्रयग्रहणेनाऽऽत्मबन्धवः पितृबन्धवो मातृबन्धवश्च गृह्यन्ते । बन्धुत्रयलक्षणं त्वित्थम्—
आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ।
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ।
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ।
इति । अत्र येषां पुनर्ग्रहणं तेषामसंनिधानादिना व्यवस्था द्रष्टव्या । अथ तु कथमपीत्यत्राथशब्दोऽधिकारान्तरसूचनार्थः । कथमपि केनापि प्रकारेण स्वल्पेनापि संबन्धेन संबन्धिनि भगिन्यादौ संस्थिते स्नानं वासोयुतं सचैलं स्नानं शुद्ध्यै स्यात् । नान्यदित्यर्थः । इदमप्युक्तं सकलमाशौचं सर्ववर्णेषु तुल्यं साधारणमिति स्पष्टम् ।

वल्क्यः—गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु चेति । अत्र गुरुरुपाध्यायः । मुख्यगुरौ पितरि सपिण्डत्वेन दशाहसत्त्वात् । असपिण्डाचार्ये च त्रिरात्रसत्त्वात् । मातुलग्रहणं बान्धवानामुपलक्षणमिति विज्ञानेश्वरः । मनुरपि—

त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति ।
तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ॥ इति ।

विष्णुरपि—असपिण्डे स्ववेश्मनि मृत एकरात्रमिति । जाबालिरपि—

एकोदकानां तु त्र्यहो गोत्रजानामहः स्मृतम् ।
मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा ॥ इति ।

रात्रिं सब्रह्मचारिणि ।

एकाचार्योपनीतः सब्रह्मचारी । तस्मिन्नष्टे रात्रिमहोरात्रमाशौचमितरः सब्रह्मचारी कुर्यात् । तथा चाऽऽश्वलायनः—एकाहं सब्रह्मचारिणीति ।

अथ तु कथमपि स्वल्पसंबन्धयुक्ते स्नानं वासोयुतं स्यात् ।

कथमपि केनचित्प्रकारेण स्वल्पेनैकाहाद्याशौचप्रयोजनकेनानुक्तेन संबन्धेन जामातृशालकादौ नष्टे वासोयुतं सवस्त्रं स्नानं स्यात्प्रतियोगिनाम् । तथा च वृद्धमनुः—

भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते ।
मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥
शालके तत्सुते चैव सद्यः स्नानेन शुध्यति ॥ इति ।

भ्रातृभगिनीदौहित्रभागिनेयेषु सद्यःशुद्ध्यभिधानं देशान्तरविषयम् । एतद्ग्रामान्तरमृतागुणवद्विषयम् । तच्च स्मृत्यर्थसारे प्रोक्तम्—अगुणवत्स्वेकग्राम एकाहं ग्रामान्तरे स्नानमिति । अत्र चैतस्मिन्पद्यत्रये स्मृतिषु च यत्रैकस्मिन्नेव विषये नानाविधाशौचकालप्रतिपादनमस्ति तत्राऽऽशौचभागितदन्यगृहमरणरूपेण पूर्वोक्तप्रकारेण प्रीत्युपकारातिशयतदभावाभ्यां चोत्सर्गतो व्यवस्था द्रष्टव्या । आचार्योपाध्यायशिष्यसहाध्यायिषु निवृत्ताध्ययनत्वानिवृत्ताध्ययनत्वाभ्यां सकलैकदेशाध्ययनेन च । ऋत्विग्याज्ययोर्बह्वल्पकालत्वेन श्रौतस्मार्तभेदेन चेति दिक् ।

इदमपि सकलं सर्ववर्णेषु तुल्यम् ।

इदं श्लोकत्रयोक्तमसपिण्डाशौचं वक्ष्यमाणं च सकलमपि संनिपाताशौचादिकं सर्वेषु वर्णेषु तुल्यं भवति । उपनीताशौचवद्वर्णविशेषोपादानेनाविहितत्वात् ॥ ९ ॥

पूर्वप्रवृत्ताशौचद्वितीयादिदिनेष्वाशौचान्तरनिमित्तसंनिपाते प्रतिनिमित्तं नैमित्तिकावृत्तिरिति न्यायेन पृथग्दशाहादिकं प्राप्तं तत्र पूर्वप्रवृत्ताशौचावशिष्टदिनानामुभयसाधारण्येऽपि तदुत्तरमाशौचान्तरस्यैकादशाहादिष्वनुवृत्तिमाशङ्क्यापवादमाह—

*बद्धाशौचस्य मध्ये त्वपरमपि समं स्वल्पकं वा सजाति
प्रेते जात्यन्तरं वा यदि भवति तदा पूर्वशेषेण शुद्धिः ।
द्वाभ्यां तद्रात्रिशेषे त्रिभिरपरदिनैर्यामिनीयामशेषे
नैवाऽऽशौचेन पित्र्यं पितुरुपशमने पक्षिणी मातृमृत्यौ ॥ १० ॥

---

* इदानीमाशौचमध्य आशौचान्तरसंनिपाते दशमवृत्तेन निर्णयमाह—बद्धेति । अस्यायमन्वयः—बद्धाशौचस्य मध्ये—पूर्वप्रवृत्ताशौचस्य मध्ये । तु—पुनः । यदि अपरमपि—अन्यदपि । समं—दशाहाशौचमध्ये दशाहमेवाशौचान्तरम् । स्वल्पकं वा—दशाहापेक्षया न्यूनं त्रिरात्रादिकं वा । समत्वस्वल्पत्वे संख्याकृते विवक्षिते । उत्तरत्र सजातीति विशेषणस्य दर्शनात् । सजाति—समानजातीयम् । जाताशौचमध्ये जाताशौचं प्रेताशौचमध्ये प्रेताशौचमित्यर्थः । भवति तदा पूर्वशेषेण शुद्धिः । अत्र समं स्वल्पकं वेत्यनेन स्वल्पाशौचमध्ये पतितस्य दीर्घाशौचस्य ( जननमरणाशौचस्य ) न निवृत्तिरित्युक्तं भवति । तदुक्तमुशनसा—स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति ॥ इति । तथा प्रेते प्रेताशौचमध्ये, जात्यन्तरं—विजातीयं जननाशौचं समं स्वल्पकं वा यदि भवति तदाऽपि पूर्वशेषेण शुद्धिः । एतेन जाताशौचस्य मध्ये पतितस्य मृताशौचस्य न पूर्वशेषेण शुद्धिरिति विज्ञापितम् । 'शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी' इति षट्त्रिंशन्मतात् । द्वाभ्यां तद्रात्रिशेषे तस्य पूर्वाशौचदशमदिनस्य रात्रिमात्रावशेषे यद्यपरमाशौचान्तरं पूर्वोक्तं भवेत्तदा द्वाभ्यामपरदिनाभ्यां शुद्धिः । यामिनीयामशेषे यामिन्या यामस्तुरीयः प्रहरस्तन्मात्रावशेषे, त्रिभिरपरदिनैः पूर्वाशौचादधिकैस्त्रिभिर्दिवसैः शुद्धिर्न पूर्वशेषमात्रेणेति भावः । 'रात्रिशेषे सति द्वाभ्यां तदन्ते तिसृभिः स्मृता' इति गौतमवचनात् । पित्रोर्विशेषमाह—नैवेति । अन्याशौचमध्ये यत्पतितं पित्र्यं पितृमातृसंबन्ध्याशौचं तत्पूर्वशेषेण नैव शुध्येत् । किंतु पितुरुपरमे मातुश्चोपरमे दशाहमेवाशुद्धिरिति भावः । तयोर्मातृपितृविरतिनिमित्तयोः परस्परसंनिपातेऽपि न पूर्वाशौचशेषेण शुद्धिः । किंतु पित्राशौचमध्ये मातृमृत्यौ जाते पित्राशौचं समाप्य पक्षिणीमधिकां कुर्यात् । मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितृशेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥ इति स्मृतिवचनादिति तात्पर्यम् ।

बद्धस्य पूर्वप्रवृत्तस्याऽऽशौचस्य तत्परिच्छेदकस्य दशाहादिरूपस्य कालस्य मध्ये द्वितीयादिदिनेषु समं पूर्वप्रवृत्ताशौचसमकालव्यापकं स्वल्पकं तन्न्यूनकालव्यापकं वा सजाति जन्मनिमित्ते जन्मनिमित्तं मृतिनिमित्ते मृतिनिमित्तमपरमप्याशौचं स्वनिमित्तभूतजननमरणोपनिपातेन यदि भवति, प्रेते मृतिनिमित्ताशौचमध्ये जात्यन्तरतद्विजातीयं * तादृशमेव जननाशौचं वा यदि भवति तदा तस्याऽऽशौचान्तरस्य पूर्वाशौचकालशेषेण नवदिनादिरूपेणैव शुद्धिर्निवृत्तिर्भवति । न तु तन्निमित्तादारभ्य पूर्णं दशाहादि भवतीत्यर्थः । + एवं च सजातीयं स्वल्पसमान्यतराशौचनिमित्तद्वयमेकस्मिन्नेव दिने यदि भवति तदा × विशेषाग्रहणात् । ÷ साधारणकालपरिच्छेद्यं पूर्णमेवाऽऽशौचद्वयं भवति । = तथाऽल्पकालव्यापकाशौचमध्ये सजातीयमप्यधिककालव्यापकाशौचनिमित्तं यदि भवति तदा तदुत्तरं पूर्णमेव तन्निमित्तमाशौचं भवति । तथा ⊙ जननाशौचमध्ये तदपेक्षया स्वल्पकालाशौचनिमित्तं समका-

* तादृशमेवेति । समस्वल्पान्यतरकालव्यापकमेवेत्यर्थः । समत्वस्वल्पत्वे च प्रत्यासत्त्या पूर्वप्रवृत्ताशौचपरिच्छेदककालप्रतियोगिके पूर्ववद्बोध्ये ।

+ आशौचद्वयप्रयोजकजननमरणोपनिपातदिनैक्यस्थले परस्परसापेक्षपूर्वत्वापरत्वस्य पूर्वपरैतदुभयसापेक्षमध्यत्वस्य च निर्वक्तुमशक्यत्वेनाऽऽशौचद्वयनिमित्तप्राप्त्यधिकरणकालभेदग्राहकस्य पूर्वत्वमध्यत्वादिरूपविशेषस्य ज्ञानाभावेनैतदपवादाप्रवृत्त्याऽऽशौचारम्भस्य तादृशसमानदिनपरिच्छेद्यत्वस्यैवाऽऽयातत्वेन तादृशस्थले युगपन्निपतिताशौचद्वयस्य दशाहादिव्यापकत्वरूपं संपूर्णत्वमेव फलतीत्याशयवानाह—एवं चेत्यादि ।

× विशेषाग्रहणादिति । विशेषस्याऽऽशौचद्वयप्रवृत्त्यधिकरणीभूतदिनात्मककालगतविशेषस्य प्रथमदिनत्वद्वितीयादिदिनत्वरूपस्याग्रहणाज्ज्ञानाभावादित्यर्थः ।

÷ साधारणकालपरिच्छेद्यमिति । आशौचप्रयोजकनिमित्तद्वयोपनिपातस्य यः साधारणः कालस्तद्दिनरूपः समानः कालस्तेन परिच्छेद्यं परिच्छिन्नप्रवृत्तिकमित्यर्थः ।

= पूर्वाशौचपरिच्छेदककालस्य न्यूनत्वे तदुत्तराशौचपरिच्छेदककालस्य च भूयस्त्वे पूर्वाशौचेनोत्तराशौचं न निवर्तते किंतूत्तराशौचं संपूर्णमेव भवतीति समं स्वल्पकं वेत्यनेन सूचितमित्याह—तथाऽल्पकालव्यापकेत्यादि ।

⊙ जननाशौचमध्ये समानस्य स्वल्पकस्य वा मृताशौचस्य पाते न पूर्वेण जननाशौचेन मृताशौचस्योत्तरस्य निवृत्तिरिति व्यतिरेकः प्रेते जात्यन्तरं वेत्यनेन सूचितइत्यभिप्रेत्याऽऽह— तथा जननाशौचमध्य इत्यादि ।

लाशौचनिमित्तं वा मरणं यदि जायते तदा तन्निमित्तमाशौचं न शावमध्यपतितसूतिवत्स्वधर्माप्रयोजकं * किंत्वस्पृश्यत्वादिस्वधर्मप्रयोजकं निमित्तानन्तरं पूर्णं च भवति । तथा + त्रिरात्रादिप्रेताशौचमध्ये दशाहादिव्यापकं जन्माशौचं यदि भवति तदा स्वकालं यावदस्पृश्यत्वादिस्वधर्मप्रयोजकत्वात्प्रबलेनापि शावाशौचेन न निवर्तते किंतु पूर्णमेव भवतीति व्यतिरेकोऽर्थादुक्तो भवति । तथा चोशना—

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि ।
न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति ॥ इति ।

इदं वचनं पूर्वप्रवृत्तमरणाशौच×मात्रेण तदन्तःपतितयोर्जननमरणाशौच॰मात्रयोः, पूर्वप्रवृत्तजननाशौच=मात्रेण च तदन्तःपतितजन्माशौचमात्र✲स्य निवृत्तौ प्रसक्तायां लघुनाऽधिकस्य ❁ तत्प्रतिषेधकमुभयत्र ◡ प्रसक्त्यविशेषात् । तथा च त्रिरात्रादिशावान्तःपातिनो दशाहादिजननाशौचस्य न पूर्वेण निवृत्तिः किंतु स्वकालं यावदनुवर्तमानस्यैव :०: तस्यास्पृश्यत्वादिस्वधर्मप्रयोजकत्वमात्रेण गरी-

---

* अस्पृश्यत्वादीति । स्वल्पकालाशौचमभिप्रेत्येदम् । तथा पूर्णं चेतीदमपि समकालाशौचमभिप्रेत्योक्तमिति बोध्यम् ।

+ त्रिरात्रादीति । त्रिरात्रादीत्यादिना न निवर्तत इत्यन्तेनोच्यमानोऽर्थः, पूर्वत्र जननाशौचमध्यपतितमरणनिमित्ताशौचे स्वल्पसमकालानुषङ्गफलित इति बोध्यम् ।

× मात्रेणेति । ह्रस्वकालिकेनाशौचेनेत्यर्थः ।

॰ मात्रयोरिति । दीर्घकालिकयोरशौचयोरिति यावत् ।

= मात्रेण चेति । ह्रस्वकालिकेनापि चेति यावत् ।

✲ मात्रस्येति । दीर्घकालिकस्याशौचस्येत्यर्थः ।

❁ तत्प्रतिषेधकमिति । तस्याः प्रतिषेधकं तत्प्रतिषेधकमिति षष्ठीतत्पुरुषः । तस्या ह्रस्वकालिकाशौचप्रयुक्तदीर्घकालिकाशौचकर्तृकनिवृत्तेः । प्रतिषेधकं निवर्तकमित्यर्थः । लघ्वाशौचेन दीर्घाशौचस्य निवृत्तिर्न भवतीति यावत् ।

◡ उभयत्र प्रसक्त्यविशेषादिति । उभयत्र उभयोरित्यर्थः । लघुना जननाशौचेन दीर्घे जननाशौचे, तथा लघुना मृताशौचेन दीर्घे मृताशौचे चेत्युभयोरिति यावत् । प्रसक्तेः—निवृत्तिप्रसक्तेः । अविशेषात्—विशेषाभावात्, समानत्वादिति यावत् ।

:०: तस्येति । लघुकालिकशावान्तःपातिनस्य दीर्घकालिकजननाशौचस्येत्यर्थः ।

यसा शावाशौचेन * स्वधर्मप्रयोजकत्ववृत्तिमात्रम् ।
+ सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम् ।
तत्राधित्य मृतकं शौचं कुर्यान्न सूतम् ॥

* स्वधर्मेति । स्वधर्मो व्यवहारकाले स्पृश्यत्वादिः, तत्प्रयोजकत्वस्य वृत्तिमात्रम्, अस्पृश्यत्वादिस्वधर्मप्रयोजकत्वमात्रेण गरीयसा शावाशौचेन सह वृत्तिरेवावस्थितिरेव । नतु निवृत्तिरिति यावत् । अथवा कात्स्र्न्येन साकल्येनावस्थितिरित्यर्थः । मात्रशब्दोऽवधारणार्थकः कात्स्र्न्यार्थको वा । ' मात्रं कात्स्र्न्येऽवधारणे ' इति कोशादिति यावत् । स्वधर्मप्रयोजकत्वनिवृत्तिमात्रमिति पाठे त्वेवं व्याख्यायताम्–स्पृश्यत्वादिस्वधर्मप्रयोजनकस्य स्वस्य जननाशौचस्य निवृत्तिमात्रं निवृत्तिः । मात्रपदेन च प्रागेव निवृत्तिरभ्यनुज्ञायते नतत्पूर्वा बोध्यत इति यावत् । सा च निवृत्तिर्न मृताशौचसमानासमानकालिकस्य सर्वस्य किंतु मृताशौचव्याप्यमानयावत्कालपरिच्छिन्नस्यैव । मृताशौचकालमात्रवृत्तिर्यो जननाशौचभागस्तावन्मात्रस्यैव निवृत्तिरित्यर्थः । अथवा दसमानदेशस्यैवोत्सर्गस्य बाध्यत्वौचित्यात् । अत एव 'स्वकालं यावदनुवर्तमानस्य' इति विशेषणं जननाशौचे दीयमानं संगच्छते । सर्वथा निवृत्तौ तु मरणाशौचोत्तरमीषदप्यनुवृत्तेरभावेन स्वकालं यावदित्यस्य सुतरामसंगतिः स्पष्टैव । स्वधर्मप्रयोजकत्वनिवृत्तिमात्रमिति पाठेऽप्येवमेव व्याख्येयमिति बोध्यम् ।

+ सूतके मृतकं चेदिति । अस्यार्थः—सूतके प्रसूतिनिमित्ताशौचस्य यावान्कालस्तन्मध्ये मृतकं मृतिनिमित्ताशौचं सूत्याशौचसमकालं सूत्याशौचकालान्न्यूनकालं सूत्याशौचकालापेक्षयाऽधिककालं वा समायाति चेत्, अथवा मृतके मृतिनिमित्ताशौचकालमध्ये सूतिनिमित्ताशौचं तत्समकालं ततो न्यूनकालं वा समागच्छति चेत्, तत्र मृतकमधिकृत्य मृतकादारभ्य तत्समाप्त्या शौचं कुर्यात् । न सूतकं—न तु सूतकसमाप्त्या शौचमित्यर्थः । तथा चैतादृशसंनिपातस्थले सूतकस्य शावाशौचापनोदकत्वं नास्तीति प्रतिपादितं भवति ।

ननु ' सूतके मृतकं चेत्स्यात् ' इति प्रथमवाक्यप्रदर्शिताशौचसंपातस्थले योऽयं पूर्वप्रवृत्तसूत्याशौचस्य पश्चात्प्रवृत्तमृतकनिवर्तकत्वाभावः प्रतिपाद्यते स सूत्याशौचकालादधिककालिकमृताशौचविषये यथा दिनत्रयव्यापिनि सूतके प्रवृत्ते तन्मध्ये दशाहमृतकसमागमस्तादृश एव । ' अघवृद्धिमदाशौचं पश्चिमेन समापयेत् । यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद्यदि । अशौचं पुनरागच्छेत्तत्समाप्त्या विशुध्यति । असमानं द्वितीयेन धर्मराजवचो यथा ' इत्याद्येकवाक्यत्वात् । सूतकसमकालमृतकसंपातेऽथवा सूतकन्यूनकालिकमृतकसंपाते यथा दशाहसूतके संप्रवृत्ते तन्मध्ये तद्द्वितीयादिदिनेषु दशाहं त्रिदिनं वा मृतकं प्रविशति तत्र तु ' समानाशौचसंपाते प्रथमेन समापयेत् ' इतिशङ्खवचनैकवाक्यतापन्नात् ' अन्तरा जन्ममरणे शेषाहोभि-

इत्यङ्गिरोवचनात् । यत्तु—

अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा ।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ॥

इति कूर्मपुराणवचने पूर्वार्धापवादकत्वमुत्तरार्धस्याङ्गीकृत्य लघुनाऽपि मरणाशौचेन दीर्घस्यापि जननाशौचस्य स्वरूपनिवृत्तिरूपमपि * बाध्यत्वमुक्तं रुद्रधरेण तत्सत्यप्यपवादकत्वे तस्योशनोवाक्याविरोधाय स्वधर्मप्रयोजकत्वमात्ररूपगरीयस्त्वप्रतिपादकत्वादयुक्तम् + । वस्तुतस्तु

विशुध्यति' इति याज्ञवल्क्यीयात्सिद्धैव पूर्वप्रवृत्तसूतकावशिष्टदिनैः पश्चात्प्रवृत्तमृतकशुद्धिरिति चेन्न । सामान्यमुखप्रवृत्तयोः सूतकमृतकशब्दयोर्विना प्रमाणं विशेषार्थपरत्वस्य मृतकन्यूनकालिकत्वसूतकाधिककालिकत्वरूपस्यानौचित्यात् समानजातीयाशौचसंपातस्थले याज्ञवल्क्यीयस्य चरितार्थत्वात् । 'न सूतिः शावशोधिनी ' इति सूतेः सामान्यतः शावशोधकत्वाभावप्रतिपादकषट्त्रिंशन्मतैकमत्यात् । 'मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्' इति मृतिनिमित्ताशौचस्य गरीयस्त्वप्रतिपादनेन पूर्वप्रवृत्तनिर्बलसूतकेन स्वरूपतो गरिष्ठस्य न्यूनकालिकस्यापि मृतकस्य निवृत्तेर्वक्तुमशक्यत्वाच्च । एवं च सूतिनिमित्ताशौचेन स्वल्पेन समेनाधिकेन वा शावाशौचशोधनं नैव भवति । अत एव धर्मसिन्धौ ' जननाशौचेन समेनाधिकेन वा मृताशौचं नापैति ' इत्युक्तं साधु संगच्छते। नन्वेवं 'मृतके त्वथ सूतकम् ' इति द्वितीयवाक्यप्रदर्शिताशौचसंपापातविषये यत्र दिनत्रयव्यापिनि मृतके प्रवृत्ते सति तन्मध्ये दशाहसूतकं संपतति तादृशे स्थले ह्रसीयसाऽपि मृतकेन द्राघीयसोऽपि सूतकस्य पश्चात्पतितसमस्वल्पान्यतरसूतकवन्निवृत्त्यापत्तिः प्रसज्येतेति चेद्भ्रान्तोऽसि। यतस्तादृशस्थले ' स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति ' इत्युशनोवाक्येन पूर्वप्रवृत्तह्रस्वाशौचेन पश्चात्प्रवृत्तदीर्घाशौचशुद्धेर्निषिद्धत्वात्पश्चात्पतितदीर्घाशौचसमाप्त्यैव शुद्धेरभिधानाच्चेति ।

* बाध्यत्वमिति । अत एव धर्मसिन्धुसारे काशीनाथोपाध्यायैः ' न्यूनेनापि मृतकेन जाताशौचस्याधिकस्यापि निवृत्तिमाह कश्चित् ' इत्युक्तम् । तत्र कश्चिदित्युक्त्या तन्मतस्याशास्त्रीयत्वादनादरणीयत्वं सूचितम् ।

+ अयुक्तमिति । अयं भावः—जननमरणाशौचसंपातस्थले ' मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ' इति वाक्येन यज्जननाशौचापेक्षया मरणाशौचस्य गरीयस्त्वं प्रतिपिपादयिषितं तत्किमस्पृश्यत्वादिस्वधर्मप्रयोजकत्वसमानाधिकरणस्वसमकालिकाशौचान्तरस्वरूपनिवर्तकत्वरूपसर्वांशेनाथवाऽस्पृश्यत्वादिस्वधर्ममात्रप्रयोजकत्वरूपतदेकदेशेन वा । यदि सर्वांशेन गरीयस्त्वं विवक्षितं तदा त्रिदिनमृतकान्तःपातिनो जन-

सर्वप्रकारगरीयस्त्वप्रतिपादकत्वेऽपि तस्य न पूर्वार्धापवादकत्वं किंतु तदविरोधेन समाधिककालशावाशौचगरीयस्त्वप्रतिपादकत्वमेवेति + ।

नाशौचस्य दशाहस्यापि निवृत्त्यापत्त्या 'स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण निवृत्तिः स्यात्स्वकालेनैव शुध्यति ' इत्युशनोवाक्यं विरुध्येत । तेन हि लघुकालिकाशौचेन दीर्घकालिकाशौचानिवृत्तेः स्पष्टं निषेधाद्दीर्घकालिकाशौचसमाप्त्यैव शुद्धेरभिधानाच्च । तथा ' लघुना लघु शुध्येत्तु ' इति हारीतस्मृतिरपि पीड्येत । लघुनैकाहादिनैकाहादिकं शुध्येन्न तु पक्षिण्यादिकमिति तदर्थमपरार्कादित्यो व्याख्यत् । ततश्चोशनोवाक्याद्यविरोधाय तादृशवाक्येऽस्पृश्यत्वादिस्वधर्मप्रयोजकत्वरूपैकदेशेनैव मरणस्य गरीयस्त्वं विवक्षितं न तु स्वसमकालिकाशौचान्तरस्वरूपनिवर्तकत्वेनापीत्य-वश्यं धर्तव्यम् । एवं च यद्रुद्रधरेण लघुनाऽपि मृतकेन दीर्घस्यापि सूतकस्य स्वरू-पनिवृत्तिरूपं बाध्यत्वमुक्तं तदयुक्तमित्यर्थः ।

+ मेवेतीति । मरणस्य अस्पृश्यत्वादिस्वधर्मप्रयोजकत्वविशिष्टस्वसमकालप्राप्ताशौ-चान्तरस्वरूपनिवर्तकत्वरूपसर्वप्रकारगरीयस्त्वविवक्षणेऽपि तस्य—मरणोत्पत्तियोगे त्वित्युत्तरार्धस्य ' अघानां यौगपद्ये त्विति पूर्वार्धापवादकत्वं नास्ति किंतु पूर्वार्धावि-रोधेन समाधिकान्यतरकालिकमरणाशौचगरीयस्त्वप्रतिपादकत्वमेवेत्यर्थः । अबाधेनो-पपत्तौ बाधकल्पनाया अन्याय्यत्वादिति यावत् । अयमभिप्रायः—अघानां पापानां जननमरणनिमित्तकाशौचानां यौगपद्ये समकालप्रवृत्तौ पूर्वप्रवृत्ताशौचव्याप्तकालमध्येऽ-शौचान्तरप्राप्तौ सत्यां गरीयसा गुरुकालिकाशौचेन शुद्धिर्ज्ञेया । दीर्घकालिकाशौच-समाप्त्या शुद्धिर्भवति न लघुकालिकाशौचसमाप्त्येति हि पूर्वार्धस्यार्थः । तत्राघयौ-गपद्यं द्विविधम् । सजातीयाघयौगपद्यं विजातीयाघयौगपद्यं च । प्रथमं पुनर्द्विविधम् । जनने जननं मरणे मरणं च । द्वितीयमपि द्विविधम् । जनने मरणं मरणे जननं वेति । तत्र सजातीयाघयौगपद्यद्वयं पूर्वार्धस्य विषयः । यथा त्रिदिनजननाशौचे दशाहजननाशौचाप्राप्तिस्त्रिदिनमरणाशौचे च दशाहमरणाशौचप्राप्तिरेवंविधे विषये पूर्वार्धेन दीर्घकालिकाशौचसमाप्त्या शुद्धिः प्रतिपाद्यते न लघुकालिकाशौचसमाप्त्या । नात्रोत्तरार्धस्य प्राप्तिः । मरणोत्पत्तियोगाभावात् ।

विजातीयाघयौगपद्यद्वयं तूत्तरार्धस्य विषयः । स यथा—जननाशौचमध्ये तदपेक्ष-याऽल्पसमाधिकान्यतममृतकप्राप्तिरथवा मृताशौचमध्ये तदपेक्षयाऽल्पसमाधिकान्यतम-जननाशौचप्राप्तिरिति । तत्र दशाहजननाशौचीयदशमदिने त्रिदिनमृताशौचप्राप्तिस्थले मृताशौचसमाप्त्यैव शुद्धिर्न तु पूर्वप्रवृत्तजननाशौचसमाप्त्येति तावन्निर्विवादम् । तथा चात्र स्थले 'अघानां यौगपद्ये तु' इतिपूर्वार्धेन गरीयसा सूतकेन मृतकानिवृत्तिः संप्राप्ता, ' सा गरीयो मरणं भवेत् ' इत्युत्तरार्धेनापोदितेति सिद्धमुत्तरार्धस्य पूर्वार्धापवादक-त्वमिति चेन्न ।

षट्त्रिंशन्मतेऽपि—शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् ।
शावेन शुध्यते सूतिर्न सूतिः शावशोधनी ॥ इति ।
एवं च*अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यतीत्यादि सामान्यवचनमपि पूर्वोक्तविशेषविषयमेव भवति ।

---

नात्र 'गरीयो मरणं भवेत्' इत्युत्तरार्धस्य प्रवृत्तिः । सर्वप्रकारगरीयस्त्वेऽपि मरणाशौचस्य सूतकापेक्षया समाधिकत्वाभावात् । तथा चाऽऽशौचान्तरापेक्षया समाधिकान्यतरकालिकस्यैव मृताशौचस्य सर्वप्रकारगरीयस्त्वं प्रतिपाद्यत इत्यर्थः । एवं च पूर्वोक्तस्थले 'अघानां यौगपद्ये तु' इत्यादिपूर्वार्धेनातिप्रसक्ता गरीयसा शुद्धिः 'सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम् । तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम्' इति वचनेन बाध्यते ।

पक्षिणीमृताशौचमध्ये त्र्यहजननाशौचपातस्थले तु पश्चात्पतितदीर्घसूतकसमाप्त्यैव शुद्धिर्नतु पूर्वप्रवृत्तस्वल्पमृताशौचसमाप्त्येति सिद्धान्तः । नात्रापि गरीय इत्युत्तरार्धस्य प्राप्तिः । मृताशौचस्य सूतकापेक्षया समाधिकत्वाभावादेव । तथा चात्र 'अघानां यौगपद्ये तु' इतिपूर्वार्धप्रवृत्त्या गरीयःसूतकसमाप्त्या शुद्धिरिति चेन्न ।

अत्र यद्यपि 'मृतके त्वथ सूतकम् । तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम्' इति वचनेन मृतकसमाप्त्यैव शुद्धिः संप्राप्ता, तथाऽपि 'स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति' इत्युशनोवाक्येन पूर्वेण लघुना शुद्धेर्निषेधादुत्तरेण दीर्घेण शुद्धेर्विधानाच्च सूतकसमाप्त्यैव शुद्धिः । एवं च नात्राघानां यौगपद्ये त्विति पूर्वार्धस्य कश्चिदुपयोगः ।

किंतु यादृशविजातीयाशौचसंपातस्थले सूतकापेक्षया मृतकस्य समत्वमधिकत्वं वा तादृशस्थले 'अघानां यौगपद्ये तु' इत्यादिपूर्वार्धस्य प्रवृत्तिर्वक्तव्या । यथा त्र्यहजननाशौचमध्ये त्र्यहस्य दशाहस्य वा मृताशौचस्य प्रसक्तिरथवा दशाहमृताशौचमध्ये त्र्यहस्य दशाहस्य वा जननाशौचस्य प्राप्तिः । एवंविध एव विषये 'सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम्' 'स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि' इतिवचनोपबृंहितेन 'अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा' इति पूर्वार्धेनोत्तरप्रवृत्तेन पूर्वप्रवृत्तेन वा गुरुणा मृताशौचेन शुद्धिः प्रतिपाद्यते । तत्रैव च मृताशौचस्य 'गरीयो मरणं भवेत्' इत्युत्तरार्धेन सर्वप्रकारगरीस्त्वं विधीयत इति च 'अघानां यौगपद्ये तु' इतिवचनान्तर्गतपूर्वार्धोत्तरार्धयोरपवाद्यापवादकत्वमिति ज्ञेयम् ।

* एवं चेति । एवं च विजातीयाशौचसंपातस्थले पूर्वोक्तविशेषवचनद्वयेन सामान्यवचनस्य बाधे चेत्यर्थः । पूर्वोक्तविशेषविषयकमेव—जननाशौचापेक्षया समाधिकान्यतरमरणाशौचविषयकमेवेत्यर्थः । अस्यायं भाव —'अन्तरा जन्ममरणे' इति सामान्यव-

चनम् । 'स्वल्पाशौचस्य मध्ये तु' इति 'न सूतिः शावशोधिनी' इति च द्वे उशनः-षट्त्रिंशन्मतमते तद्विशेषवचने । अन्तरेति आशौचसंपातविषयकम् । स्वल्पेत्यादि-वचनद्वयं त्वाशौचसंपातविशेषविषयकमिति वस्तुस्थितिः । तत्र जनने जननं (१) मरणे मरणं (२) जनने मरणं (३) मरणे जननं (४) चेति चतुर्विध आशौचसंनि-पात इत्युक्तम् । तत्र प्रथमस्त्रिविधः । जनने तदपेक्षया स्वल्पजननाशौचपातः । यथा दशाहजननाशौचे त्रिदिनजननाशौचपातः (१) । जननाशौचे तत्समजननाशौचपातः । यथा दशाहजननाशौचे दशाहजननाशौचपातः । यथा वा त्रिदिनजननाशौचे त्रिदि-नजननाशौचपातः (२) । जननाशौचे तदधिकजननाशौचपातः । यथा त्रिदिनजननाशौचे दशाहजननाशौचपातश्चेति (३) । द्वितीयोऽपि त्रिविधः । मरणाशौचमध्ये तदपेक्षया स्वल्पमरणाशौचपातः । यथा दशाहमरणाशौचे त्रिदिनमरणाशौचपातः । यथा वा त्रिदिनमरणाशौचे पक्षिण्येकाहान्यतरमरणाशौचपातः (१) । मरणाशौचे तत्सममरणा-शौचपातः । यथा—एकाहपक्षिणीत्रिदिनदशाहमरणाशौचे यथाक्रममेकाहपक्षिणीत्रिदि-नदशाहमरणाशौचपातः (२) । मरणाशौचमध्ये तदधिकमरणाशौचपातः । यथा—एका-हपक्षिणीत्रिदिनमरणाशौचे यथाक्रमं पक्षिणीत्रिदिनदशाहमरणाशौचपातः (३) । तृतीयोऽपि त्रिविधः । जननाशौचमध्ये तदपेक्षया स्वल्पमरणाशौचपातः । यथा त्रिदिनदशाहजननाशौचे यथाक्रमं पक्षिणीत्रिदिनमरणाशौचपातः ( १ ) । जननाशौचे तत्सममरणाशौचपातः । यथा त्रिदिनदशाहजननाशौचे यथाक्रमं त्रिदिनदशाहमरणाशौचपातः ( २ ) । जननाशौचे तदधिकमर-णाशौचपातश्चेति । यथा त्रिदिनजननाशौचमध्ये दशाहमरणाशौचपातः ( ३ ) । चतुर्थोऽपि त्रिविधः । मरणाशौचमध्ये तदपेक्षया स्वल्पजननाशौचपातः । यथा दशाहमरणाशौचे त्रिदिनजननाशौचपातः ( १ ) । मरणाशौचे तत्समजननाशौ-चपातः । यथा त्रिदिनदशाहमरणाशौचे क्रमेण त्रिदिनदशाहजननाशौ-चपातः ( २ ) । मरणाशौचमध्ये तदधिकजननाशौचपातः । यथा पक्षि-णीत्रिदिनमरणाशौचे यथाक्रमं त्रिदिनदशाहजननाशौचपातः ( ३ ) । इत्येवं द्वादश भेदाः संपाताशौचस्य भवन्ति । तेषु च प्रथमान्तर्गततृतीयोदाहरणस्थले सामान्यव-चनस्य ' स्वल्पाशौचस्य मध्ये तु ' इत्युशनोवाक्येन बाधः । तथा च प्रथमान्तर्गते प्रथमे द्वितीये चोदाहरणस्थले सामान्यवचनावकाशः । द्वितीयान्तर्गततृतीयोदाहरण-स्थलेऽपि सामान्यवचनस्योशनोवचनेन बाधः । तथा च द्वितीयान्तर्गते प्रथमे द्वितीये चोदाहरणस्थले सामान्यवचनस्यावकाशः । तृतीयान्तर्गतेषु त्रिष्वप्युदाहरणेषु 'सूतके मृतकं चेत्स्यात् ' ' न सूतिः शावशोधिनी ' । इत्यङ्गिरःषट्त्रिंशन्मतवाक्याभ्यां बाधान्न तत्र क्वचिदपि सामान्यवचनमवकाशं लब्धुमर्हति । चतुर्थान्तर्गततृतीयोदाह-रणस्थले सामान्यवचनस्योशनोवाक्येन बाधः । तथा च चतुर्थान्तर्गते प्रथमे द्वितीये

अन्तरापतिताशौचकालावधिककालव्यापिना लघुनाऽपि पूर्वप्रवृत्ता- शौचेन दीर्घस्याप्याशौचान्तरस्य निवृत्तिरित्युशनोवाक्यार्थापवादो देव- लेन दर्शितः—* परतः परतोऽशुद्धिरघवृद्धौ विधीयते ।

स्याच्चेत्पञ्चतमा+दह्नः पूर्वेणैवात्र शिष्यते ॥ इति ।

अस्यार्थः—न्यूनकालाशौचप्रवृत्तेः परतोऽघवृद्धौ वृद्धिमति दीर्घकाल- व्यापिन्यघे पतितेऽशुद्धिस्तद्दीर्घकालमघं परतः परं पश्चाज्जातं निमित्त- मारभ्य पूर्णं विधीयते न तु पूर्वेण निवृत्तिः । तत्पूर्वप्रवृत्तं लघ्वाशौचं यदि पञ्चतमादह्नोऽन्तरापतिताशौचकालावधेत्परतोऽप्यनुवर्तते तदा पूर्वे- णैव तदपेक्षया लघुनाऽपि षडहादिरूपपूर्वाशौचकालेनैव साऽशुद्धिः शिष्यते, निवर्तत इति । इदमत्रोदाहरणम्—चतुरहान्तर्विदेशस्थमरणे श्रुते शेषेण शुद्धेर्वक्ष्यमाणत्वात्पञ्चदिनादिकमाशौचं तन्मध्ये दशाहा- शौचपाते पूर्वेण शुद्धिः । अपरं च षष्ठमासगर्भपातनिमित्तषडहाशौच- मध्ये प्राप्तस्य दशाहाशौचस्य पूर्वेण निवृत्तिरिति । अत्र शुद्धिविवेके—

आद्यं भागद्वयं यावत्सूतकस्य तु सूतके ।

---

चोदाहरणे 'मृतके त्वथ सूतकम् । तत्राभिक्तस्य मृतकं शौचं कुर्यात् ' इत्याङ्गिरोवा- क्योपबृंहितसामान्यवचनस्यावकाशः । तथा च षट्प्रकारकभेदभिन्ने द्विविधविजातीया- शौचसंपातविषये प्राथमिकविजातीयाशौचसंपातान्तर्गतेषु त्रिष्वप्युदाहरणेषु ' न सूतिः शावशोधिनी ' इत्यनेन सामान्यवचनस्य बाधात्तद्द्वितीयान्तर्गततृतीयोदाहरणे च ' स्वल्पाशौचस्य मध्ये तु ' इत्यनेन बाधाच्च तत्प्रथमद्वितीययोरुदाहरणयोः सप्राधि- कमरणाशौचकयोरेव ' अन्तरा जन्ममरणे ' इत्यादिसामान्यवचनस्य प्रवृत्तिः पर्यव- स्यतीत्यर्थः ।

* परतः परत इति । इदं देवलवचनं 'स्वल्पाशौचस्य मध्ये तु' इत्युशनोवाक्यापवा- दत्वात् पूर्वप्रवृत्तलघुकालापनोद्याशौचं पश्चात्प्रवृत्तदीर्घकालापनोद्याशौचं तदेतद्द्वयं च सजातीयं यत्र तादृशेऽशौचसंनिपातस्थल एव प्रवर्तते । 'उत्सर्गसमानदेशा अपवादाः' इति महाभाष्यकृत्संमतन्यायात् । साजात्यं चास्पृश्यत्वाभावसमानाधिकरणकर्मान- धिकारित्वेनास्पृश्यत्वप्रयोजकत्वविशिष्टकर्मानधिकारित्वेन चेति यथायथं बोध्यम् ।

+ पञ्चतमादिति । ननु पञ्चशब्दात् ' तस्य पूरणे डट् ' ( पा० सू० ५ । २ ४८ ) इत्यनेन डटि प्रत्यये कृते तस्य ' नान्तादसंख्यादेर्मट् ' ( पा० सू० ५ । २ । ४९ ) इति मडागमे टित्वादाद्यावयवे नलोपे च सति पञ्चमादिति युक्तम् । नात्र तमडागमस्य प्राप्तिः । स तु विंशत्यादिभ्यो विहितः । तथा च कथमत्र तमडिति चेत् । आर्षत्वाच्छन्दसोऽभङ्गायेति ज्ञेयम् ।

द्वितीये पतिते चाऽऽद्यात्सूतकाच्छुद्धिरिष्यते ।
अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृता ॥
एवमेव विचार्यं स्यान्मृतके मृतकान्तरे ॥

इति ब्रह्मपुराणवाक्यानुसारेण देवलवचने पूर्वेणाप्य*नुशिष्यत इति पाठं कल्पयित्वा पञ्चतमादह्नश्चतुर्धाविभक्तपूर्वप्रवृत्ताशौचभागद्वयात्परतोऽघवृद्धौ सजातीयसंपूर्णाशौचान्तरोपनिपाते, परतः परेणाऽऽशौचेनातीतेन शुद्धिः, न तु पूर्वेणेति पादत्रयं व्याख्याय, पञ्चतमादह्नः पूर्वेणाऽऽद्यभागद्वयमध्ये तादृशाशौचान्तरोपनिपाते पूर्वेणैवाऽऽशौचेनातीतेन शुद्धिरिति च चतुर्थपादं व्याख्याय, 'रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात्' इति च तदपवादत्वेन व्याख्याय दशा+हादिसंपूर्णाशौचे यदि द्वितीयं संपूर्णाशौचमाद्यभागद्वयमध्ये पतति तदा पूर्वाशौचापगमेन शुद्धिः। यदि तदुपर्युपान्त्यदिनपर्यन्तं तदा द्वितीयापगमेन । अन्त्यदिने तदनन्तरदिनद्वयेन । तद्दिनरात्र्यन्त्ययामे तदनन्तरत्रिरात्रेणेति व्यवस्था प्रदर्शिता। तत्र देवलवचनस्यैतदर्थकत्वेन व्याख्यानं तावदघवृद्धिपदानाञ्जस्यात्पूर्वेणेत्यस्याऽऽवृत्त्यापत्तेश्चायु×क्तम् । अर्थोऽप्य=युक्तः । षष्ठ-

* पूर्वेणापीति । यतो ब्रह्मपुराणवाक्य आद्यात्सूतकात् द्वितीयात्सूतकान्तादित्यत्राद्यद्वितीयशब्दौ पूर्वपरार्थप्रतिपादकौ ततस्तदेकवाक्यत्वाय परतः परतोऽशुद्धिरिति देवलवचने 'पूर्वेणैव' इत्यस्य स्थाने पूर्वेणापीत्येव पाठेन भाव्यमिति कल्प्यते । अन्यथा वाक्यभेदः स्यात् । स चायुक्तः । 'संभवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्' इत्युक्तत्वादिति । इदं पाठकल्पनमुपलक्षणम् । परतोऽशुद्धिरित्यत्र परतः शुद्धिरिति पाठं कल्पयित्वेत्यपि बोध्यम् । एतादृशपाठकल्पने प्रमाणं तु 'शुद्धिरिष्यते' इत्युक्तब्रह्मपुराणवाक्यमेव । अतीतेनेति शेषपूरणम् । अनुशिष्यते इत्यनुयोगस्तु धात्वर्थे विशिष्यश्छन्दसोऽभङ्गायेति ज्ञेयम् । एवं देवलवचनं कल्पयित्वा ब्रह्मपुराणवाक्यैकवाक्यतया तदर्थं प्रदर्शयति-पञ्चतमादह्नश्चतुर्धाविभक्तपूर्वप्रवृत्तेत्यादिना ।

+ पञ्चतमादिति लिङ्गात्पूर्वप्रवृत्तपश्चात्प्रवृत्ताशौचयोरुभयोर्दशाहादिसंपूर्णत्व एवेदं प्रवर्तत इत्याशयवानाह-दशाहादिसंपूर्णाशौचे यदि द्वितीयं संपूर्णाशौचमिति ।

× अयुक्तमिति । अनुशिष्यत इत्यस्यानुवर्तत इत्यर्थे सति शुद्धिरित्यस्यानन्वयः । तथा निवर्तत इत्यर्थेऽप्यनन्वय एव । किंच पूर्वेण परेणेत्युभयत्राप्यतीतेनेति पूरणमसद्बीजम् । तथा च शुद्धिरित्यस्यानन्वयप्रसङ्गादपि देवलवचनस्य तादृशार्थकत्वेन व्याख्यानं निर्बीजत्वादतीतेनेत्यस्य पूरणं चायुक्तमिति बोध्यम् ।

= अर्थोऽप्ययुक्त इति । अयं भावः—ब्रह्मपुराणवाक्यानुरोधेन 'पूर्वेणाप्यनुशि-

सप्तमाष्टमनवमदिनेष्वाशौचान्तरोपनिपाते दशमदिनोत्तरं पञ्चषट्सप्ताष्टदिनेषु तदनुवृत्तिः । दशमदिनतद्रात्र्यन्त्ययामयोस्तु तदुपनिपाते द्वित्रिदिनेष्वेव तदनुवृत्तिरित्यस्यानुचितत्वात् । आ नवमाद्दिवसादिति बौधायनवचनविरो+धाच्च । कस्तर्हि ब्रह्मपुराणवाक्यस्यार्थः । तत्र केचित्तावद्रात्रिशेष इत्येतत्समानार्थत्वेनेदं व्याचक्षते । तथा हि—सूतकसंबन्धिच-

---

ष्यते ' इति चतुर्थचरणपाठो देवलवचने स्वीकृत इत्युक्तम् । तत्रानूपसर्गो धात्वर्थं विशिंषन्ननुवृत्तिं निवृत्तिं वाऽर्थं द्योतयति । तथा सति शुद्धिरनुवर्तते निवर्तते वेति योजयितुमशक्यत्वादतीतेनेति पूरयित्वा पूर्वेण परेण वाऽतीतेन शुद्धिरित्यन्वयः । तथा चानुशिष्यते इत्यस्यानुवर्तेत इत्याद्यर्थकस्य कान्वय इत्याकाङ्क्षायां यत्र परेणातीतेन शुद्धिः प्रतिपाद्यते तत्र प्रत्यासत्त्या पूर्वप्रवृत्ताशौचमिति कर्तृवाचकमादाय पराशौचसमाप्तिं यावत्पूर्वप्रवृत्ताशौचमनुवर्तते इत्यन्वयः कार्यः । यत्र च पूर्वप्रवृत्ताशौचेन शुद्धिरभिधीयते तत्र पराशौचमिति कर्तृवाचकमादाय पूर्वप्रवृत्ताशौचीयदशमदिनानन्तरं पराशौचं निवर्तते इति रीत्याऽनुशिष्यत इत्यस्यान्वय उपपादनीयः । तथा च पूर्वप्रवृत्ताशौचीयपञ्चतमादहूनः परेषु षष्ठसप्तमाष्टमनवमेष्वहःसु संपूर्णाशौचान्तरोपनिपाते सति परेणाऽऽशौचेनातीतेन शुद्धेरभिधानात्तत्र पूर्वप्रवृत्ताशौचं दशमदिनानन्तरं पञ्चषट्सप्ताष्टदिनानि यावदनुवर्तेत इति सिध्यति । एवं सति पूर्वप्रवृत्ताशौचीयनवमदिनेऽशौचान्तरोपनिपाते सति यदि पूर्वप्रवृत्ताशौचं स्वदशमदिनानन्तरमष्टदिनपर्यन्तमनुवर्तते तदा पूर्वप्रवृत्ताशौचीयदशमदिनेऽशौचान्तरोपनिपाते तत्पूर्वप्रवृत्ताशौचं स्वीयदशमदिनादूर्ध्वं नवदिनानि यावदनुवर्तेत इत्यर्थस्यैवौचित्यायातत्वेऽपि न तथोक्तं, किंतु दशमदिनतद्रात्र्यन्त्ययामयोस्तु द्वित्रिदिनान्येव यावदनुवर्तेत इत्यनुचितमभिहितम् । तस्माद्देवलवचनस्य तादृशार्थवर्णनं ' रात्रिशेषे त्र्यहाच्छुद्धिः ' इत्यस्य च तदपवादत्वेन वर्णनं चानौचित्यग्रस्तत्वादयोग्यमित्यर्थस्यायुक्तत्वं बोध्यम् ।

+ विरोधाच्चेति । ' अथो यदि दशरात्राः संनिपतेयुराद्यं दशरात्रमाशौचमानवमाद्दिवसात् ' इति बौधायनवचनम् । अत्र दशरात्रग्रहणं ' समानाशौचसंपाते प्रथमेन समापयेत् ' इति शङ्खवाक्यैकवाक्यतयाऽऽशौचस्य तुल्यकालत्वोपलक्षणार्थम् । तथा च समानकालापनोद्याशौचयोः संपातस्थले पूर्वप्रवृत्तदशरात्राशौचीयनवमदिनं यावद्यद्यपरं दशरात्राशौचं संनिपतेत्तदाऽऽद्यं दशरात्रमाशौचमेव भवति नतु पश्चात्पतितमाशौचं भवतीति तदर्थः । एवं च शुद्धिविवेकोक्तीतस्य ' यदि तदुपर्युपान्त्यदिनपर्यन्तं तदा द्वितीयापगमेन ' इत्यादेर्देवलवचनार्थस्य बौधायनविरोधः स्पष्ट एवेति बोध्यम् ।

रमाहोरात्रस्य दिवसरूपमाद्यभागद्वयं यावद्द्वितीये सूतके पतित आद्या-देव सूतकाच्छुद्धिः। अत आद्यभागद्वयादूर्ध्वं रात्रौ सूतकान्तरापाते द्वितीयात्पूर्वोक्तभिन्नात्सूतकान्ताच्छुद्धिः। स च सूतकान्तो रात्रिशेष इत्यादिना शातातपादिभिर्दर्शित इति। तदयुक्तम्। अथ यदि दशरात्राः संनिपतेयुराद्यं दशरात्रमशौचमा नवमादिवसात्।

पुनः पाते दशाहात्प्राक्पूर्वेण सह गच्छति।
दशमेऽह्नि पतेद्यस्याहर्द्वयात्स विशुध्यति॥
प्रभाते तु त्रिरात्रेण दशरात्रेष्वयं विधिः।

इति बौधायनदेवलवचनाभ्यां नवमदशमशब्दयोरुपान्त्यान्त्यदिनोप-लक्षणत्वेनोपान्त्यदिनपर्यन्तमेव पूर्वेण, रात्रिचतुर्थयामपर्यन्तं चान्तिमा-होरात्रे द्विरात्राधिकेन तेन शुद्धेः प्रतिपादितत्वात्। रात्रिशेष इत्यादिकं त्वेतदविरोधेनैवानुपदं व्याख्यास्यामः। चरमाहोरात्रविषयत्वं चास्य न वाक्यात्प्रकरणाद्वा लभ्यते। तस्माद्ब्रह्मपुराणमिति कृत्वा लिखित-मिदं मिताक्षरादावदर्शनान्निर्मूलमेव। यद्वा परतः परत इत्यादिवाक्यसमा-नार्थत्वेनेदं व्याख्येयम्। अन्तरापतितसूतकस्य चतुर्थीविभक्तस्याऽऽद्य-भागद्वयमर्धं यावत्तत्पर्यन्ते तदधिककालव्यापिनि लघुनि पूर्वप्रवृत्तसूतके तदधिके द्वितीये पतित आद्यात्सूतकस्य तु सूतक इत्यत्र प्रथमनिर्दिष्टा-दन्तः पातिसूतकादेव शुद्धिर्न तु पूर्वात्। अतोऽर्धादूर्ध्वं तदधिककालव्या-पिनि लघुन्यपि सूतके तदधिके द्वितीये पतिते द्वितीयात्तत्रैव चरम-निर्दिष्टात्पूर्वसूतकादेव शुद्धिः। एवं शावाशौचेऽपीति। पूर्वोक्तविशेषण-* विशिष्टपूर्वप्रवृत्ताशौचान्तिमाहोरात्रे पूर्वोक्तविशेषणविशिष्टाशौचान्तर-निमित्तोपनिपाते पूर्वशेषमात्रेण शुद्धिमाप्तावाह—

द्वाभ्यां तद्रात्रिशेषे त्रिभिरपरदिनैर्यामिनीयामशेषे।

रात्रिशब्दोऽहोरात्रपरः। रात्रिरूपः शेषो रात्रिशेषः। तथा च तस्य पूर्वप्रवृत्तपूर्वोक्ताशौचस्य रात्रिशेषेऽन्तिमाहोरात्रेऽन्तिमाष्टमयामन्यूने पूर्वो-क्तद्वितीयाशौचोपनिपाते तद्दिनादपराभ्यां द्वाभ्यां दिनाभ्यां शुद्धिः।

---

* विशेषणविशिष्टेति। बद्धाशौचस्य मध्ये त्वपरमपि समं स्वल्पकं सजाति प्रेते जात्यन्तरं वेत्यादिविशेषणविशिष्टेत्यर्थः। तथा च स्वल्पसमान्यतरत्वसमानाधि-करणसजातीयत्वविशिष्टपूर्वप्रवृत्ताशौचान्तिमदिने तादृशविशेषणविशिष्टेऽशौचान्तरे निपतिते सति, अथवा स्वल्पसमान्यतरत्वविशिष्टमृतिनिमित्ताशौचान्तिमदिने स्व-ल्पसमान्यतरत्वविशिष्टे विजातीयाशौचे निपतिते सतीत्यर्थ इति यावत्।

तदन्तिमाहोरात्रयामिन्या यामरूपे शेषेऽन्तिमप्रहरे तस्मिंस्त्रिभिरन्याहिनापरदिनैस्त्रिभिः शुद्धिर्नतु पूर्वशेषमात्रेणेत्यर्थः । तथा च पुनः पात इत्यादिकं पूर्वलिखितं देवलवचनम् । तत्र च यद्यपि सूर्योदयात्प्राचीनः प्राचीमप्रकाशकालः प्रभातशब्देनोच्यते तथाऽप्यत्रान्त्ययामपर एवासौ । रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहादिति शातातपीये यामग्रहणात् । अत्रापि रात्रिशब्दोऽहोरात्रपरः । रात्रिमात्रावशिष्ट इत्यादिमिताक्षरादिग्रन्थेऽपि तथा । एवं बौधायनवचनाविरोधेन रात्रिशेष इत्यस्य व्याख्यानसंभवे यद्वाचस्पतेरस्थानाकरत्वाभिधानं तदशक्तिनिबन्धनम् । केचित्तु देवलबौधायनवचनानालोचनेन चरमाहोरात्रसंबन्धिसूर्यास्तमयोत्तरं त्रिषु यामेष्वाशौचान्तरोपनिपाते द्वाभ्यां तदुत्तरयामे सूर्योदयपर्यन्तं त्रिभिरिति यथाश्रुतमेव सर्वं व्याचक्षते । इयं चाऽऽशौचान्तरोपनिपाते चरमाहोरात्रोक्ता व्यवस्था सजातीयान्तःपातिनि सजातीये शावान्तःपातिनि विजातीये च संपूर्णाशौच एव भवति, नतु संपूर्णान्तःपातिन्यसंपूर्णान्तःपातिनि वा । संपूर्णे तत्र केवलयोरेव त्र्यहत्र्यहयोः शोधकत्वसंभवेन पूर्वाशौचशेषसापेक्षतच्छोधकत्वप्रतिपादनायोगात् । पूर्वोक्ता तु व्यवस्था तत्रापि भवति । तस्यास्तदविषयत्वे बीजाभावात् । यत्तु रुद्रधरेण पूर्वोक्तदेवलबौधायनवचनबलादियं सर्वाऽपि व्यवस्था संपूर्णाशौचविषयैव । समकालव्यापकासंपूर्णाशौचसंनिपाते तूत्तरेणैव शुद्धिरित्युक्तम् । जननाशौचमध्ये यद्यपरं जननं स्यात्तत्र पूर्वाशौचव्यपगमे शुद्धिः । मरणाशौचमध्ये मरणेऽप्येवम् । अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यतीत्यादिविष्णुयाज्ञवल्क्यादिवाक्येषु विशेषानुपादानात् । बौधायनादिवाक्येऽपि क्षत्रियादिसंपूर्णाशौचसंग्रहार्थं दशरात्रादिशब्दानामुपलक्षणत्वस्यावश्याङ्गीकार्यत्वे लाघवादाशौचमात्रोपलक्षणत्वस्यैव युक्तत्वात् । तत्र वाक्यान्तरबलाल्लघ्वन्तःपातिदीर्घसूत्यन्तःपातिशावमात्रमेव परिह्रियतां, नत्वसंपूर्णाशौचमपि । प्रमाणाभावात् । अत्र वर्धितत्र्यहत्र्यहाशौचे तदधिकाशौचान्तरोपनिपाते तस्य लघुत्वादधिकाशौचापगमेनैव शुद्धिरिति प्रतिभाति । पूर्वप्रवृत्तशावान्तःपातिनस्तत्समकालस्यापि कथंचिच्छावस्य न पूर्वेण निवृत्तिरित्याह—

नैवाऽऽशौचेन पित्र्यम् ।

माता च पिता च पितरौ । तत्संबन्ध्याशौचमन्तरापतितं पूर्वप्रवृत्ते-

तरसपिण्डमरणाशौचेन न गच्छति। किंतु निमित्तादारभ्य संपूर्णं भवती- त्यर्थः। एवं च सति पितृमरणनिमित्ताशौचस्येतरसपिण्डाशौचेनेव मात्रा- शौचेनापि यथा निवृत्तिर्नास्ति तथा मात्राशौचस्यापीतरसपिण्डाशौचे- नेव पित्राशौचेनापि निवृत्तिर्नास्तीति प्राप्तौ विशेषमाह—

पितुरुपशमने पक्षिणी मातृमृत्यौ।

पितुरुपशमने पूर्वं जाते तन्निमित्तायामशुद्धौ सत्यां पश्चान्मातृमृत्यौ न पित्राशौचशेषमात्रेण शुद्धिः किंतु पक्षिण्यधिका भवति। तत्र दशमादि- नपर्यन्तं दशमरात्रिपर्यन्तं वा मात्राशौचोपानिपाते पक्षिणीमात्रम्। न- तु द्व्यहत्र्यहसमुच्चिता सा। तथा च शङ्खः—

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम्॥ इति।

अस्यार्थः—मातर्यग्रे प्रमीतायां तन्निमित्तायामशुद्धौ सत्यां यदि पिता म्रियते तदा पितुः—तन्मृतिनिमित्ताशौचस्य, शेषेण—मात्राशौचपरिच्छे- दकदिनोत्तरमपेक्षितदिनेष्वनुवर्तनेन शुद्धिर्नतु मात्राशौचशेषेण। पित्रा- शौचमध्ये मातुस्तु मरणे पितुः शेषेण शुद्धिः स्यादेव पक्षिणीं त्वधिकां कुर्यादिति। एवं च मात्राशौचेनापि पित्राशौचस्य न निवृत्तिः, किमु- तान्येन। तथा पित्राशौचेनापि केवलेन मात्राशौचस्य न निवृत्तिः, किमुतान्येन केवलेनान्यसहितेन वेति कैमुतिकन्यायेनास्मादेव वच- नात्तस्याप्यर्थस्य सिद्धिमभिप्रेत्य नैवाऽऽशौचेन पित्र्यमित्युक्तम्। इदं च संनिपाते पूर्वेण शुद्ध्यभिधानं सूतिकाग्निदेतरसपिण्डानाम्। तयोस्तु निमित्तादारभ्य पूर्णमेवानधिकारलक्षणमस्पृश्यत्वलक्षणं चाऽऽ- शौचमिति षडशीत्यां विशेष उक्तः—

पूर्वाशौचेन या शुद्धिः सूतके मृतके च सा।
सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि॥ इति।

तथाऽऽशौचसंनिपातेऽपि पूर्वनिमित्तकमुत्तरेणोत्तरनिमित्तकं वा पूर्वेण जातकर्मपिण्डदानादिकं न प्रतिबध्यते। यथाऽऽह प्रजापतिः—

आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति॥ इति।

आशौचे सूतिनिमित्ते मृतिनिमित्ते वा। शातातपोऽपि—

अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि।
प्रेतमुद्दिश्य कर्तव्यं पिण्डदानं स्वबन्धुभिः॥

प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत् ।
तथैवाऽऽशौचपिण्डांस्तु शेषान्दद्याद्यथाविधि ॥ इति ।

जननग्रहणं मरणस्याप्युपलक्षणम् । तुल्यन्यायत्वात् । एकादशाहकृत्यमपि तत्रैव विघ्नान्तरेषु द्वादशाहे ॥ १० ॥

*सर्वं त्वाशौचमन्तर्यदि विदितमिदं शेषमात्रेण शुद्धि-
र्दाहाहादाहिताग्नौ मरणदिवसतोऽन्यत्र कुर्याद्दशाहम् ।
पूर्णे स्नात्वा सचैलं विहितहितकृतावर्हकाः सूतिका तु
त्रिंशद्रात्रं न योग्या सुरपितृकरणे विंशतिं पुत्रसूस्तु ॥ ११ ॥

तद्देशस्थेन देशान्तरस्थेन वा सर्वमुक्तं + संपूर्णमसंपूर्णं चाऽऽशौचं तन्निमित्तमिति यावत् । यद्यन्तः × प्रवृत्तिदिनातिरिक्तदिनेषु विदितं ज्ञातं तदाऽस्याऽऽशौचस्य तत्परिच्छेदकत्वयोग्यस्य निमित्तोत्तरदशाहादिदि-

---

* इदानीमाशौचकालमध्ये विदिताशौचस्य शुद्धिरेकादशवृत्तेनाऽऽह–सर्वं त्वाशौचमिति । सर्वमिदमाशौचं यद्याशौचान्तर्मध्य एव विदितं भवति तदा शेषमात्रेण शुद्धिः, दशाहमध्ये यावन्त्यवशिष्टानि दिनानि तावन्मात्रेण शुद्धिर्नतु ज्ञानदिनाद्यारभ्येत्यर्थः । 'एवं त्रिदिनाद्याशौचेऽपि द्रष्टव्यम् । प्रोषिते कालशेषः स्यादिति याज्ञवल्क्यस्मरणात् । आहिताग्नौ साग्निके मृत इदमाशौचं दाहाहाद्दाहदिवसतो दशादिनं कुर्यान्न पुनर्मरणदिवसतः । अन्यत्रानाहिताग्नौ तु मरणदिवसतः कुर्यान्नतु दाहदिवसतः । ' अनग्निमत उत्क्रान्ते साग्नेः संस्कारकर्मणः ' इति श्रवणादाहिताग्नौ पितरि देशान्तरमृते तत्पुत्रादीनामासंस्कारात्संध्यादिकर्मलोपो नास्तीत्यनुसंधेयम् । साग्नेः संस्कारकर्मणः, शुद्धिः संचयनं दाहान्मृताहस्तु यथाविधीत्यङ्गिरोवचनात् । आशौचान्ते यत्कृत्वा शुचिर्भवति तदाह–पूर्णे स्नात्वेति । पूर्णे आशौचे सचैलं सवस्त्रं यथा भवति तथा स्नात्वा विहितकृतौ वेदोक्तस्वाधिकारिके देवपितृकार्येऽर्हका योग्याः स्युर्ज्ञातय इति शेषः । सूतिकाया विशेषमाह–सूतिका त्विति । सूतिका तु पुनस्त्रिंशद्रात्रं विहितहितकृतौ पितृसुरकार्ये योग्या न, शुद्धा न भवतीत्यर्थः । एतत्कन्याप्रसवे । पुत्रप्रसवे तु विशेषमाह— विंशतिं पुत्रसूरिति । पुत्रजननी तु विंशद्रात्रमुभयकार्ये योग्या न भवतीत्येवान्वयः । 'सूतिकां पुत्रवतीं विंशद्रात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीम् ' इति पैठीनसिस्मरणात् ।

+ संपूर्णं दशाहादि । असंपूर्णं त्र्यहादि ।

× अन्तरिति । मध्य इत्यर्थः । तत्र मध्यत्वस्य पूर्वपरोभयसापेक्षत्वाज्ज्ञायमाननिमित्तप्रयोज्याशौचपरिच्छेदकदिनसंघातमध्ये प्रथमदिनातिरिक्तेषु द्वितीयादिदिनेष्विति यावत् ।

नसंघातस्य यः* शेषस्तन्मात्रेण शुद्धिः । नतु ज्ञानादारभ्य दशरात्र-त्रिरात्रादिनेत्यर्थः । तथा च याज्ञवल्क्यः—+ प्रोषिते कालशेषः स्यादिति । विदितग्रहणेन ज्ञातयोर्जननमरणयोराशौचनिमित्तत्वं नतु जातमात्रयोरिति दर्शयति । तच्चैतदारम्भसामर्थ्यादेव सिध्यति । अन्यथाऽऽशौचादिनगणनाया उत्पत्तिप्रभृतिकत्वात्तदन्तर्निमित्तज्ञाने शेषदिनान्याशौचमर्थादेव भवतीतीदमनारम्भणीयं स्यात् । = आशौचप्रवृत्तिदिनमाह—

**दाहाद्दाहिताग्नौ मरणदिवसतोऽन्यत्र कुर्याद्दशाहम् ।**

आहिताग्नौ श्रौताग्निमति नष्टे दाहाद्दाहदिवसमारभ्य दशाहाद्याशौचं

---

* शेषस्तन्मात्रेणेति । दशाहादिमध्ये यान्यवशिष्टदीनानि तावन्मात्रेणैवेत्यर्थः ।

+ प्रोषित इति । 'प्रोषिते कालशेषः स्यात्पूर्णे दत्त्वोदकं शुचिः' इति मिताक्षराकृद्विज्ञानेश्वरधृतपाठः। अस्य तत्कृता व्याख्या त्वित्थम्—प्रोषिते देशान्तरस्थे यत्रस्थेन प्रथमदिवस एव सपिण्डजननादिकं न ज्ञायते तस्मिन्सपिण्डे कालस्य दशाहाद्यवच्छिन्नस्य यः शेषोऽवशिष्टकालः स एव शुद्धिहेतुर्भवति । पूर्णे पुनराशौचकाले दशाहादिके प्रेतायोदकं दत्त्वा शुद्धिर्भवति । उदकदानस्य स्नानपूर्वकत्वात्स्नात्वोदकं दत्त्वा शुचिर्भवति । इति । 'प्रोषिते कालशेषः स्यादशेषे त्र्यहमेव च । सर्वेषां वत्सरे पूर्णे प्रेते दत्त्वोदकं शुचिः' इत्यपरार्काङ्गीकृतपाठः । तत्कृता व्याख्या चेत्थम्—प्रोषिते देशान्तरस्थे सपिण्डे मृते दशरात्राद्याशौचकाले चानतिक्रान्ते श्रुते दशरात्रैः शेषं यावदाशौचं भवति । अशेषेऽतिक्रान्ते दशरात्रादौ यदि तन्मरणं श्रुतं तदा त्रिरात्रमाशौचं सर्वेषां सपिण्डानाम् । यदि वत्सरे पूर्णे तच्छ्रुतं तदा प्रेतायोदकं दत्त्वा शुचिर्भवतीति । एवं च दशरात्रोत्तरं विज्ञानेश्वरः स्नानमाह । अपरार्कस्तु दशरात्रोत्तरं संवत्सरपर्यन्तं त्रिरात्रमुक्त्वा ततः स्नानमनुशास्ति । तथा गौतमः 'श्रुत्वा चोर्ध्वं दशम्याः पक्षिणीम्' इति दशरात्रादूर्ध्वं देशान्तरस्थमरणे पक्षिणीं विदधाति । वसिष्ठः पुनः 'देशान्तरस्थे प्रेत ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्रमाशौचम्' इत्यहोरात्रमाशौचं प्रतिपादयति । तथा च दशरात्राद्युत्तरं त्रिरात्रपक्षिण्येकाहस्नानानां परस्परविरुद्धानामव्यवस्थया प्राप्तौ शास्त्रस्य निर्णयजनकत्वौचित्येन त्रिपक्षषण्मासंवत्सरतदूर्ध्वकालैर्व्यवस्थितिरेषितव्या । अन्यथा शास्त्रस्य निर्णयजनकत्वलक्षणशास्त्रत्वस्यैवोच्छेदापत्तेः । व्यवस्थितिश्च देवलेन प्रदर्शिता—आ त्रिपक्षात्त्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः । परमेकाहमा वर्षादूर्ध्वं स्नातो विशुध्यति ॥ इति ।

= आशौचेति । अस्य 'आहिताग्निमरणे' इत्यादिः ।

तन्निमित्तकं च संध्यावन्दनलोपादि कुर्यात् । अन्यत्र तद्भिन्ने स्मार्ताग्निमति * त्यक्ताग्न्यादौ च विनष्टे मरणदिवसतस्तत्प्रभृत्येवाऽऽशौचं कुर्यात् । तथा च पैठीनसिस्मरणम्—

अनाग्निमत उत्क्रान्तेराशौचादि द्विजातिषु ।
दाहादग्निमतो विद्याद्विदेशस्थे मृते सति ॥ इति ।

अत्राग्निमत इति यद्यपि सामान्येनोक्तं तथाऽपि 'दाहाद्येव तु कर्तव्यं यस्य वैतानिको विधिः' इति वाक्यान्तरा+द्बह्वग्निक एव

* विच्छिन्नाग्नेस्त्वदृष्टद्वाराऽग्निमत्त्वेन, तस्य पुनराधानाम्नानात् । उत्सृष्टाप्रतिपन्नाग्नीनां तु न तथात्वम् । विधुरस्यापूर्वाधानाम्नानादित्यभिप्रेत्याऽऽह—त्यक्ताग्न्यादौ चेति । आदिपदग्राह्यो निरग्निकः ।

+ बह्वग्निक इति । बहवोऽग्नयो यस्येति बहुव्रीहिः । शेषाद्विभाषेति वैकल्पिकः समासान्तः कप् । श्रौते हि दक्षिणाग्निर्गार्हपत्याग्निराहवनीयाग्निरित्येवंनामकास्त्रयोऽग्नयो भवन्ति । तादृशबह्वग्निक एवाग्निमत्पदेन गृह्यते । 'दाहाद्येव तु कर्तव्यं यस्य वैतानिको विधिः' इति वाक्यान्तरानुरोधादित्यर्थः । तदर्थस्तु-वितानोऽग्नीनां विस्तारः । तत्र भवो वैतानिकः । अध्यात्मादिष्ठञ् । विस्तारश्चाग्नीनां बहुत्वसंख्याश्रयत्वम् । एवं च यस्य त्रेताग्निसाध्योऽग्निहोत्रदर्शपूर्णमासादिर्विधिः क्रियाकलापो विधीयते तस्याऽऽशौचादिकं दाहमादिं कृत्वैव कार्यम्, नतु मरणमादि कृत्वेत्यर्थः । दाहाद्येवेत्येवकारेण मरणरूपमादिं व्यावर्तयति, इति । इति वाक्यार्थैकवाक्यार्थत्वाद्बह्वग्निकोऽग्निमत्पदेनोद्दिश्यत इति यावत् । तत्प्रतिद्वंद्विनाऽनग्निमत्पदेनापि बह्वग्निमद्भिन्न एव गृह्यत इत्यर्थात्सिध्यति । तत्र यस्त्रेताग्निमान्सन्नपि येन केनचिन्निमित्तेन यस्य केवलमग्नयो विच्छिन्नाः स विच्छिन्नाग्निरित्युच्यते । अग्निहितोऽपि स नानग्निमत्पदेन गृह्यते । तस्य पुनराधानविधिसामर्थ्याददृष्टद्वारा तादृशाग्निसंबन्धवत्त्वकल्पनात् । यः पुनस्त्रेताग्निमान्भार्यामरणेन नष्टाग्निः स उत्सृष्टाग्निः । तस्य न पुनराधानं विहितं, किंतु विधुराधानं नामापूर्वमेवाऽऽधानं विधीयते । तथा च श्रुतिः—'अपत्नीकोऽप्यग्निहोत्रमाहरेत्' इति । स्मृतिरपि—'मृतायामपि भार्यायां वैदिकाग्निं नहि त्यजेत् । उपाधिनाऽपि तत्कर्म यावज्जीवं समाचरेत्' । उपाधिना हेमकुशपत्न्यादिना त्रेताग्निसाध्यं कर्म यावज्जीवं समाचरेदिति तदर्थः । एवमन्येऽप्यपत्नीकस्याऽऽधानमाहुः । अन्ये तु निरुक्तानि श्रुतिस्मृत्यादीनि न विधुराधानविधानपराणि, किंतु पूर्वाग्निष्वेवाग्निहोत्रादिपराणीत्याहुः । तेषामयमभिप्रायः—भार्यामरणे तां न श्रौताग्निभिर्दहेत्, किंतु निर्मन्थ्येन श्रौताग्न्येकदेशेन वा

दहेत् । तदुक्तं भारद्वाजेन—पुनर्विवाहाशक्तौ यदग्न्याधेयं पूर्वं कृतमस्ति तदा-त्मार्थमेव न पत्न्यै दद्यादित्यर्थकं 'दारकर्माणि यद्यशक्त आत्मार्थमग्न्याधेयम्' इति सूत्रम् । एवं च पूर्वावस्थितेष्वेव तेष्वग्निहोत्रादिकं कर्तव्यं न विधुराधानं नाम किंचिदपूर्वाधानमस्तीति । अत एव 'अपत्नीकस्याऽऽधानाप्रवृत्तिः' इति मानवपरिशिष्ट उक्तम् । एवं च विधुरविषय आधानविधिविकल्पः फलति । स च व्यवस्थितः । एवंवृत्तां सवर्णां स्त्रीं द्विजातिं पूर्वमारिणीम् । दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥ इत्यादिवचनानुसारेण येन भार्यादहनार्थं त्रयोऽग्नयस्त्यक्तास्तादृशविधुरविषयक आधानविधिः । आत्मार्थमवस्थापितात्रिविधुरविषयको निषेध इति । तत्रानेन टीकाकृता विधुराधानपक्षोऽङ्गीकृतः । तथा च येन श्रौताग्निमता पूर्वमृतपत्नीदाहनिमित्तमग्नयः समर्पिताः स उत्सृष्टाग्निरत्यक्ताग्निरिति चोच्यते । एवमुत्सृष्टाग्निना सता येन पूर्वोक्तं विधुराधानं न संपादितं स उत्सृष्टाप्रतिपन्नाग्निरिति व्यवहारः । सोऽयमुत्सृष्टाप्रतिपन्नाग्निर्नाग्निमत्पदेन गृह्यते । तस्य सर्वथा बह्वग्निसंबन्धाभावात् । न चोत्सृष्टाप्रतिपन्नाग्नेः साक्षादग्निसंबन्धाभावेऽपि विच्छिन्नाग्नेरिवादृष्टद्वाराऽग्निमत्त्वैवेति कथं तस्य नाग्निमत्पदेन ग्रहणमिति वाच्यम् । केवलाग्निविच्छेदात्प्राग्यादृशपत्नीसंसर्गसहकृतमाधानमासीत्तादृशमेवाऽऽधानं विच्छेदनिमित्तेन तस्य पुनर्विधीयते । उत्सृष्टाग्नेस्तु कुशहेमाद्यपूर्वपत्नीसंसर्गसहकृतमाधानं विधीयते । इदमेव तत्रापूर्वत्वं यत्कुशहेमादिविलक्षणपत्नीसंसर्गप्रयुक्तत्वम् । विलक्षणपत्नीसंसर्गसहकृतत्वादेव च विधुराधानमिति गीयते । यदि चैतौ विच्छिन्नाग्न्युत्सृष्टाग्नी अदृष्टद्वाराऽग्निमन्तौ समौ कल्प्येयातां तदा पुनराधानमपूर्वाधानमिति संज्ञाभेदेनाऽऽधानविधानमनुपपन्नं स्यात् । तस्मान्न विच्छिन्नाग्न्युत्सृष्टाग्नी समौ कल्पनीयौ । किंतु तयोर्मध्येऽवश्यं भेदो वक्तव्यः । स च भेदो विच्छिन्नाग्नावदृष्टद्वाराऽग्निमत्त्वोत्सृष्टाग्नौ तु न सेति । न च विपर्ययः किं न स्यादिति वाच्यम् । विच्छिन्नाग्नेः पुनराधानं विहितम् । तस्यायमाशयः—विच्छिन्नाग्नावग्निमत्ता विद्यत एव । किंतु विच्छेदेन तिरोहितत्वाददृष्टा । तत्प्रकाशनार्थमाधानं विधीयते । तत्प्रकाशनं च पूर्वाधानेनोतापूर्वाधानेन कर्तुमर्हमिति वीक्षायां पूर्वाधानेनैव कर्तुमुचितमिति तत्र पुनराधानापरपर्यायं पूर्वाधानमेव विधीयत इति । उत्सृष्टाग्नौ तु तादृश्यप्यग्निमत्ता नास्तीत्यपूर्वैवाग्निमत्ता प्रकाशनीया भवति । सा च न पूर्वाधानेन प्रकाशयितुमर्हति, किंत्वपूर्वाधानेनैवेति तत्रापूर्वाधानमेव विधीयते । एवं च विच्छिन्नाग्नौ पुनराधानविधानसामर्थ्याददृष्टद्वाराऽग्निमत्ता कल्प्यते । उत्सृष्टाग्नौ तु सर्वथाऽप्यग्निमत्ता नास्तीत्यपूर्वाधानविधिसामर्थ्यादेव कल्पनीयं भवतीत्यर्थः । तथा चाग्निमत्पदेन साक्षाददृष्टद्वारा वा बह्वग्निसंबन्धवान्गृह्यते । साक्षाद्बह्वग्निसंबन्धश्च द्वेधा—मानुषीभार्यासंसर्गप्रयुक्तो

गृह्यते । * आदिशब्देन तन्निमित्तकं संध्यावन्दनत्यागादि गृह्यते त्रैप-क्षिकपर्यन्तं प्रेतकार्यं च ।

+ पूर्णे स्नात्वा सचैलं विहितहितकृतावर्हकाः ।

येषां यावानाशौचकाल उक्तो वक्ष्यते च ते सर्वे ब्राह्मणादयस्त-स्मिन्काले पूर्णे सति सचैलं स्नात्वा विहितस्य दैवपित्र्यस्यादृष्टार्थस्य हितस्य च दृष्टार्थस्य कृतावनुष्ठानेऽर्हका योग्या भवन्ति नतु काल ×-मात्रातिक्रमेण । एवं च कालस्नानापनो⊙द्यातिशयविशेषवत्त्वमाशौ-चलक्षणमुक्तं भवति । जलस्पर्शनादिकं तु वर्णविशेषविषयत्वान्नोक्तं तदपि द्रष्टव्यम् । तथा च मनुः—

विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् ।
वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः ॥ इति ।

कृतक्रियः कृतसचैलस्नानक्रियः ।

= सूतिका तु त्रिंशद्रात्रं न योग्या पितृसुरकरणे
विंशतिं पुत्रसूस्तु ।

---

विलक्षणभार्यासंसर्गप्रयुक्तश्चेति भेदात् । अनग्निमत्पदेन चोत्सृष्टाग्निर्गृह्यते न पुनर्वि-च्छिन्नाग्निर्नापि वोत्सृष्टप्रतिपन्नाग्निः । आद्येऽग्नित्यागस्यैवाभावात् । द्वितीये त्वग्नित्याग-सत्त्वेऽपि पुनरग्निस्वीकरणेन त्यागाभावस्यैव फलितत्वादिति बोध्यम् । 'मरणादि-वसतोऽन्यत्र' इत्यत्रत्यान्यत्रेतिपदव्याख्यानावसरे त्यक्ताग्न्यादौ चेति त्यक्ताग्निपदं निवेशयतो भट्टरघुनाथस्याप्ययमाशयो लक्ष्यते । परंतु नैवं स्पष्टमन्यत्रोपलभ्यते । धार्ष्ट्येन मयोक्तो युक्तश्चेद्ग्राह्यो नो चेत्क्षन्तव्यम् । तथा चाग्निमत्पदेन प्राथमिकलौ-काग्निमान्विच्छिन्नाग्निमानुत्सृष्टप्रतिपन्नाग्निमांश्चेति त्रयो गृह्यन्ते । अनग्निमत्पदेन चापि स्मार्ताग्निमानुत्सृष्टाप्रतिपन्नाग्निमान्निरग्निकश्चेति त्रय एव गृह्यन्ते इति यावत् । नास्ति-क्यादिना त्यक्ताग्नेस्तूत्सृष्टाप्रतिपन्नाग्नावेवान्तर्भाव इति भावः ।

* आदीति । 'आशौचादि द्विजातिषु' इति पैठीनसिवाक्यस्थेनाऽऽदिशब्देनेत्यर्थः ।

+ आशौचान्ते यत्कृत्वा शुद्धो भवति तदाह—पूर्ण इति ।

× मात्रातीति । केवलं दशाहाद्याशौचकालापगमः शुद्धिप्रयोजको न भवति । नापि केवलं स्नानम् । किंत्वाशौचान्तिमक्षणविशिष्टतदुत्तरकालिकं स्नानं शुद्धिप्रयोजक-मित्यर्थः ।

⊙ अपनोद्येति । एतदुत्तरं कर्मानधिकारित्वाभोज्यान्नत्वास्पृश्यत्वपिण्डोदकदानवि-धिप्रयोजकेत्यपि पूरणीयम् ।

= सूतिकाया विशेषमाह—सूतिका त्विति ।

पुत्रस्वामपश्चादस्य वक्ष्यमाणत्वात्कन्याप्रसूः सूतिका दशरात्रादिना ऽऽशौचस्य स्पर्शप्रतिबन्धकशक्तौ नष्टायामपि कर्माधिकारप्रतिबन्धकशक्तेर्विद्यमानत्वात्त्रिंशद्रात्रं पितृसुरकार्ये न योग्या। * पुत्रसूस्तु विंशतिरात्रं न योग्या। तदुत्तरं स्नात्वा योग्या। + तथा च पैठीनसिः—सूतिका पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीमिति। आशौचे नष्टे निर्निमित्तकर्मानधिकारासंभवादाशौचमेव तावत्पर्यन्तमिति बहवः। केचिदाशौचे गतेऽपि वचनात्पतितादिवत्कर्मानधिकारमात्रमित्यपि वदन्ति॥ ११॥

=निर्हृत्यान्यं प्रमीतं दिवसमशुचिकोऽथासवर्णं तदुक्ता-
शौचोऽथानाथमाद्यक्रतुशतफलभागाप्लुवेनैव शुध्येत्।
नीत्वोपाध्यायमातापितृपरमगुरून्ब्रह्मचारी न दोषी
तेभ्योऽन्यं निर्हृतोऽस्य व्रतमपि विततं भ्रश्यतेऽवश्यमेव॥ १२॥

अन्यं सवर्णमसपिण्डं प्रेतं स्नेहादिना निर्हृत्योद्वाह्य दिवसमहोरात्रमशुचिर्भवेत्। एतच्च मृतपुत्रादिस्वामिकान्नाभोजिनस्तद्गृहावासिनस्तद्ग्राम·

---

* पुत्रप्रसवे विशेषमाह—पुत्रसूरिति।

+ एतद्विषये आर्षं प्रमाणं दर्शयति—तथा च पैठीनसिरिति।

=इदानीमसपिण्डसवर्णमरणे तस्य निर्हरण आशौचं द्वादशवृत्तेनाऽऽह—निर्हृत्येति। निर्हृत्येत्यत्रान्यमसपिण्डं सवर्णं निर्हृत्य दिवसमशुचिर्भवति। एतदहोरात्रमतद्गृहवासिनोऽतदन्नभोजिनश्च ज्ञेयम्। तद्गृहवासिनस्तदन्नमखादतस्त्रिरात्रं तदन्नाशिनस्तु दशरात्रमिति ज्ञेयम्। असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्। विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्॥ यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति। अनदन्नन्नमह्नैव न चेत्तस्य गृहे वसेत्॥ इति मनुः। अथासवर्णं स्नेहवशान्निर्हृत्य तदुक्ताशौचो यज्जातीयस्य निर्हरणं तस्मायुक्तमाशौचं यस्य सः। तथा हि—ब्राह्मणश्चेच्छूद्रं निर्हरेत्तदा मासमशुचिः। तथा शूद्रश्चेद्ब्राह्मणं तदा दशाहमित्यादि ज्ञेयम्। एवमवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र तच्छवोक्तमाशौचमिति वचनात्। अत्र निर्हरणोपस्पर्शशब्दाभ्यां प्रेतवहनं लक्ष्यते। एतस्याप्यपवादमाह—अथानाथमिति। अनाथं प्रेतं निर्हृत्याऽऽद्यक्रतुशतफलभाग्भवेत्। आद्यक्रतुर्ज्योतिष्टोमः। आप्लुवेनैव शुध्येत्। स्नानमात्रेण शुद्धो भवेत्। एवकारेण स्नानानन्तरमाशौचनिवृत्तिः प्रतिपादिता। अथ ब्रह्मचारिणो विशेषमाह—नीत्वेति। उपाध्यायादीन्नीत्वा निर्हृत्य ब्रह्मचारी न दोषी दोषभाग्न भवेत्। ब्रह्मचारी व्रतान्न भ्रश्यत इति।

वासिनश्च द्रष्टव्यम् । यस्तु निर्हरणं कृत्वा तत्स्वामिकं सिद्धमसिद्धं वाऽन्नमश्नाति तद्गृहे च वसति तस्य निर्हरणीयजातिप्रयुक्तं दशाहाद्या-शौचम् । यस्तु निर्हृत्य तद्गृहवासमेव करोति तस्य त्रिरात्रम् । तथा च मनुः—

* असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥
यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति ।
अनदन्नन्नमह्नैव न चेत्तस्मिन्गृहे वसेत् ॥ इति ।

बन्धुवदिति स्नेहादिनेत्यर्थः । यश्च ग्रामान्तरवासी तस्य सज्योतिः । प्रेतस्पृशो ग्रामं न विशेयुरा नक्षत्रदर्शनाद्रात्रौ चेदादित्यस्येति हारीतस्मरणात् । भृतिग्रहणेन सवर्णशवनिर्हरणे तु तदन्नभोजनाद्यभावेऽपि तज्जात्याशौचं भवति ।

यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः ।
दशाहेन द्विजः शुध्येद्द्वादशाहेन भूमिपः ॥
अर्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति । इति कूर्मपुराणात् ।

## + अथासवर्णं × तदुक्ताशौचः ।

अथासवर्णं ब्राह्मणादिः क्षत्रियादिशवं निर्हृत्य तदुक्तं निर्हरणीय-

---

अन्यनिर्हरणे दोषमाह—तेभ्योऽन्यमिति । तेभ्य उपाध्यायादिभ्योऽन्यं निर्हृतोऽन्यनिर्हरणं कुर्वतोऽस्य ब्रह्मचारिणो विततं विस्तृतं चिरार्जितमिति यावत् । व्रतमप्यवश्यं भ्रश्यति । ब्रह्मचर्याच्च्युतो भवतीत्यर्थः ।

* असपिण्डं द्विजमिति । इति मनुवचनाभ्यां निर्हरणप्रयोज्यं त्रिरात्रं दशरात्रमेकरात्रं चाऽऽशौचमिति प्रतीयते । तत्रेत्थं व्यवस्था बोध्या—यः स्नेहादिना शवनिर्हरणं कृत्वा तदीयमेवान्नमश्नाति तद्गृहे च वसति तस्य दशाहेनैव शुद्धिः । यस्तु केवलं तद्गृहे वसति न पुनस्तदन्नमश्नाति तस्य त्रिरात्रेण शुद्धिः । यः पुनर्निर्हरणमात्रं करोति न तद्गृहे वसति न च तदन्नमश्नाति तस्यैकाहेन शुद्धिरिति ।

\+ अथासवर्णप्रेतनिर्हरणप्रयुक्तमाशौचं विवक्ते—अथासवर्णमिति ।

× तदुक्ताशौच इति । तस्मा उक्तं तदुक्तम् । तदुक्तमाशौचं यस्य तदुक्ताशौचः। असवर्णशवनिर्हारकोऽन्यपदार्थः । यज्जातीयः शवस्तज्जातीयस्य यदुक्तमाशौचं 'क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु । त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः' इत्यादि तदाशौचमाक्तज्जातीयशवनिर्हारको भवतीत्यर्थः ।

जातिप्रयुक्तमाशौचं यस्य तादृशो भवेदवि=शेषेण । *ब्राह्मण शूद्रनिर्हारे त्रिंशद्दिनानि, शूद्रो ब्राह्मणनिर्हारे दश दिनानीत्येवमित्यर्थः । तथा च गौतमः—'अवरश्चेद्वर्णः पूर्ववर्णमुपस्पृशेत्पूर्वो वाऽप्यवरं तत्र तच्छवोक्तमाशौचम्' इति । उपस्पृशेन्निर्हरेत् । भृत्याऽसवर्णनिर्हारे त्वेतद्द्विगुणम्—

अवरश्चेद्वरं वर्णं वरो वाऽप्यवरं यदि ।
वहेच्छवं तदाऽऽशौचं दृष्टार्थे द्विगुणं भवेत् ॥

इति व्याघ्रपादवचनात् । यदा त्वलंकरणमपि करोति तदा—

कृच्छ्रपादो सपिण्डस्य प्रेतालंकरणे कृते ।
अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते ॥

इति शङ्खोक्तं प्रायश्चित्तं च कुर्यात् ।

+ अथानाथमाद्य×क्रतुशतफलभागाप्लवेनैव शुध्येत् ।

अथानाथं स्नेहाद्यभाजनं सवर्णमसवर्णं वा द्विजप्रेतं द्विजो धर्मेण निर्हृत्याऽऽद्यक्रतूनामग्निष्टोमानां शतस्यापरिमितानां तेषां फलं भजति । तादृशः सन्ना=प्लवेनैव शुध्येत् । तथा च पराशरः—

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलमनुपूर्वं लभन्ति ते ॥
न तेषामशुभं किंचित्पापं वा शुभकर्मणाम् ।
जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥ इति ।

यज्ञश्चात्र प्राथम्यादग्निष्टोम एवेत्यभिप्रेत्याऽऽद्यक्रत्वित्युक्तम् । अयं चार्थवादः । आप्लवग्रहणं प्राणायामाग्निस्पर्शयोरुपलक्षणम् । तथा च पराशरः—

असगोत्रमबन्धुं च प्रेतीभूतं द्विजोत्तमम् ।
वहित्वा च दहित्वा च प्राणायामेन शुध्यति ॥ इति ।

---

= अविशेषेणेति । तदन्नभोजनतद्गृहवासरूपविशेषानादरेणेत्यर्थः ।

* 'अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र तच्छवोक्तमाशौचम्' इति गौतमवचनं मनसि कृत्वाऽऽह—ब्राह्मण इत्यादि । उपस्पर्शनं निर्हरणम् ।

× निर्हरणप्रयुक्तस्याप्यशौचस्यापवादमाह—अथानाथेति ।

* आद्येति । आद्यक्रतुर्ज्योतिष्टोमः । अग्निष्टोम इति तत्पर्यायः ।

= आप्लवेनैवेति । आप्लवः स्नानम् । स्नानमात्रेणैव शुद्धो भवेत् । एवकारेण स्नानानन्तरमाशौचनिवृत्तिः प्रतिपादितेति बोध्यम् ।

इडश्च च्छान्दसः । अङ्गिरा अपि—

यः कश्चिन्निर्हरेत्प्रेतमसपिण्डः कथंचन ।
स्नात्वा सचैलः स्पृष्ट्वाऽग्निं तस्मिन्नेवाह्नि वै शुचिः ॥ इति ।

अत्र ब्राह्मणद्विजोत्तमग्रहणमुपलक्षणम् । मृतं द्विजं न शूद्रेण हारयेन्न शूद्रं द्विजेनेति विष्णुस्मृतौ शूद्रमात्रस्य कर्तृत्वेन कर्मत्वेन च निषेधात् । न विप्रं स्वेषु तिष्ठत्स्विति मानवेऽपि विप्रग्रहणमुपलक्षणम् । शूद्रसंस्पर्शदूषितेति सामान्येन दोषश्रवणात् ।

* नीत्वोपा×ध्यायमातापितृपरमगुरून्ब्रह्मचारी न दोषी ।

परमगुरुरा+चार्यः । एतानुपाध्यायादीन्नीत्वा निर्हृत्य ब्रह्मचारी न दोषी व्रतलोपानिषेधातिक्रमनिमित्तप्रत्यवायरूपदोषवान्न भवति । तेन लुप्तव्रतसंधानार्थं पुनरुपनयनं प्रत्यवायपरिहारार्थं प्रायश्चित्तं च न कुर्यात् । आशौचं तु निर्हरणनिमित्तं पूर्वोक्तव्यवस्थया कुर्यादेवेत्यर्थः । तथा च मनुदेवलौ—

= आचार्यं स्वमुपाध्यायं मातरं पितरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतं न व्रतेन वियुज्यते ॥ इति ।

---

* उपाध्यायादीन्निर्हरतो ब्रह्मचारिणो विशेषमाह—नीत्वेति ।

× उपाध्यायेति । 'वेदस्यैकदेशं मन्त्रब्राह्मणयोरेकमङ्गानि वा योऽध्यापयति स उपाध्यायः' इति मिताक्षरोक्तलक्षण उपाध्यायः । मातापितरौ प्रसिद्धौ ।

+ आचार्य इति । 'उपनीय ददद्वेदमाचार्यः स उदाहृतः' यः पुनरुपनयनमात्रं कृत्वा वेदं प्रयच्छति स आचार्य इत्युक्तलक्षण आचार्यः ।

= आचार्यं स्वमिति । अस्यार्थः—उपनयनपूर्वकं संपूर्णशाखाध्यापयिताऽऽचार्यः । वेदैकदेशस्याङ्गस्य वाऽध्यापक उपाध्यायः । वेदस्य वेदानां चैकदेशस्यापि व्याख्याता गुरुः । मातापितरौ प्रसिद्धौ । स्वमाचार्यं स्वमुपाध्यायमित्येवं रीत्या स्वमिति सर्वत्र संबध्यते । निर्हृत्येति तु निर्हरणदाहादिसकलप्रेतकृत्यस्य प्रदर्शनार्थम् । आचार्यादीन्पञ्च मृतान्निर्हृत्य ब्रह्मचारी न लुप्तव्रतो भवति । एवं चाऽऽचार्यादिभ्यः पञ्चभ्योऽन्यं निर्हरतोऽस्य ब्रह्मचारिणो व्रतलोपो भवतीत्यर्थादुक्तं भवति । तथा च देवदत्तस्य गुरोरपि निर्हरणे मैत्रब्रह्मचारिणो व्रतलोपो भवेदेव । स्वमित्युक्तत्वेन देवदत्तनिरूपितगुरुत्वेऽपि मैत्रनिरूपितगुरुत्वाभावादिति बोध्यम् । नन्वेवं स्वगुरोर्गुरोरपि निर्हरणे दोषः प्रसज्येत । स्वगुरुनिरूपितगुरुत्वेऽपि तत्र स्वनिरूपितगुरुत्वाभावात् । न च गुरोर्गुरौ साक्षात्स्वनिरूपितगुरुत्वाभावेऽपि स्वगुरुद्वारा परम्परया स्वनिरूपितगुरुत्वाक्षतेर्न दोष इति वाच्यम् । तथा सति स्वोपाध्यायोपाध्यायेऽपि परम्परया

* तेभ्योऽन्यं निर्हृतोऽस्य व्रतमपि विततं भ्रश्यतेऽवश्यमेव ।

उपाध्यायादिभ्योऽन्यं निर्हृतो निर्हरतोऽस्य ब्रह्मचारिणो विततं व्रतमवश्यमेव भ्रश्यते । तेन पुनराधानवद्भ्रष्टब्रह्मचर्यसंधानार्थं पुनरुपनयनं कुर्यात् । अपिशब्दात्प्रायश्चित्तमाशौचं च । तथा च देवलः—

ब्रह्मचारी न कुर्वीत शववाहादिकाः क्रियाः ।
यदि कुर्याच्चरेत्कृच्छ्रं पुनः संस्कारमेव च ॥ इति ।

=अत्राऽऽदिशब्देनालंकरणादिकमेव गृह्यते न तु दाहादि । तत्र गुरुप्रायश्चित्तस्य वक्ष्यमाणत्वात् ॥ १२ ॥

+तुल्योत्कृष्टानुयाने वसनसहितकोऽम्भस्यवप्लुत्य वह्निं
स्पृष्ट्वाऽऽज्यं प्राश्य शुध्येदथ दिनमशुचिर्हीनवर्णानुयाने ।
पक्षिण्येकान्तरानुव्रजन इह भवेद्द्व्यन्तरत्वे त्रिरात्रं
कृत्वा स्नात्वा सुनयामसुयमनशतं सर्पिराशं च कुर्युः ॥ १३ ॥

---

स्वोपाध्यायत्वस्य सुवचत्वेन तन्निर्हरणेऽपि दोषाभावापत्तेः । न चेष्टापत्तिः । गुर्वाचार्यादिशब्दानां निरूपितार्थप्रतिपादकत्वेन निरूपकाकाङ्क्षायां प्रत्यासत्त्या निर्हरणकर्तृरूपस्य निरूपकस्य जिघृक्षितस्य लाभे सिद्धे पुनः स्वशब्दोपादानसामर्थ्यात्सर्वेनाम्नां प्रधानपरामर्शित्वेन साक्षान्निरूपकस्यैव ग्रहणस्येष्टत्वात् । साक्षात्परम्परासाधारण्येन निरूपकग्रहणे हि स्वमाचार्यं स्वमुपाध्यायं स्वं गुरुमिति सर्वत्र स्वशब्दोपादानस्वारस्यभङ्गापत्तेः । न चैवं स्वगुरुगुरुनिर्हरणे दोषस्तदवस्थ एवेति वाच्यम् । 'गुरोर्गुरौ संनिहिते गुरुवद्वृत्तिमाचरेत्' इति वचनेन गुरोर्गुरौ स्वगुरुत्वातिदेशेन प्रशिष्ये साक्षान्निरूपकत्वस्यैव सत्त्वेन दोषाभावाद्गुरोर्गुरुं निर्हरतो ब्रह्मचारिणो व्रतलोपो न भवतीति । एवं तुल्यन्यायादाचार्याचार्यमपि निर्हृत्य न व्रतलोप इति बोध्यम् ।

* पूर्वोक्ताचार्यादिव्यान्यनिर्हरणे दोषमाह—तेभ्योऽन्यमिति । निर्हृत इति क्विबन्तस्य तुकि षष्ठ्यन्तम् । विततं विस्तृतं चिरार्जितमिति यावत् । व्रतमप्यवश्यं भ्रश्यते । 'ब्रह्मचारिणः शवकर्मणा व्रतान्निवृत्तिरन्यत्र मातापित्रोर्गुरोर्वा' इति वसिष्ठस्मरणादिति भावः ।

= आदीति । 'ब्रह्मचारी न कुर्वीत शववाहादिकाः क्रियाः' इति वाक्यस्थेनाऽऽदिशब्देनेत्यर्थः ।

+ एवं निर्हरणाशौचमुक्त्वेदानीमनुगमनाशौचं त्रयोदशवृत्तेन कथयति—तुल्योत्कृष्टेति । तुल्यानुयानं ब्राह्मणस्य ब्राह्मणानुयानं क्षत्रियस्य क्षत्रियानुयानम् । एवं

तुल्यस्य सवर्णस्योत्कृष्टवर्णस्य वाऽसपिण्डस्यानुयाने वसनसहितोऽम्भस्यनुद्धृतेऽवप्लुत्य स्नात्वा वह्निं स्पृष्ट्वाऽऽज्यं प्राश्य शुध्येत् । तथा च याज्ञवल्क्यः—

ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित् ।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक्शुचिः ॥ *इति ।

अत्र च ब्राह्मणशूद्रद्विजग्रहणमुपलक्षणम्+ । सर्वत्राऽऽशौचस्यो-

---

वैश्यादेरपि स्वस्ववर्णानुयानम् । उत्कृष्टानुयानं तु क्षत्रियस्य ब्राह्मणानुयानम् । वैश्यस्य क्षत्रियब्राह्मणानुयानम् । शूद्रस्य वैश्यक्षत्रियब्राह्मणानुयानमिति बोध्यम् । द्वंद्वान्ते श्रुतस्यानुयानशब्दस्य प्रत्येकं संबन्धात्तुल्यानुयान उत्कृष्टानुयाने चेत्यर्थः । तस्मिन्कृते सति वसनसहितः सवस्त्रोऽम्भसि नद्यादावाप्लुत्य स्नात्वा वह्निं स्पृष्ट्वा घृतं पीत्वा विशुध्यति । प्रसिद्धमेतद्वाक्यानुकथनम् । हीनानुगमनाशौचमाह—अथ दिनमिति । ब्राह्मणादेः क्षत्रियाद्यनुयानेऽनुगन्ता ब्राह्मणादिर्दिनमहोरात्रमशुचिर्भवतीति शेषः । पक्षिण्येकान्तरेऽपि । एकान्तरानुयाने ब्राह्मणस्य वैश्यानुयाने क्षत्रियस्य च शूद्रानुयाने पक्षिण्यशुचितानिमित्तं भवेत् । व्यन्तरत्वे त्रिरात्रम् । ब्राह्मणस्य शूद्रानुयाने त्रिरात्रमनुगन्ता ब्राह्मणोऽशुचिर्भवेदिति संबन्धः । त्रिरात्रानन्तरं कृत्यमाह—त्रिरात्रं कृत्वा सुनद्यामुत्तमजले स्नात्वाऽसुयमनं प्राणायामस्तच्छतं कुर्यात् । तदनन्तरं सर्पिराशं घृतप्राशनं च कुर्युः । एवं शुद्धा भवन्तीत्यर्थः । प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः । अनुगच्छेन्नीयमानं स त्रिरात्रेण शुध्यति ॥ त्रिरात्रे तु ततस्तीर्णे नदीं गत्वा समुद्रगाम् । प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥ इति पराशरवचनात् ।

* इतीति । मनुरपि—अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च । स्नात्वा सचैलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति ॥ इत्याह ।

\+ उपलक्षणमिति । यद्यपि सपिण्डासपिण्डसाधारण्येन द्विजप्रेतानुगमनं शूद्रप्रेतानुगमनं वा ब्राह्मणस्य निषिध्यते, न क्षत्रियवैश्यप्रेतानुगमनं नापि वा क्षत्रियादेः क्षत्रियादिप्रेतानुगमनं निषिध्यते । तथाऽपि 'अनुगन्तव्य इतरो ज्ञातिभिर्मृतः' इति वचनेन सपिण्डसाधारण्येन प्रेतानुगमनस्य विहितत्वेनार्थादसपिण्डस्यासपिण्डप्रेतानुगमनं निषिद्धमिति व्यतिरेक उक्तो भवति । वामेनाक्ष्णा पश्यतीत्युक्ते दक्षिणेन न पश्यतीतिवदेकं ब्राह्मणमानयेत्युक्ते द्वितीयं नाऽऽनयेति व्यतिरेकवच्चेत्यर्थः । किंच यदीदं याज्ञवल्क्यवचनमुपलक्षणतया न व्याख्यायेत तदा 'अवरश्चेत्पूर्ववर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र शावोक्तमाशौचम्' इति वचनोक्तं सामान्यतोऽवरवर्णकर्तृकपूर्ववर्णीयप्रेतोपस्पर्शने पूर्ववर्णकर्तृकावरवर्णीयप्रेतोपस्पर्शने चाऽऽशौचविधानं न संग-

*क्तत्वात् । ' विहितं हि सपिण्डस्य प्रेतनिर्हरणादिकम् ' इत्यादिवचनाच्चासपिण्डस्यासपिण्डानुगमनमात्रनिषेधतात्पर्यावगमात् । × अत्र यद्यपि निषेधस्य सामान्यविषयत्वात्तदनन्तरोक्तस्नानादिविधेरपि तद्विषयत्वमेवाऽऽञ्जस्येन प्रतीयते तथाऽपि हीनवर्णानुगमनेऽपि स्नानाग्निस्पर्शघृतप्राशनानामितरनिरपेक्षशोधकत्वे वाक्यान्तरोक्तैकरात्रादिविरोध तत्सापेक्षशोधकत्वे हीनवर्णानुगमननिमित्तैकरात्राद्यन्ते स्नानस्य प्राप्तत्वेनाविधेयत्वात्समोत्तमवर्णानुगमने त्वप्राप्तत्वेन तस्य विधेयत्वाद्विध्यनुवादवैरूप्यापत्तेरनुवादप्रयोजनाभावात्तस्याऽऽर्थिकत्वाङ्गीकारेण तस्य नियमविधिवत्कथंचित्परिहारेऽपि हीनतदितरवर्णानुगमनयोरेकरात्रादिसापेक्षत्वतदभावाभ्यामुपात्र वपन्तीत्यस्य पर्वचतुष्टयविषयत्वमिव सापेक्षत्वनिरपेक्षत्वकृतविधिवैषम्यस्यापरिहार्यत्वाद्वैषम्येण च विकल्पासंभवादगत्या निषेधविषयैकदेशसमोत्तमानुगमनविषयत्वमेतस्य स्वरसभङ्गेनापि कल्प्यम् ।

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च ।
स्नात्वा सचैलः स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति ॥

---

च्छेत । तस्माद्ब्राह्मणेनानुगन्तव्यो न शूद्र इति याज्ञवल्क्यस्य ' असपिण्डस्यासपिण्डप्रेतानुगमनं निषिध्यते ' इत्यर्थे तात्पर्यमवसीयते । अत एव ' दोषः स्यात्त्वसपिण्डस्य ' इति हारीतवाक्येन सहैकार्थप्रतिपादकत्वरूपैकवाक्यता सिध्यति । तथा चानुगमनकर्तृवाचकब्राह्मणग्रहणमनुगमनकर्मवाचकशूद्रद्विजग्रहणं च चातुर्वर्ण्योपलक्षकमित्यर्थात्सिध्यतीति यावत् ।

* उक्तत्वादिति । ' अवरश्चेत्पूर्ववर्णमुपस्पृशेत्पूर्वो वाऽवरम् ' इत्यादिवचनैश्चातुर्वर्ण्यस्य समोत्कृष्टनिकृष्टासपिण्डप्रेतानुगमनादिप्रेतोपस्पर्शने सर्वत्राऽऽशौचस्योक्तिसिद्धत्वादित्यर्थः ।

× ननु 'ब्राह्मणेनानुगन्तव्यः ' इति याज्ञवल्क्योक्तवचनस्थब्राह्मणद्विजादिग्रहणस्य चातुर्वर्ण्योपलक्षणत्वे स्थिते सति सपिण्डासपिण्डसजातीयासजातीयरूपविशेषानुपादानाद्ब्राह्मणादिना कर्त्रा ब्राह्मणादेः प्रेतो नानुगन्तव्य इति वाक्यार्थपर्यवसानादनुगमननिषेधस्य सामान्यविषयत्वं प्रतीयते । तथा चानुगमनजन्यप्रत्यवायपरिहारार्थत्वेन तत्संनिधौ पठितस्य सचैलस्नानादिविधेरपि सामान्यविषयत्वमेव युक्त्याऽऽयातं भवति । ततश्च सजातीयवर्णानुगमन इव हीनवर्णानुगमनेऽपि स्नानादेरितरनिरपेक्षतयैव परिशोधकत्वं प्राप्नोतीति वाच्यम् । तथा सति वाक्यान्तरोक्ताहोरात्रपक्षिण्यादिविध्यानर्थक्यापत्तेः । तत्सापेक्षशोधकत्वाङ्गीकारे च हीनवर्णानुगमननिमि-

त्वेकैकरात्राद्याशौचान्ते स्नानादेः प्राप्तत्वेन तस्य विधेयत्वासंभवादनुवादकत्वम् । समोत्कृष्टवर्णानुगमने तु स्नानादेरप्राप्तत्वेन तस्य विधेयत्वमिति विध्यनुवादविरोधापत्तिः । यो ह्येकः शब्दः सकृदुच्चरितस्तमेवार्थं पक्षेऽनुवदति पक्षे विधत्ते चेति विध्यनुवादविरोधः । नात्र विध्यनुवादविरोधापत्तिः । प्रयोजनाभावेनानुवादाभावाद्विध्यर्थत्वाच्च वचनस्य । तत्र हि विध्यनुवादविरोधो यत्र विधेयावधितया तदेवानुवदितव्यम्, अप्राप्ततयाऽन्योद्देशेन विधातव्यं च । यथा वाजपेयाधिकरणपूर्वपक्षे वाजपेयेन स्वाराज्यकामो यजेतेति वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवदितव्यः । स एव स्वाराज्यलक्षणफलोद्देशेन विधातव्यश्चेति । अयं भावः—'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र यागेन स्वाराज्यं भावयेत्, इति स्वाराज्यफलं प्रति यागः करणत्वेन विधीयते । वाजपेयशब्देन च गुणो विधीयते । अन्नवाची वाजशब्दः । तच्चान्नं पेयं सुराद्रव्यम् । तच्चात्र गुणः । न च वाजपेयशब्दस्य गुणविधायकत्वे वाजपेयगुणवता यागेन स्वाराज्यं भावयेदिति मत्वर्थलक्षणा प्रसज्येतेति वाच्यम् । सकृदुच्चरितस्य यजेः स्वाराज्यफले वाजपेयगुणे च युगपत्संबन्धात् । ततश्च वाजपेयगुणेन यागं भावयेत् । यागेन च स्वाराज्यं भावयेदित्यर्थस्य लभ्यमानत्वाद्गुणविधित्वेऽपि न मत्वर्थलक्षणेति पूर्वपक्षे प्राप्ते—यजेर्युगपदुभयसंबन्धे विवक्षिते स्वाराज्यफलकर्मकभावनायां यागः करणत्वेन विधेयः, यागेन स्वाराज्यं भावयेदिति । ततश्च यागस्य विधेयत्वम्, फलं प्रति शेषतया प्रतीयमानत्वाद्गुणत्वम्, फलसिद्ध्यर्थं पुंसाऽनुष्ठीयमानत्वादुपादेयत्वम्, इति विधेयत्वं गुणत्वमुपादेयत्वमित्येकं त्रिकं यागेऽस्ति । तथा यागोद्देशेन वाजपेयगुणविधौ विधित्सितगुणापेक्षया प्राधान्यमुद्देश्यत्वमनुवाद्यत्वं चेति द्वितीयत्रिकम् । तदिदं त्रिकद्वयं परस्परविरुद्धमेकस्मिन्यागे प्रसज्येत । सोऽयं विध्यनुवादविरोधः । न तु सकृदुच्चरितः शब्दस्तमेवार्थं पक्षेऽनुवदति पक्षे विधत्ते चेति । एवं च विरुद्धत्रिकद्वयापत्तिरूपदोषप्रसङ्गान्न वाजपेयशब्देन गुणो विधातुं शक्य इति तात्पर्यम् । अपि च 'दर्शपूर्णमासाभ्यां यजेत' इति यागः कर्तव्यतया विहितः । यागश्च देशरूपाधारमन्तराऽनुष्ठातुं न शक्य इत्यर्थाद्देशः । स च देशो द्विविधः । समो विषमश्चेति । तत्र यदा यजमानः समे देशे यियक्षते तदा 'समे यजेत' इति वचनं समदेशानुवादकमिति वक्तव्यम् । इष्टस्य समदेशस्य तदानीं यत्नमन्तरैव सिद्धत्वात् । परंतु नियमविधौ परिसंख्यायामपिवानुवादे प्रयोजनाभावेनायत्नसिद्धसमदेशस्थले 'समे यजेत' इति वचनमुदास्ते । नैव प्रवर्तेत इत्यर्थः । यदा च विषमे देशे यियक्षते तदा समे यजेतेति वचनं स्वार्थं विधत्ते । इष्टस्य समदेशस्य तदानीमप्राप्तत्वात् । यागानुष्ठाने प्राप्ते तदधिकरणत्वेन समो देशो ग्राह्यतया विधीयते । विषमदेशव्यावृत्तिस्त्वर्थात् । विहितदेशोपादानेनैव यागानुष्ठानस्य सिद्धेरविहितदेशोपादानेन यागो यथाशास्त्रं नानुष्ठितः स्यादिति । तथा च 'समे यजेत'

इति वचनस्य विधायकत्वमेव न पक्षेऽनुवादकत्वम्। एवं प्रकृतेऽपि हीनवर्णानुगमने 'अनुगम्याम्भसि स्नात्वा' इति याज्ञवल्क्यवचनमुदास्ते नैव प्रवर्तते। विहितस्य स्नानादेस्तत्र वचनान्तरेण प्राप्तत्वात्। समोत्कृष्टवर्णानुगमने तु—अनुगम्याम्भसीति याज्ञवल्क्यवचनं स्वार्थं विधत्ते। विहितस्य स्नानादेस्तत्र वचनान्तरेणाप्राप्तत्वात्। स्नानाग्निस्पर्शघृतप्राशनैः समोत्कृष्टासपिण्डप्रेतानुगमनजनितप्रत्यवायपरिहारं भावयेदिति। ततश्च कैकस्यानुगम्याम्भसीति याज्ञवल्क्यवचनस्य विधित्वानुवादकत्वधर्मद्वयाक्रान्तत्वरूपाविध्यनुवादविरोधित्वमिति विभावय। एवमपि हीनतदितरवर्णीयप्रेतानुगमनयोः संनिपातस्थले एकरात्रादिसापेक्षत्वतन्निरपेक्षत्वकृतस्नानादिविधिवैषम्यं भवेदेवेति तादृशविधिवैषम्यस्य परिहारार्थमनायत्या 'ब्राह्मणेनानुगन्तव्यः' इत्यनुगमननिषेधविषयीभूतसमोत्कृष्टहीनेतरैतरैकदेशसमोत्कृष्टवर्णीयासपिण्डप्रेतानुगमनविषयत्वमेवैतस्य 'अनुगम्याम्भसि स्नात्वा' इति स्नानादिविधेः कल्पनीयं भवति। यथा 'सूतिकां पुत्रवतीं विंशतिरात्रेण कर्म कारयेन्मासेन स्त्रीजननीम्' इति पैठीनसिवाक्यविहितसूतिकाकर्माधिकारप्रयोजकविंशतिरात्रमासयोर्जन्मप्रभृति गणनायां दशाहपर्यन्तं सूत्याशौचेनैव कर्मानधिकारप्राप्तेर्विंशतिरात्रमासशब्दयोः प्राप्तदशाहांशेऽनुवादोऽवशिष्टदिनांशे विधिरिति विधिवैरूप्यापत्तेर्यस्य यावदाशौचं प्राप्तं तदुत्तरं गणनया स्वस्वाशौचानन्तरमेव विंशतिरात्रं मासं च कर्मानधिकार इति सिद्धान्तितम्। यद्यप्येवं 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इत्यत्राऽऽवृत्तसोमयागरूपद्विरात्रत्रिरात्राद्यहर्गणात्मकेऽहीनयागेऽतिदेशेन तिसृणामुपसदां प्राप्तेस्तदंशेऽनुवादोऽवशिष्टाधिकांशे विधिरिति द्वादशोपसत्त्वविधिवैरूप्यापत्त्या, उपसत्त्रयानन्तरमेव द्वादशोपसत्त्वविधानप्रसक्तेरुपसदां पञ्चदशत्वं प्रसज्येतेति वाच्यम्। इति चेन्न। आसेतुहिमाचलं क्वापि याज्ञिककुले पञ्चदशोपसदनुष्ठानादर्शनादुपसत्त्रयानुष्ठानानन्तरमधिकनवोपसदनुष्ठानविधानमात्रतात्पर्यकल्पनान्न विधिवैरूप्यं नापि पञ्चदशोपसत्त्वप्रसक्तिः। न चैवं विंशतिरात्रेणेत्यत्रापि दशाहोत्तरमाधिकदशादिनेषु कर्मानधिकारविधानमात्रे तात्पर्यकल्पनाज्जन्मप्रभृत्येव विंशतिरात्रगणना युक्ता। अत एव 'प्रसूतिदिनमारभ्य विंशतिरात्रमासौ ग्राह्यौ' इति षडशीतावुक्तमिति वाच्यम्। शिष्टाचारसंमत्यभावेन द्वादशोपसत्त्वस्य त्रयाधिकनवोपसत्त्वविधानमात्रे द्वादशोपसत्त्वविधेस्तात्पर्यकल्पनेऽप्यत्र शिष्टाचारविरोधात्तथाकल्पनस्य दुर्वचत्वात्। शिष्टाचारेषु दशाहोत्तरमेव विंशतिरात्रगणनायाः परिदृश्यमानत्वात्। अत एव 'इदं स्वस्वाशौचानन्तरमिति विप्रस्त्रियाः क्रमेण च वाविंशत्रिंशद्दिनान्यनधिकारः' इति धर्मसिन्धुकारैरुक्तं संगच्छते। शास्त्रसिद्धत्वेऽप्यर्थस्य शिष्टाचारविरुद्धत्वादग्राह्यत्वं दृश्यते लोके। एतदभिप्रायेणैव 'शास्त्राद् रूढिर्बलीयसी' इति प्रवादः। सूतिकाया अस्पृश्यत्वलक्षणाशौचस्य दशाहेन शुद्धिमुक्त्वा, 'इयं च

इति मनुवचनमपि * तद्विषयमेव । अत्र ज्ञातिर्मातृ+सपिण्डः । = स्वसपिण्डानुगमने—

विहितं हि सपिण्डस्य प्रेतनिर्हरणादिकम् ।
दोषः स्यात्स्वसपिण्डस्य तत्रानाथक्रियां विना ॥

इति हारीतवाक्याद्दोषाभावात् । × अत एव तत्र तत्रान्याज्ञाति-

---

दशाहशुद्धिर्न सत्याषाढसूत्रानुसारिभिरादरणीया 'द्वादश्यां मातापुत्रौ स्नातः शुच्यगारं कुर्वन्ति' इति सूत्रेण द्वादश्यामेवाऽऽशौचानिवृत्तेराचार्येणोक्तत्वात्' इत्युक्तं संस्काररत्नमालायाम् । लोके तु सत्याषाढसूत्रानुसारिषु क्वापि कस्यापि परमधार्मिकस्यापि कुले नैवैतस्या द्वादश्यामाशौचानिवृत्तेः परिपाटी दृश्यते । शिष्टाचारविरोधात् । किंत्वनादरणीयत्वेन प्रोक्ता दशाहशुद्धिरेवाऽऽदृता । किंच विंशतिरात्रस्य जन्मप्रभृति गणनायां तुल्यन्यायादेकवाक्यगतत्वेन मासगणनाया अपि तथात्वापत्तौ मासाशौचवन्तं शूद्रं प्रत्येतद्वचनस्याऽऽनर्थक्यं प्रसज्येतेत्ययुक्ता खलु जन्मप्रभृति विंशतिरात्रगणनकल्पना । यथा वा चातुर्मास्येषु 'उपात्र वपन्ति' इति वचनस्य प्रथमोत्तमयोः पर्वणोः 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये' इति प्रतिषेधमपेक्ष्य पाक्षिकोत्तरवेदिविधायकत्वं मध्यमयोश्च वरुणप्रघाससाकमेधपर्वणोर्नित्यवद्विधायकत्वमिति सापेक्षत्वतदभावाभ्यामुद्रापविधेर्वैषम्यं प्रसज्येत । न च वैषम्येणोद्वापविधेर्वैकल्पिकत्वकल्पना संभविनीत्यगत्या सापेक्षत्वनिरपेक्षत्वकृतोद्वापविधिवैषम्यपरिजिहीर्षया निरुक्तवचनस्य पर्वचतुष्टयविषयत्वं कल्प्यते । तद्वदित्यभिप्रायवानाह—अत्र यद्यपि निषेवस्येत्यादि स्वरसभङ्गेनापि कल्प्यमित्यन्तम् ।

* तद्विषयेति । समोत्कृष्टवर्णीयप्रेतानुगमनविषयमेव । एवकारेण हीनवर्णीयप्रेतानुगमनविषयत्वव्यावृत्तिरित्यर्थः ।

+ सपिण्ड इति । अनुगम्येच्छया प्रेतमिति मनुवचनस्थज्ञातिपदेन स्वसपिण्डस्यैव ग्रहणे तत्र 'विहितं हि सपिण्डस्य' इति हारीतवाक्येन दोषाभावस्योक्तत्वात्स्वसपिण्डप्रेतानुगन्तुरनुगमननिमित्ताशुद्धेरविद्यमानत्वेन तादृशानुगन्तारि विधिविषयविशुद्धेरनन्वयप्रसङ्गात् । विद्यमानाशुद्धिक एव शुद्धेर्विधानसंभवात् । अतो मनुवचने ज्ञातिपदेन मातृसपिण्डस्यैव ग्रहणं युक्तमिति बोध्यम् ।

= स्वसपिण्डेति । सगोत्रसपिण्डानुगमनमुपक्रम्य तत्रैव दोषाभावप्रतिपादकत्वेन सामान्यसपिण्डपदघटितहारीतवचनोपन्यासेनाऽऽशौचप्रकरणे सामान्यमुखप्रवृत्तोऽपि सपिण्डशब्दस्तद्विशेषे सगोत्रसपिण्ड एवाभिप्रेत ऋषीणामित्यवगम्यते । अन्यथाऽस्य वचनस्यासगोत्रसपिण्डानुगमनेऽपि दोषाभावप्रतिपादकत्वं दुर्निवारं स्यादिति बोध्यम् ।

× अत एवेति । स्वसपिण्डानुगमनेऽनुगन्तुरनुगमननिमित्तकदोषाभावस्य हारीत-

कादिग्रहणं कृतं मूले* । + ज्ञात्यनुगमनेऽग्निस्पर्शनघृतप्राशनमात्रमधिकं विधीयते । आशौचं तु यथो×क्तमेवेति रुद्रधरोक्तिस्त्वयुक्तैव । स्व=ज्ञात्यनुगमनस्यातिशयविशेषाख्याशुद्धिजनकत्वे ∴प्रमाणाभावेन तदपनायकविधानस्या⊛युक्तत्वात् । ◡क्षामवत्यादिवन्नैमित्तिकमात्रविधाने

---

वाक्येनोक्तत्वादेव ।

* मूल इति । त्रिंशच्छ्लोक्यामित्यर्थः । तत्र द्वादशश्लोके 'निर्हृत्यान्यम्, तेभ्योऽन्यं निर्हृतः' इत्यन्यशब्दग्रहणं चतुर्दशश्लोके च 'अन्ये स्वज्ञातिकेभ्यः' इत्यज्ञातिकशब्दग्रहणं च कृतमिति बोध्यम् ।

+ ज्ञातीति । यद्यपि 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरकोशात् 'ज्ञातिस्तातसगोत्रयोः' इति मेदिनीकोशाच्च सपिण्डसकुल्यसमानोदकसगोत्रजरूपैकगोत्रोत्पन्नस्य वाचको ज्ञातिशब्दस्तथाऽपि धर्मशास्त्र आशौचविषये प्रायो निर्वाप्यपिण्डान्वयैकशरीरावयवान्वयैतदन्यतरप्रयुक्तसापिण्ड्यवत्येव समानगोत्रे प्रयुज्यते । एवं सपिण्डशब्दः सप्तपुरुषावधिके समानगोत्र एव प्रयुज्यते । अत एवैतस्या रुद्रधरोक्तेरयुक्तत्वं वर्ण्यमानं साधु संगच्छते । विवाहविषये तु सपिण्डशब्दोऽसगोत्रसपिण्डेऽपि प्रयुज्यत इति बोध्यम् ।

× यथोक्तमेवेति । प्रेतानुगमनकालावच्छिन्नमित्यर्थः । 'ब्राह्मणेनानुगन्तव्यः' इति याज्ञवल्क्यवचने, अनुगम्य स्नात्वा शुचिरित्युक्त्याऽनुगमकालव्याप्यशौचमनुगन्तुरुक्तमित्यर्थः ।

= स्वज्ञातीति । स्वसगोत्रसपिण्डेत्यर्थः ।

∴ प्रमाणाभावेनेति । अस्य 'विहितं हि सपिण्डस्य' इति हारीतवाक्येन सगोत्रसपिण्डप्रेतानुगमनस्य विहितत्वेन विहिते च दोषोत्पादकत्वकल्पनाया अत्यन्तानुचितत्वेनेत्यादिर्बोध्यः ।

⊛ अयुक्तत्वादिति । भोज्याभावे भोजनस्येव प्रतिषेध्याभावे प्रतिषेधस्येव चापनेयाभावेऽपनायकविधानस्यानुपपन्नत्वादित्यर्थः ।

◡ क्षामवतीति । 'यस्याऽऽहिताग्नेरग्निर्गृहान्दहेत्सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्' इत्यनेन गृहदाहं निमित्तीकृत्य क्षामवतीष्टिर्विहिता । तस्याश्च न किंचित्फलार्थत्वम् । तत्र फलाश्रवणात् । न च यथा मलिनः स्नायादित्यत्र मलनिवृत्तिफलकत्वं स्नानस्य भवति, तथा क्षामवतीष्टेरपि गृहदाहफलकत्वं किं न भवेदिति वाच्यम् । गृहदाहस्य निष्पन्नत्वेन कर्तुमशक्यत्वात्फलत्वायोग्यत्वाच्च तस्य निमित्तमात्रत्वम् । एवं च यथा गृहदाहनिमित्तेन क्षामवतीष्टिर्विधीयते तथा सगोत्रसपिण्डानुगमनस्य विहितत्वेन दोषजनकत्वाभावान्निष्पन्नत्वेन चानुगमनस्य निष्पादयितुमशक्यत्वात्तादृशानुगमनं निमित्तत्वेनाऽऽदाय स्नानादेर्विधानसंभवात्तदयुक्तत्व-

तु विशुध्यतीत्यस्यानन्वयात् । * एवं चाग्निस्पर्शघृतप्राशावपि तुल्योत्कृष्टानुगमन एव । एकयोगनिर्देशात् । + केचित्तु योगीश्वरवचनस्य स्वारस्येन सर्वविषयत्वात्सर्वत्रानुगमनाशौचे तविच्छं( दिच्छन्ति ) । तत्पूर्वोक्तविधिवैषम्यापत्तेरयुक्तम् । प्राच्यास्तु याज्ञवल्क्यवचनं नतु शूद्रः कथंचनेति पाठान्तरेण पठित्वा, अनुगम्येत्यादेरपि शूद्रानुगमनविषयत्वमेवाभ्यु=पगम्य ॐ वाक्यान्तराविरोधायाबुद्धिपूर्व-

वर्णनमेवायुक्तमिति रुद्रधरोक्तिर्युक्तैवेत्याशङ्कावानाह—क्षामवत्यादीत्यनन्वयप्रसङ्गादित्यन्तम् । अयं भावः—यद्यनुगमननिमित्तं स्नानादि विधीयते तर्ह्यनुगन्तर्यनुगमननिमित्ताशुद्धेरविद्यमानत्वेन तादृशानुगन्तरि विशुध्यतीत्यस्यान्वयो न स्यात् । विद्यमानाशुद्धिकस्यैव शुद्धेर्विधानौचित्यात् । तथा च विशुध्यतीत्यस्यानन्वितत्वप्रसङ्गापातादरुद्रधरोक्तिरयुक्तैवेत्यर्थः ।

* एवं चेति । रुद्रधरोक्तेरयुक्तत्वेन याज्ञवल्क्योक्तस्नानविधेस्तुल्योत्कृष्टासपिण्डानुगमन एव स्थितौ च स्नानविधिवाक्योपात्ताग्निस्पर्शघृतप्राशने अपि तुल्योत्कृष्टासपिण्डानुगमन एवानुगन्तुर्विधीयेते । एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति लोकव्यवहारसिद्धन्यायादित्यर्थः ।

+ केचित्त्विति । अयं भावः—‘ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित्’ इत्यनुगमनप्रयुक्ताशौचतन्निरासप्रतिपादकयोगीश्वरयाज्ञवल्क्यप्रोक्तवचने तुल्योत्कृष्टादिविशेषानुपादानेन तुल्योत्कृष्टहीनानुगमनेषु सर्वेष्वनुगमनजनिताशौचपरिहारकत्वेन स्नानविधिप्रतिपादनेऽस्य वचसः स्वरसो दृश्यत इति केचिदाहुः । तन्न समीचीनम् । तथा सति हीनतदितरवर्णयोर्युगपदनुगमनस्थले हीनवर्णीयप्रेतानुगमनविषय एकरात्रादिसापेक्षपरिशोधकत्वं समोत्कृष्टवर्णीयप्रेतानुगमनविषये तन्निरपेक्षपरिशोधकत्वं स्नानविधेः स्यादिति सापेक्षनिरपेक्षत्वकृतविधिवैषम्यापत्तिः प्रसज्येतेति ।

= अभ्युपगम्येति । तथा च ब्राह्मणेन शूद्रानुगमने कृतेऽप्यनुगमनकालावच्छिन्नमेव तस्याऽऽशौचं न तु त्रिरात्रम् । स्नानादित्रयं च कालनिरपेक्षमेव तच्छोधकमित्यङ्गीकृत्येत्यर्थः ।

ॐ वाक्येति । ननु यदि शूद्रानुगमनेऽपि त्रिरात्रनिरपेक्षमेव स्नानं शोधकं स्यात्तर्हि ‘प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः । अनुगच्छेन्नीयमानं स त्रिरात्रेण शुध्यति ॥ इति त्रिरात्राशौचविधेर्विरोध आपद्येतेत्यत आह—वाक्यान्तराविरोधायेत्यादि व्यवस्थापयन्तीत्यन्तम् । तथा चेमं प्रेतमनुगच्छामीति बुद्ध्या शूद्रप्रेतानुगमने कृते त्रिरात्रविधानं तत्सापेक्षं च स्नानादित्रयं शोधकम् । यदा त्वन्यकार्योद्देशेन प्रस्थितस्य देशकालाद्यनुसारेण नान्तरीयकं प्रेतानुगमनं तत्रेदमनुगमनकाला-

प्रासङ्गिकतद्विषयत्वेन व्यवस्थापयन्ति । *मम तु पूर्वोक्तपाठानुसारेणोपलक्षणत्वाङ्गीकारेण च निषेधस्य सर्वविषयत्वात्तत्सहचरितविधेरपि सर्वविषयत्वेन सर्वासपिण्डानुगमने स्नानादित्रयं कालनिरपेक्षं शोधकं भवत्येव । तत्रैकाहाद्याशौचविधायकवाक्याविरोधायैवं विषयभेदः कल्प्यते । हीनानुगमने प्रासङ्गिके, समोत्तमानुगमने तु बुद्धिपूर्वे इति । + अत एव मनुनेच्छयेत्युक्तमिति प्रतिभाति । इदं च घृतप्राशनं न भोजननिवर्तकम् । कृच्छ्रेष्वपाठात् । कृच्छ्रत्वाभावेन भोजनकार्यविधाने प्रमाणाभावात् ।

= अथ दिनमशुचिर्हीवर्णानुयाने ।

---

वच्छिन्नाशौचविधानमेकरात्रादिनिरपेक्षं च स्नानादित्रयमाशौचशोधकं भवतीति व्यवस्थामङ्गी कुर्वन्तीत्यर्थः ।

*सिद्धान्तिनो मम मते 'ब्राह्मणेनानुगन्तव्यः' इति याज्ञवल्क्यवचने यथास्थित एव पाठः, न तत्र काचित्स्वकपोलकल्पना ब्राह्मणशूद्रादिग्रहणं चोपलक्षणम् । एवं च समोत्कृष्टहीनसर्वासपिण्डानुगमनं निषिध्यते । ततश्च तदुत्तरपठितस्नानादिविधेरपि सर्वासपिण्डविषयत्वं सिध्यतीति सर्वासपिण्डानुगमने स्नानादित्रयमेकाहादिकालनिरपेक्षमेव शोधकं संपद्यते । न चैवमेकरात्राद्याशौचविधायकवचनविरोध इति वाच्यम् । तेषामनुगच्छामीति बुद्धिपूर्वकहीनासपिण्डानुगमनविषयत्वात् । अस्य तु विधेर्बुद्धिपूर्वकसमोत्तमासपिण्डानुगमनप्रासङ्गिकहीनानुगमनविषयत्वान्न विरोध इत्याह—ममेत्यादि बुद्धिपूर्वे इतीत्यन्तम् ।

+ अत एवेति । स्नानादित्रयस्य कालनिरपेक्षस्य समोत्तमहीनासपिण्डानुगमनाशौचपरिशोधकत्वाङ्गीकारे ह्येकरात्राद्याशौचविधायकवाक्यान्तरविरोधपरिहारार्थं विषयभेदकल्पनस्याभिप्रेतत्वादेव । 'अनुगम्येच्छया प्रेतम्' इति मनुवचन इच्छयेत्युक्तत्वाद्धीनासपिण्डानुगमनप्रयुक्तैकरात्राद्याशौचविधायकवाक्यान्तराणीमं प्रेतमनुगच्छामीति बुद्ध्या हीनासपिण्डानुगमनपराणि न तु प्रासङ्गिकहीनासपिण्डानुगमनपराणीति कल्प्यत इति भावः । तथा च स्नानादि त्रितयं कालनिरपेक्षं प्रासङ्गिकहीनासपिण्डानुगमनाशौचस्याथ च बुद्धिपूर्वकसमोत्तमासपिण्डानुगमनाशौचस्य परिशोधकं भवतीत्यर्थः संपद्यते । अपरार्काभिधेन तु—अनुगच्छामीति बुद्ध्याऽनुगन्तुः शुद्धिहेतुरयम् । अनुगम्येच्छयेति मनुवाक्य इच्छयेत्युक्तत्वादित्युक्तम् । तथा च प्रासङ्गिके समोत्कृष्टानुगमने न किंचिदाशौचमिति प्रतिभाति । शिष्टाचारस्तत्र कथंविध इत्यन्वेषणीयम् ।

= अथ हीनासपिण्डानुगमनाशौचमाह—अथ दिनमशुचिरिति ।

*स्वानन्तरहीनवर्णासपिण्डानुगमने दिनमेकाहोरात्रमशुचिः स्यात् । तथा च वासिष्ठः— + शवानुगमने चैवमिति । अहोरात्रं प्रकृतम् ।

पक्षिण्येकान्तरानुव्रजन इह भवेत् ।

स्वापेक्षयैकान्तरस्य हीनासपिण्डस्यानुव्रजने = ब्राह्मणक्षत्रिययोर्वैश्यशूद्रानुगमन इति यावत् । पक्षिण्याशौचं भवेत् । इहेत्युत्तरत्रान्वेति । अत्र चार्थे यद्यपि वचनं नास्ति तथाऽप्येकान्तरस्य व्यनन्तरापेक्षयोत्कृष्टत्वात्तदनुगमनाशौचकालन्यूनस्यानन्तरापेक्षया चापकृष्टत्वात्तदनुगमनाशौचकालाधिकस्य कालस्य तदनुगमनाशौचपरिच्छेदकस्यापेक्षायां द्विरात्रादेराशौचकालत्वेनादर्शनात्पक्षिण्येव तदाऽऽशौचपारिच्छेदिका युक्तेत्यनेनाभिप्रायेण विज्ञानेश्वरादिकल्पनैव मूलम् । मिताक्षरोदाहृतशूद्रविषयमेतीभूतमित्यादिवाक्यप्राक्संकलग्रान्माधवव्याख्यातात्—

---

* स्वानन्तरेति । ब्राह्मणेन क्षत्रियानुगमने, क्षत्रियेण वैश्यानुगमने, वैश्येन शूद्रानुगमने कृते सतीत्यर्थः ।

+ शवेति ' मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रम् । शौचमस्निग्धे त्वहोरात्रं शवानुगमने चैवम् ' इति ।

= ब्राह्मणक्षत्रिययोरिति । ब्राह्मणेन वैश्यानुगमने क्षत्रियेण च शूद्रानुगमने कृते सत्यनुगन्तुर्ब्राह्मणस्य क्षत्रियस्य च पक्षिण्याशौचं द्रष्टव्यमित्यर्थः । नन्वत्र किं प्रमाणम् । नात्राऽऽर्षं वचनमुपलभामह इति चेत्सत्यम् । किंतु युक्तिसिद्धोऽयमर्थः । तथा हि—ब्राह्मणादिकर्तृकहीनवर्णकर्मकानुगमने ' शवानुगमने चैवम् ' इति वसिष्ठवचनेन सामान्यतोऽहोरात्रमाशौचमुच्यते । तथा ब्राह्मणकर्तृकशूद्रकर्मकानुगमने वाक्यान्तरेण त्रिरात्र विधीयते । एवं सति यथा वसिष्ठवचनं ब्राह्मणकर्तृके क्षत्रियानुगमने प्रवर्तते तथा वैश्यानुगमनेऽपि प्रसक्तम् । परंतु वैश्यस्य स्वानन्तरक्षत्रियापेक्षया निकृष्टत्वाच्छूद्रापेक्षया चोत्कृष्टत्वात्क्षत्रियशूद्रमध्यवर्तिनो वैश्यस्यानुगमने क्षत्रियशूद्रानुगमनप्रयुक्ताशौचस्य विसदृशत्वेन शूद्रानुगमनप्रयुक्ताशौचापेक्षया न्यूनस्य क्षत्रियानुगमनप्रयुक्ताशौचापेक्षया चाधिकस्याऽऽशौचस्य युक्तत्वेनैकरात्रत्रिरात्रयोर्मध्यवर्ती पक्षिण्याख्य एव काल आशौचपरिच्छेदकत्वेन कल्प्यते । एवं क्षत्रियकर्तृकशूद्रकर्मकानुगमनेऽपि पक्षिण्यूह्येति ज्ञेयम् । एवं च ब्राह्मणस्य क्षत्रियानुगमनेऽहोरात्रो वैश्यानुगमने पक्षिणी शूद्रानुगमने तु त्रिरात्रः । तथा क्षत्रियस्य वैश्यानुगमनेऽहोरात्रः शूद्रानुगमने पक्षिणी वैश्यस्य शूद्रानुगमनेऽहोरात्र इति विवेको बोध्यः ।

शवं च वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति ।
कृत्वाऽऽशौचं द्विरात्रं स प्राणायामान्षडाचरेत् ॥

इति पराशरवचनात्त्वेकान्तरानुगमने द्विरात्रं प्रतीयते । आशौचदशके तथैवोक्तम् । अत्र तत्त्वं न विद्मः ।

**द्व्यन्तरत्वे त्रिरात्रं कृत्वा स्नात्वा सुनद्यामसुयमनशतं सर्पिराशं च कुर्युः ।**

अनुगम्यस्य द्व्यन्तरत्वे सतीहानुगमने कृते ब्राह्मणः शूद्रानुगमन इति यावत् । त्रिरात्रमाशौचं कृत्वा सुनद्यां गङ्गादिकायां स्नात्वाऽसुयमनानां प्राणायामानां शतं सर्पिराशं घृतप्राशनं च कुर्युः । तथा च पराशरः-

प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं स त्रिरात्रेण शुध्यति ॥
त्रिरात्रे तु ततस्तीर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥ इति ।

अत्र च ज्ञानदौर्बल्यं शास्त्रार्थज्ञानराहित्यम् । अज्ञानादित्यत्रापि तथा । अत एव माधवेन मौर्ख्यादित्येवं व्याख्यातम् ॥ १३ ॥

**+ तातम्बाचार्यकेभ्योऽनलजलतिलदो ब्रह्मचारी तदीयाशौचोऽन्येभ्यस्तु तद्वत्पुनरुपनयनं चाधिकं कारयेत्तु । अन्ये त्वज्ञातिकेभ्यो यदि ददति तदा तत्प्रयुक्ताशुभाः स्युः कुर्युः कृच्छ्रत्रयं वाऽधमदहनविधौ तं तमेवाऽऽप्नुवन्ति ॥ १४ ॥**

---

+ अथेदानीमधिकारविशेषेणाधिकारिविशेषाशौचं चतुर्दशवृत्तेनाऽऽह-तातम्बेति । तातः पिता । अम्बा माता । आचार्य उपनीय वेदाध्यापकः । एभ्योऽनलजलतिलान्ददातीत्यनलजलतिलदः । एवंविधो ब्रह्मचारी तदीयाशौचस्तदीयाशौचवान् भवति तदीयाशौचशुद्ध्या शुद्धो भवतीत्यर्थः । अन्येभ्यस्तु तद्वत् । अन्येभ्यस्तातम्बेत्यादित्रितयातिरिक्तेभ्योऽनलजलतिलदः, एवंविधो ब्रह्मचारी तदीयाशौचः सन्नाशौचान्ते पुनरुपनयनमाधिकं कारयेत्ततः शुद्धो भवतीत्यभिसंधिः । एतच्च 'आचार्यपित्रुपाध्यायान्' इति याज्ञवल्क्यवचनव्याख्याने मिताक्षरायां स्पष्टम् । अन्ये तु-अन्ये त्वज्ञातिकेभ्यो यद्यनलजलतिलान्ददाति तदा तत्प्रयुक्ताशुभास्तदीयाशौचभाजः स्युस्तदीयाशौचेनैवाऽऽशौचवन्तः स्युरिति तात्पर्यम् । ततोऽधिकं कृच्छ्रत्रयं चापि कुर्युः । ततः शुद्धा भवन्तीत्यर्थः । अधमदहनविधौ यदाऽधमदाहकास्तदा तं तमेव मात्रं प्राप्नुवन्ति तेन तेनाधमेन तुल्या भवन्तीत्यर्थः ।

आचार्यग्रहणेनोपाध्यायो मातामहश्चोप*लक्ष्यते । अनलादिग्रहणेन च +सकलमौर्ध्वदेहिकमुपलक्ष्यते । तथा चान्याधिकार्यभावे ×पित्रादीनामौर्ध्वदेहिककर्ता ब्रह्मचारी तदीयानां सपिण्डानामाशौचमिवाऽऽशौचमस्यैतादृशो भवति । दशा=हादिजात्याशौचभाग्भवतीत्यर्थः । तद-

* उपलक्ष्यत इति । 'आचार्यपित्रुपाध्यायान्' इति याज्ञवल्क्यवचन उपाध्यायग्रहणात् । 'व्रतस्थोऽपि यथा पुत्रः पितुः कुर्यात्क्रियां नृप । तथा मातामहस्यापि दौहित्रः कर्तुमर्हति' इति भविष्यत्पुराणस्थवचने मातामहग्रहणादित्यर्थः ।

+ सकलमिति । 'ब्रह्मचारिणः शवकर्मणा व्रतान्निवृत्तिः' इति वसिष्ठवचनेन व्रतलोपप्रतिपादनमुखेन सर्वस्यापि शवकर्मणो ब्रह्मचारिणो निषेधप्रतिपादनादनलादिग्रहणेन सकलमौर्ध्वदेहिकमुपलक्ष्यत इत्यर्थः ।

× पित्रादीनामिति । मातापितृमातामहाचार्योपाध्यायानामित्यर्थः ।

= दशाहादीति । नन्वत्र किं मूलम्—साक्षात्स्मृतिवचनं तु नोपलभ्यते । प्रत्युत 'ब्रह्मचारिणि भूपे च यतौ शिल्पिनि दीक्षिते । यज्ञे विवाहे सत्रे च सूतकं न कदाचन' इत्यादिवचनैर्मन्वादिभिर्ब्रह्मचारिणः सामान्यत अशौचाभाव उच्यत इति चेत्, शृणु । 'विहितं हि सपिण्डस्य प्रेतनिर्हरणादिकम् । दोषः स्यात्त्वसपिण्डस्य तत्रानाथक्रियां विना' इत्यादिवचनैरसपिण्डकर्तृकायामनाथव्यतिरिक्तासपिण्डसंबन्धिन्यामन्त्येष्टिक्रियायां निषिद्धायां सत्याम् 'गुरोः प्रेतस्य शिष्यस्तु' 'निरन्वयेऽसपिण्डे तु' इत्यादिस्मृतिवचनैः केनापि कारणेन निषिद्धौर्ध्वदेहिकानुष्ठाने जाते तदनुतिष्ठतः संपूर्णाशौचं विधीयते । तेन यो देवदत्तादिः सपिण्डोऽसपिण्डो वा यस्य यज्ञदत्तादेः सपिण्डस्यासपिण्डस्य वौर्ध्वदेहिकं करोति स देवदत्तादिर्यज्ञदत्तादिजातिप्रयुक्तं संपूर्णाशौचं लभत इति सामान्यतोऽवगम्यते । तत्र पूर्वोक्तस्य ब्रह्मचारिणोऽशौचनिषेधस्यैतद्वचनप्रामाण्यात्साहचर्याच्च सपिण्डसोदकदौहित्रभागिनेयत्वादिस्वानुत्पाद्यनिमित्ताशौचविषयकत्वकल्पनस्याऽऽवश्यकत्वेन तत्प्रयुक्ताशौचप्रतिषेधेऽपि स्वोत्पाद्यानुगमनादिसकलौर्ध्वदेहिकानुष्ठानप्रयुक्तस्य तस्य निषेधे प्रमाणाभावेन ब्रह्मचारिणोऽन्त्यक्रियाकरणनिमित्तकं संपूर्णाशौचं सामान्यतोऽवगतं तदवश्यमेवेत्याशयेनाऽऽह—दशाहादिजात्याशौचभाग्भवतीति । एवमन्त्यक्रियाकरणप्रयुक्ते दशाहाद्याशौचे प्रवृत्ते सत्येव 'ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिः' इति वसिष्ठप्रतिपादितस्याधिकस्य व्रतलोपस्य प्राप्तौ 'अन्यत्र मातापित्रोर्गुरोर्वा' इति व्रतलोपः पर्युदस्यते पित्राद्यन्त्यकर्मकरणे नत्वाशौचं निषिध्यत इति भावः । एतदर्थकत्वेनैवाभिमतं 'आचार्यपित्रुपाध्यायान्' इति याज्ञवल्क्यवचनम् । अत एव च तत्रत्यनिर्हरणग्रहणस्य सकलौर्ध्वदेहिकोपलक्षकत्वमङ्गीकृतं मिताक्षराकारादिभिः । एवं च मातापितृमातामहाचार्योपा-

न्येभ्यस्तु तद्दोऽग्निपिण्डादिदाता ब्रह्मचारी निषिद्धानुष्ठाननिमित्तवक्ष्यमाणकृच्छ्रत्रयात्मकप्रायश्चित्तं विप्लुतब्रह्मचर्यसंधानार्थत्वेनाधिकं स्वस्य पुनरुपनयनं गुरुणा कारयेत्। चकारात्पूर्वोक्तमाशौचं च। तथा च—

'दोषः स्यात्त्वसपिण्डस्य तत्रानाथक्रियां विना'।
'न कदाचिदगोत्राय श्राद्धं कार्यमगोत्रजैः'॥

इत्यादिवचनैः सर्वेषामसपिण्डानामनाथव्यतिरिक्तासपिण्डौर्ध्वदेहिकानुष्ठाने निषिद्धे—

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति॥

इत्यादिवचनैः—

निरन्वयेऽसपिण्डे तु मृते सति दयान्वितः।
तदशौचं पुरा चीर्त्वा कुर्यात्तु पितृवत्क्रियाम्॥

इत्यादिवचनैश्च कथंचित्तदनुष्ठाने संपूर्णाशौचविधानाद्यो यस्यौर्ध्वदेहिकं करोति स तज्जातिप्रयुक्तं संपूर्णाशौचं कुर्यादित्युत्सर्गतोऽवसीयते। तत्र ब्रह्मचारिणः सपिण्डसोदकदौहित्रभागिनेयत्वाद्यनापाद्यनिमित्तकाशौचनिषेधेऽपि निर्हरणौर्ध्वदेहिकक्रियाद्यापाद्यनिमित्तकतन्निषेधाभावात्पित्रादेस्तदितरस्य च सपिण्डस्याप्यौर्ध्वदेहिके तेनानुष्ठिते पूर्वोक्ताशौचे सत्येव ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरित्यादिवचनप्रतिपादिताया अधिकाया ब्रह्मचर्यनिवृत्तेरेव पर्युदासोऽन्यत्र मातापित्रोर्गुरोर्वेत्यादिभिः क्रियते पित्रादिचतुष्टयौर्ध्वदेहिकानुष्ठाने। * अनेनैवाभिप्रायेणाऽऽचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रतीत्यत्र

---

ध्यायानां प्रत्यासत्त्या पुत्रदौहित्रशिष्यैर्ब्रह्मचारिभिरन्त्ययज्ञकरणे दशाहमाशौचं भवति तावताऽपि न व्रतलोपः। अतो न पुनरुपनयनम्। नापि निषिद्धानुष्ठाननिमित्तकं कृच्छ्रत्रयं प्रायश्चित्तम्। पित्रादिपञ्चकान्त्येष्टिकरणेऽभ्यनुज्ञानात्। एवं वदता—आचार्यव्यतिरिक्तप्रेतनिर्हरणादि कुर्वतो ब्रह्मचारिणो व्रतलोपो भवतीति सूचितम्। तत्स्पष्टमुक्तं वासिष्ठेन 'ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोर्गुरोर्वा' इति। तथा च ब्रह्मचारिणाऽऽचार्यादिव्यतिरिक्तानां प्रेतनिर्हरणाद्यौर्ध्वदेहिके कृते दशाहाशौचं निषिद्धानुष्ठाननिमित्तकं कृच्छ्रत्रयं लुप्तव्रतसंधानार्थं स्वस्य पुनरुपनयनं च कार्यमेवेत्याशयेनाऽऽह—तदन्येभ्यस्त्वित्यादि।

* अनेनैवाभिप्रायेणेति। 'ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिः' इति वासिष्ठवाक्ये शवसंबन्धिनिर्हरणपिण्डोदकदानाद्यखिलकर्मजातप्रतिपादकसामान्यमुखप्रवृत्त-

निर्हरणग्रहणस्योदकपिण्डदानाद्युपलक्षणत्वमभिमतं विज्ञानेश्वरादीनाम् । तथा च—

व्रतस्थोऽपि यथा पुत्रः पितुः कुर्यात्क्रियां नृप ।
तथा मातामहस्यापि दौहित्रः कर्तुमर्हति ॥

इति भविष्यत्पुराणे क्रियाग्रहणं कृतम् । तेन पित्रादेरन्त्येष्टिकरणे तदन्नभोजनाद्यभावेऽपि ब्रह्मचारिणस्तन्निमित्तं संपूर्णाशौचं भवत्येव । पुनरुपनयनं प्रायश्चित्तं च नास्ति । अभ्यनुज्ञानात् । तदितरस्य तु सपिण्डस्यासपिण्डस्य चान्त्येष्टिकरणे त्रितयमपीति सिद्धम् । पित्रादेर्दाहमात्रकरणे तु तदन्नभोजनाद्यभाव एकरात्रं तत्सद्भावे पूर्ववदेव । तथा पाराशरव्याख्याशुद्धिविवेकादिषु ब्रह्मपुराणवचनम् —

आचार्यं वाप्युपाध्यायं गुरुं वा पितरं च वा ।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम् ॥
कृत्वा पतति नो तस्मात्प्रेतान्नं तत्र भक्षयेत् ।
अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत् ॥
एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति ॥ इति ।

*तु शब्देन चतराशौचवैलक्षण्यद्योतकेन सकटान्नं+ च नाश्नीयान्न च तैः सह संवसेदित्युक्तं तदन्नाशनाद्यभावं दर्शयति । तथा च पित्रा-

---

कर्मशब्दप्रयोगाद्येन केनापि निर्हरणादिरूपकर्मानुष्ठानेन ब्रह्मचारिणो व्रतान्निवृत्तिबाधकत्वाभावे ‘ अन्यत्र मातापित्रोर्गुरोर्वा ’ इति पर्युदासावकाशाप्रसङ्गेनेत्यर्थः ।

* तुशब्देनेति । ‘ तातम्बाचार्यकेभ्यः ’ इत्यादिमूलश्लोकस्य ‘ तदन्यकेभ्यस्तु ’ इत्यत्रत्यतुशब्देनेत्यर्थः । ब्रह्मचारिव्यतिरिक्तसपिण्डनिष्ठाशौचापेक्षयाऽन्त्यकर्मकारिब्रह्मचारिनिष्ठाशौचस्य वैलक्षण्यद्योतकेनेत्यर्थः । वैलक्षण्यं चाऽऽशौचनाशकाद्यशनाभावे सति त्रिरात्रदृष्टतया कालाभावेन चेति बोध्यम् । एतदनुसंधायैव धर्मसिन्धावुक्तम्—‘ अथ ब्रह्मचारिणा पितृमातृमातामहाचार्योपाध्यायानामन्याधिकार्यभावे दाहाद्यन्त्यकर्म कार्यम् । तदा कर्माङ्गं दशाहमस्पृश्यत्वलक्षणमाशौचं च कार्यम् । तदाऽपि तेषामाशौचिनामन्नं ब्रह्मचारिणा न भोक्तव्यम् । आशौचिभिः सहैकत्र वासश्च न कार्यः ’ इति ।

\+ सकटान्नमिति । कटशब्देनाऽऽशौचं लक्ष्यते । तत्सहचरितमन्नं सकटान्नमिति मिताक्षरा । ब्रह्मचारी निर्हरणव्यापारादीन्सकटान्नमशौचान्नं नाश्नीयात् । नाप्याशौचिभिः सह संवसेदिति तदर्थः । एवं च सापिण्डाशौचविलक्षणं ब्रह्मचारिण आशौचमिति तात्पर्यम् । अत एव ‘ तदीयाशौच ’ इत्यत्र विग्रहे सापिण्डानामाशौचादन्यदाऽऽशौचं यस्येतीवशब्दः प्रयुक्त इति बोध्यम् ।

देरप्योर्ध्वदेहिके दाहमात्रे निर्हरणादौ वा *तत्करणे पुनरुपनयनं प्राय श्चित्तं च भवति । तथा च ×पूर्ववाक्येऽपि पततीत्युक्तम् ।

+अत्र चाऽऽशौचे कर्मलोपो न भवति ' न त्यजेत्सूतके कर्म ब्रह्मचारी स्वकं क्वचित्' इति छन्दोगपरिशिष्टे कात्यायनवचनात्। अत्र =सूत-

---

* तत्करण इति । आशौचयन्नभोजनतत्सहवासयोः करण आचरण इत्यर्थः । तदुक्तं धर्मसिन्धौ—' तदुभयकरणे प्रायश्चित्तं पुनरुपनयनं च ' इति ।

× पूर्ववाक्य इति । व्रतस्थस्तत्र भोजनम् । कृत्वा पतति नो तस्मात्प्रेतान्नं तत्र भक्षयेत् । इति पूर्वोक्तब्रह्मपुराणवाक्ये पततीत्युक्तमित्यर्थः । एवं चैवं तस्यान्वयः— व्रतस्थो ब्रह्मचारी पितृमात्रादीन्स्वयं दग्ध्वा तत्र भोजनं कृत्वा पतति व्रताद्भ्रष्टो भवति तस्मात्तत्र प्रेतान्नं नो भक्षयेदिति । नतु तत्र भोजनं कृत्वा नो पततीति ।

+ अत्र चेति । कर्माङ्गाशौच इत्यर्थः । तत्र कर्मलोपाभावे प्रमाणं प्रदर्शयति— न त्यजेदित्यादि ।

= ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् । सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा । ( या० स्मृ० प्रा० १ । २८ ) । ब्रह्मचारिणि भूपे च यतौ शिल्पिनि दीक्षिते । यज्ञे विवाहे सत्रे च सूतकं न कदाचन । ( जाबालः ) इत्यादिवचनैर्ब्रह्मचारिणः मृत्याशौचस्य प्रतिषिद्धत्वा-मुख्यसूतकस्य ( जनिनिमित्ताशौचस्य ) ब्रह्मचारिण्यसंभवेन ' न त्यजेत्सूतके कर्म ब्रह्मचारी स्वकं क्वचित् ' इति च्छन्दोगपरिशिष्टगतकात्यायनवचनस्थसूतकशब्देन सूतकव्यतिरिक्त शौच परिगृह्यते । ननु 'सत्रिव्रतिब्रह्मचारि ' इति पूर्वोक्तवचनेन विशेषानुपादानात् 'आदष्टी नोदकं कुर्यात्' इति मनुवचसाऽपि च ब्रह्मचारिणो मृतिप्रयुक्तस्याप्याशौचस्य निराकरणेन ब्रह्मचारिणि मृताशौचस्याप्यसंभवादसंभवदुक्तिकमेवेदं कात्यायनवचनमिति चेत् । नैतद्भद्रम् । जननमरणोभयविधलक्षणस्याऽऽशौचस्य निषिद्धत्वेन ब्रह्मचारिण्यसंभवेऽपि ' गुरोः प्रेतस्य शिष्यस्तु ' ' निरन्वये सपिण्डे तु ' इत्यादिवचनैरनुगमनाद्यखिलौर्ध्वदेहिककर्मानुष्ठानाङ्गतया विहितस्याऽऽशौचस्य ब्रह्मचारिणि संभवेन तदवस्थायां ब्रह्मचारिणः स्वकीयकर्मात्यागोपदेशेन कात्यायनवचनस्य चारितार्थ्यात् । न च पूर्वोक्तवचनेनाविशेषात्कर्माङ्गस्यापि तस्य प्रतिक्षेपः । तथा च कात्यायनवचनमसंभवदुक्तिकमेवेति वाच्यम् । तथा सत्यन्त्यकर्माङ्गत्वेन तद्विधायकस्य गुरोः प्रेतस्येत्यादिपूर्वोक्तवचनजातस्य नैरर्थक्यापत्तेः । एवं च कात्यायनवचनस्थसूतकशब्देन न मरणनिमित्ताशौचमुच्यते । किंतु मरणनिमित्तान्त्यकर्मानुष्ठानाङ्गभूत( कर्माङ्गमिति प्रसिद्ध )माशौचमुच्यत इत्यभिप्रेत्याऽऽह—' अत्र सूतकशब्देनाऽऽशौचमुच्यते ' इत्यादीति ।

कशब्देनाऽऽशौचमुच्यते*। ब्रह्मचारिणो मुख्यसूतकाभावात्। यत्तु स्मृतिचन्द्रिकायां संवर्तवचनम्—

पित्रोर्गुरोर्विपत्तौ तु ब्रह्मचार्यपि यः सुतः।
सव्रतश्चापि कुर्वीत अग्निपिण्डोदकक्रियाम्॥
तेनाऽऽशौचं न कर्तव्यं संध्या चैव न लुप्यते।
अग्निकार्यं च कर्तव्यं सायं प्रातश्च नित्यशः॥ इति।

तदाशौचं न कर्तव्यं, आशौचनिमित्तः कर्मानधिकारो नास्तीत्यर्थः। तदेव विवृणोति संध्या चेत्यादीत्येवं व्याख्येयम्। आशौचस्यौर्ध्वदेहिकानुष्ठानपृष्ठ+लग्नस्य निषेद्धुमशक्यत्वात्। संध्या चेत्या-

---

*आशौचमिति। 'गुरोः प्रेतस्य शिष्यस्तु' 'निरन्वये सपिण्डे तु' इत्यादिवचनेनान्त्यकर्मानुष्ठानाङ्गत्वेन विहितमाशौचमित्यर्थः। न तु मरणप्रयोज्याशौचम्। तस्यापि मुख्यसूतकवद्ब्रह्मचारिण्यसंभवात्। 'व्रतिसत्रिब्रह्मचारि' इति निषेधात्। तेन च निषेधेन सपिण्डमादकत्वादिस्वानाद्यनिमित्तकस्यैवाऽऽशौचस्य निषिद्धत्वात्। न तु स्वापाद्यनिमित्तकाशौचस्यापि। तथा सति कर्माङ्गत्वेन तद्विधायकवचनवैयर्थ्यापातप्रसङ्गात्। एवं च सूतकशब्दो हि कर्मानधिकारित्वमात्रप्रयोजके जननिमित्ताशौचे मुख्यः। क्वचित्तु कर्मानधिकारित्वरूपशक्यसंबन्धलक्षणया जननाशौचव्यतिरिक्तेऽस्पृश्यत्वलक्षणे मृताशौचे कर्माधिकारित्वानधिकारित्वलक्षणे कर्माङ्गाशौचे च गौण इति तात्पर्यमिति भाव इति ज्ञेयमिति।

+पृष्ठलग्नस्येति। अयं भावः—गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्। प्रेताहारैः समं तत्र दशरात्रेण शुध्यति॥ निरन्वये सपिण्डे तु मृते सति दयान्वितः। तदशौचं पुरा चीर्त्वा कुर्यात्तु पितृवत्क्रियाम्॥ इत्यादिवचनैरन्त्यकर्मानुष्ठाने तदङ्गत्वेनाऽऽशौचस्य विहितत्वेन विहिते च विधानस्याप्रामाण्यापत्तेरभावेनोपपत्तौ बाधकस्पनस्यान्याय्यत्वाच्च निषेधप्रवृत्तेरयुक्तत्वेनान्त्यकर्मानुष्ठानेन नित्यसंबद्धस्य कर्माङ्गाशौचस्य निषेद्धुमशक्यतया स्मृतिचन्द्रिकोद्धृतसंवर्तवचनस्थस्य 'तेनाऽऽशौचं न कर्तव्यम्' इति वाक्यस्याऽऽशौचप्रयुक्तकर्माधिकाराभावो न मन्तव्यः। किं त्वाशौचे सत्यपि संध्याग्निकार्यादिनित्यकर्माधिकारोऽस्तीत्यर्थो बोध्यः। अत एव 'संध्या चैव न लुप्यते' इत्यग्रिमसंध्यादिनित्यकर्मलोपाभावप्रतिपादनं स्वरसतः संगच्छते। आशौचाभावस्यैवाभिप्रेतत्वे तु संध्यादिलोपाभावसंकीर्तनं निर्बीजं स्यात्। किंचाऽऽशौचनिषेधे संध्यादिलोपप्रसक्तेरभावेन नियमेन प्रतियोगिप्राप्तिप्रसक्त्याश्रयकस्य निषेधस्य प्रवृत्तेर्वक्तुमशक्यत्वेन (स्वप्रवृत्तिप्रयोजककर्मलोपप्रसक्तिरूप)-

धर्माप्रतिषेधानर्थक्यप्रसङ्गाच्च । यदपि देवदासप्रकाशादौ प्रजापतिवचनम्—

ब्रह्मचारी यदा कुर्यात्पिण्डनिर्वपणं पितुः ।
तावत्कालमशौचं स्यात्पुनः स्नात्वा विशुध्यति ॥ इति ।

तदपि तावत्कालं *दशदिनादिरूपपिण्डदानकालपर्यन्तमशौचं स्यात् । कर्मणि कर्मणि पुनः स्नात्वा विशुध्यति तत्तत्कर्माधिकारी भवत्यग्निहोत्रहोमादावित्याऽऽहिताग्निरिति व्याख्येयम् । देव(दिवो)+दासादयस्तु एकरात्राशौचविधायकब्रह्मवाक्ये दग्ध्वेत्यस्य सकलौर्ध्वदेहिकोपलक्षणत्वात्पित्रौर्ध्वदेहिककर्तृब्रह्मचारिणः प्रथमदिन आशौचमस्त्येव । तन्निमित्तः संध्यादिलोपश्च । द्वितीयादिदिनेषु तु यस्मिन्काले पिण्डदानादि करोति तस्मिन्काल एवाऽऽशौचं न तु पूर्वोत्तरभागयोरिति यथाश्रुतं संवर्तप्रजापतिवचनानुसारेण वदन्ति । तत्प्रतिदिनं नानाशौचकल्पनागौरवादुपेक्ष्यम् । तस्मादस्पृश्यत्वेतरकर्मानधिकारसंपादक आशौचे वर्तमान एव वचनात्संध्यावन्दनाद्यधिकार इतराशौचवदस्पृश्यता चेत्येवं युक्तमित्येतत्सर्वमभिप्रेत्य तदीयाशौच इत्युक्तम् । अस्मिंश्च पक्षे यथा स्वकालवाक्यसंगतिस्तथा प्रदर्शितमेव मयेत्यादिरन्यत्र विस्तरः ।

---

विषयाभावान्न लुप्यते, इत्यादिनिषेधोऽनुपपन्नः स्यात् । अतो निरुक्तरीत्यैव व्याख्यानं समञ्जसमिति ज्ञेयम् ।

* दशदिनादिरूपेति । 'संभवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्' इति न्यायेन 'प्रेताहारैः समं तत्र दशरात्रेण शुध्यति' इत्याद्येकवाक्यतया तावत्कालमित्यस्योक्त एवार्थो युक्तः । न तु पूर्वोत्तरभागरहितपिण्डदानाधिकरणीभूतकालपर्यन्तमित्यर्थः । तथा सति वाक्यभेदरूपदोषापत्तिप्रसङ्गादिति बोध्यम् ।

+ पित्राद्यौर्ध्वदेहिकानुष्ठातुर्ब्रह्मचारिणः 'एकाहमशुचिर्भूत्वा' इति ब्रह्मपुराणवाक्येन एकाहकालव्याप्याशौचं विधीयते । एकाहश्च पित्राद्यौर्ध्वदेहिकानुष्ठानस्य प्रथमारम्भदिनमेव । ततश्चाऽऽरम्भदिवसे षष्टिघटिकात्मकसंपूर्णाहव्यापकमाशौचं भवति । तत्प्रयुक्त कर्मलोपश्चापि भवति । द्वितीयादिदिनेषु तु 'तेनाऽऽशौचं न कर्तव्यम्' 'तावत्कालमशौचं स्यात' इति संवर्तप्रजापतिवचनयोर्यथाश्रुतार्थं गृहीत्वा वचनद्वयाविरोधेन पूर्वोत्तरभागरहितपिण्डदानकालमात्रव्यापकमाशौचं प्रतिदिनं भिन्नं चेति दिवोदासादय आहुस्तद्गौरवदोषग्रस्तत्वान्नाऽऽदरणीयतामर्हतीत्याह—दिवोदासादयस्त्वित्यादिना नानाशौचकल्पनागौरवादुपेक्ष्यमित्यन्तेन ।

अन्ये त्वज्ञातिकेभ्यो यदि ददाति तदा तत्प्रयुक्ता-
शुभाः स्युः कुर्युः कृच्छ्रत्रयं च ॥

ब्रह्मचारिणोऽन्येऽसपिण्डा अज्ञातिकेभ्योऽसपिण्डेभ्यः समोत्कृष्टवर्णेभ्यः स्नेहादिना यद्यन्नजलादीन्ददाति तदा तज्जातिप्रयुक्ताशौचभाजः स्युस्तदन्ते च *कृच्छ्राणां प्राजापत्यादीनां स्नेहलोभाद्यनुसारेण गुरु-

---

* कृच्छ्राणामिति । एकभक्तत्रयनक्तत्रयायाचितत्रयोपवासत्रयात्मको जपहोमादिसहितो द्वादशदिनसाध्यो व्रतविशेषः प्राजापत्यकृच्छ्रः । स च ग्रासतत्संख्याल्पाधिक्यदिनसंख्याल्पाधिकत्वेतिकर्तव्यताल्पाधिकत्वादिना शिशुकृच्छ्रकृच्छ्रातिकृच्छ्रादिसंज्ञाभेदाऽनेकविधः । तत्र दिनेतिकर्तव्यतयोराधिक्ये सति ग्रासतत्संख्ययोश्चाल्पत्ववान् गुरुभूतः कृच्छ्रः । ग्रासतत्संख्ययोरधिकत्वे सति दिनेतिकर्तव्यतयोश्चाल्पत्ववाँल्लघुभूतः कृच्छ्रः । तथा सांतपनमहासांतपनतप्तशीतपर्णकृच्छ्राख्या अन्येऽपि बहवः कृच्छ्रा मन्वादिभिः प्रोक्ताः सन्ति । तेषां च सर्वेषां गुरुलघुभूतानां प्राजापत्यादिकृच्छ्राणां शक्ताशक्तापेक्षया पापाल्पाधिकत्वापेक्षया च व्यवस्था कर्तुमुचितेत्याशयेनाऽऽह—कृच्छ्राणां प्राजापत्यादीनां गुरुलघुभूतानामित्यादि । तथा च कृच्छ्राणां स्वरूपतो भिन्नानां प्राजापत्यादीनां त्रयमिति समासार्थः । ननु कृच्छ्रस्य एकस्यैव प्राजापत्यस्य आवृत्त्या भिन्नस्य त्रयमित्यर्थः । ननु त्रयमिति त्रित्वसंख्याभिधानात्तस्याश्च पूर्वपदार्थेऽन्वयोपपत्तये प्राजापत्यकृच्छ्रस्यैकस्यैवाऽऽवृत्त्या भेदं परिकल्प्य कृच्छ्राणामिति विग्रहीष्यते । तथा च कथं स्वरूपतो भिन्नानामेव प्राजापत्यादीनां त्रयमुच्यत इति चेत्—'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायेन त्रित्वसंख्यान्वययोग्यानां स्वरूपतो भिन्नानां मुख्यकृच्छ्राणां प्राजापत्यादीनां ग्रहणे संभवति सति एकस्यैवाऽऽवृत्त्या भिन्नस्य प्राजापत्यकृच्छ्रस्य गौणस्य त्रित्वसंख्यान्वयित्वेन ग्रहणस्य दूरापास्तत्वात् । अगतिकगतिर्ह्येषा यद्गौणार्थस्य ग्रहणम् । यथा 'आरण्यानाकाशेष्वालभेरन्' इति श्रुतावाकाशपदोत्तरोपात्तस्य बहुवचनस्योपपत्तये 'शब्दगुणकमाकाशं तच्चैकम्' इति नैयायिकस्मरणादेकस्याकाशस्योपाधिभेदेन गौणभेदाङ्गीकारः । यत्र तु गतिः समस्ति न तत्र कथमपि गौणार्थग्रहणं भवति । अत 'एवाऽऽरण्यान्' इत्यस्यैकस्यैवाऽऽरण्यपशोर्देशकालादिभेदभिन्नस्याऽऽलम्भनमिति न वाक्यार्थः । किंतु स्वरूपतो भिन्नानामनेकारण्यपशुव्यक्तीनामालम्भनमिति सिद्धान्तः । तद्वत्प्रकृतेऽपि साक्षाद्भेदाश्रयाणां कृच्छ्राणां ग्रहणं युक्तं न तु गौणभेदाश्रयस्य कृच्छ्रस्येति बोध्यम् किंच 'कुर्युः कृच्छ्रत्रयं च' इति त्रिंशच्छ्लोकीस्थवाक्यस्य मूलभूत आर्षवचने (म. स्मृ. अ. ११ श्लो. १९७)

लघुभूतानां त्रयं कुर्युः । न तु त्रिः प्राजापत्यम् । संख्यायाः पृथङ्निवेशितत्वात् । तथा च प्रदीपाद्युदाहृतवाक्यम्—

सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे नरः ।
सोऽपि कुर्यान्नवश्राद्धं शुध्येत्तु दशमेऽहनि ॥ इति ।

कृच्छ्रत्रयमुक्तं मनुना—

*व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ।
अभिचारमहीनं च त्रिभिः कृच्छ्रैर्विशुध्यति ॥ इति ।

---

'त्रिभिः' कृच्छ्रैः' इत्युक्तम् । तत्र' 'कृच्छ्रैः' इत्येतावता कपिञ्जलाधिकरणन्यायेन ( बहुवचनं त्रित्वे पर्यवसानमिति हि तत्र सिद्धान्तितम् ) त्रित्वसंख्यायां पर्यवसन्नेन बहुवचनेनैव मुख्यस्य गौणस्य वा कृच्छ्रत्रयस्य लाभे सिद्धे यत् 'कृच्छ्रैः' इति पदापेक्षया पृथक्पदेन त्रिभिरित्यनेन त्रित्वसंख्यां निवेशयति तत्स्वरूपतो भिन्नानां प्राजापत्यादीनां मुख्यानामेव कृच्छ्राणां ग्रहणमित्यवगमयति । तदनुवादकं चेदं कृच्छ्रत्रयपदम । अतस्तदनुसारेणैवमेव कृच्छ्रत्रयपदव्याख्यानं युक्तम् । अन्यथाऽत्रापि 'कुर्युः कृच्छ्रान्' इत्येवावक्ष्यत् । तदुक्तं संख्यायाः पृथङ्निवेशितत्वादिति । संख्यायाः— कृच्छ्रगतत्रित्वसंख्यायाः । 'कृच्छ्रान्' इत्यपेक्षया पृथक्पदेन त्रयमित्यनेन निवेशितत्वादुपात्तत्वादिति तदर्थः ।

* व्रात्यानामिति । मनुस्मृतावेकादशेऽध्याये सप्तनवत्युत्तरशततमः ( १९७ ) श्लोकोऽयम् । अस्यार्थः—ब्राह्मणक्षत्रियविशां मध्ये यो यस्य 'आषोडशाद्ब्राह्मणस्य' ( म० स्मृ० अ० २ । ३८ ) इत्यादिनाऽऽनुकल्पिकोऽप्युपनयनकाल उक्तः षोडशादिवर्षपर्यन्तस्तत्राप्यकृतोपनयना एते ब्राह्मणादयस्त्रयो वर्णाः पतितसावित्रीका उपनयनानर्हा व्रात्या इत्युच्यन्ते । तेषां व्रात्यानां प्रायश्चित्तार्थत्वेन विहितस्य व्रात्यस्तोमादेः कृतोर्याजनमार्त्विज्येनोपदेष्टृत्वेन च कृत्वा, परेषां मातापित्रादिपञ्चव्यतिरिक्तानामन्त्यकर्म निषिद्धौर्ध्वदेहिकदाहश्राद्धादि कृत्वा, तथा—अभिचारो नाम 'वैदिकेन शापादिना मन्त्रप्रयोगेण श्येनादियागेन वा शत्रुमारणम्' इति मेधातिथिः । 'श्येनादियागेनानपराद्धस्य मारणम्' इति कुल्लूकभट्टः । 'विप्रातिरिक्तस्य रोगाद्युत्पादनम्' इति राघवानन्दः । 'हिंसाफलकं कर्म श्येनादि' इति सर्वज्ञ नारायणः । 'अथर्ववेदोक्तमन्त्रयन्त्रादिनिष्पादितमारणोच्चाटनादिहिंसात्मकं कर्म' इति भरतः । 'मारणादिफलकस्तान्त्रिकः प्रयोगविशेषोऽभिचारः । स तु षड्विधः- मारणं, मोहनं, स्तम्भनं, विद्वेषणं, उच्चाटणं, वशीकरणम्' इति तन्त्रसारः । तं कृत्वा ( अनभिचारणीयस्याभिचारं कृत्वेत्यर्थः ) । 'अहीनमग्निक-

रम्' इति श्रुतेरहीन द्विरात्रत्रिरात्रादिकं यागविशेषं च कृत्वा त्रिभिः कृच्छ्रैः शुध्येत् । पूर्वोक्तचतुष्टयानुष्ठानजन्यदुरितनिर्बर्हणार्थं कृच्छ्रत्रयमनुष्ठेयत्वेन विधीयते । ननु योऽयमहीनाभिचारयोः प्रायश्चित्तार्थः कृच्छ्रत्रयविधिः सोऽहीनाभिचारयोः कर्तुर्यजमानस्य न भवति । कस्य तर्हीति चेत् 'व्रात्यानां याजनम्' इति याजनोपक्रमादत्रापि तत्संबन्धेनाहीनाभिचारयाजकानामृत्विजामिति गृहाण । यजमानस्य तु चोदनाप्रयुक्ता हि तत्कर्मानुष्ठाने प्रवृत्तिः । तस्याश्च प्रतिषेधाभावे कथंकारं प्रायश्चित्तविधिः समगच्छताम् । न च प्रायश्चित्तविध्यन्यथानुपपत्त्या तत्प्रतिषेधोऽनुमीयतामिति वाच्यम् । चोदनारूपप्रत्यक्षप्रमाणसिद्धत्वेन प्रबलायाः प्रवृत्तेः प्रायश्चित्तविध्यन्यथानुपपत्त्याऽनुमितत्वाद्दुर्बलेन तेन बाधायोगाद्दृष्टदोषदुष्टविकल्पापत्त्या निषेधस्य नैरर्थक्यप्रसङ्गाच्च । नन्वेवं भवत्वहीने विधिवाक्यतः प्रवृत्तिः, श्येनयागादौ तु कथं प्रवृत्तिः । नहि तत्र 'शत्रून्मारयेत्' इति विधिरस्ति । किं तर्हि, यः शत्रोर्मारणं कामयते तेन तत्सिद्ध्यर्थं श्येनादि कर्तव्यमित्यभ्यनुज्ञामात्रं क्रियते । शत्रुमारणे च लिप्सा(राग)प्रयुक्ता प्रवृत्तिः । सा च 'न हिंस्यात्सर्वा भूतानि' इति श्रुत्या निषिद्धा । तथा च हिंसाया निषिद्धत्वान्निषिद्धहिंसात्मकाभिचारमाचरत एतत्प्रायश्चित्तविधिसंभवादभिचारे यजमानस्यायं कृच्छ्रत्रयविधिः । अहीने तु शास्त्रतः प्रवृत्तिः । सा च न निषिद्धेति निषेधाभावे प्रायश्चित्तविधानानुपपत्त्याऽहीने यजमानस्य प्रायश्चित्तविधानासंभवेन याजनाधिकारादहीन ऋत्विजामयं कृच्छ्रत्रयविधिः । इति प्राप्ते ब्रूमः—अहीनेऽपि लिप्सा(राग)प्रयुक्तैव प्रवृत्तिः । यतः फलकामस्य तत्राधिकार उच्यते । न तु फलकामना तत्र प्रतिषिध्यते । नापि काम्यमानो योऽर्थस्तदुत्पत्त्यनुकूलो व्यापारः प्रतिषिध्यते । स्वर्गादिफलकं कर्म न कर्तव्यमिति । ततश्च स्वर्गादिफलस्य तदुत्पत्त्यनुकूलव्यापारस्य च निषेधाभावेन स्वर्गादिफलानुकूलव्यापारवतो यजमानस्य प्रायश्चित्तविधानासंभवात्स्वर्गादिफलोत्पत्त्यनुकूलव्यापारानुकूलव्यापारवतामृत्विजामेवायं कृच्छ्रत्रयविधिः पर्यवस्यत्यहीने । अभिचारे तु हिंसात्मकस्य फलस्य तदुत्पत्त्यनुकूलव्यापारस्य च 'न हिंस्यात्' इति श्रुतिवचनेन निषिद्धत्वाद्धिंसाफलोत्पत्त्यनुकूलश्येनादिव्यापारात्मकाभिचारवतो यजमानस्य प्रायश्चित्तविधिसंभवेनाभिचारे तत्कर्तुरेवायं कृच्छ्रत्रयविधिः पर्यवस्यतीति केचिदाहुः । मनुस्मृतिमन्वर्थसुक्तावलीटीकाकारो राघवानन्दस्तु—अहीनाभिचारयोरुभयोरपि तत्कर्तृकारयित्रोरुभयोरपि प्रायश्चित्तार्थः कृच्छ्रत्रयविधिरित्याह । अत एव 'अहीनं त्रिरात्रादिसाध्यमभिचारं कारयित्वा कृत्वा वा' इति व्याख्यातवान् सः । परे तु 'वाकूघ्नं वै ब्राह्मणस्य' इत्यभिचारणीयाभिचारोऽप्यहीनवदसह्यात्ऽऽम्नात एवेति तुल्यावहीनाभिचारौ । तत्रोभयत्रापि ऋत्विजामेव प्रायश्चित्तं युक्तमित्यभिदधुः ।

अत्र च यद्यप्यभिचरन्नपीत्यपिशब्दोऽहीनयाजकान्त्येष्टियाजकयोः संग्रहार्थ इत्युक्त्वा मिताक्षरायामेतद्वाक्योपन्यासाद्याजनोपक्रमादहीने च तदन्वयादन्त्यकर्मण्यपि *याजयितुरेवेदं प्रायश्चित्तमिति प्रतीयते । तथाऽप्यहीनस्य +विहितत्वेन ×तत्कर्तुः प्रायश्चित्तासंभवात्तत्र =याजनान्वयेऽपि ※न कदाचिद्गोत्रायेत्यादिवाक्येन परान्त्यकर्मणो निषिद्धत्वात्तत्कर्तुरेव प्रायश्चित्तसंभवात्स्वरसभङ्गेनैव मेधातिथिव्याख्यामनुसृत्येदमुक्तम् । ※धर्मार्थे सकलौर्ध्वदैहिककरणेऽपि पिण्डदानाद्यनन्तरं स्नान-

* याजयितुरिति । अयं भावः—व्रात्यानां याजनमिति मनुस्मृतावुपक्रमस्थयाजनस्य व्रात्यवन्मिताक्षरायामहीनेऽप्यन्वयदर्शनेन नदीस्रोतोन्यायेन तन्मध्यस्थयोरन्त्यकर्माभिचारयोरपि तत्संबन्धावश्यकत्वेनान्त्यकर्मण्यभिचारे याजनं च कृत्वेत्यर्थादन्त्यकर्माभिचारयोरपि याजयितुरेवेदं प्रायश्चित्तं प्रतीयत इत्यर्थः ।

+ विहितत्वेनेति । अहीनस्याऽऽवृत्तसोमयागरूपद्विरात्राद्यहर्गणात्मकत्वात्सोमस्य द्विरात्राद्यहर्गणस्य च 'सोमेन यजत' 'यद्द्विरात्रस्य प्रथममहरनुष्ठयम्' इत्याभ्यां विहितत्वेनेत्यर्थः ।

× तत्कर्तुरिति । 'तत्प्रयोजको हेतुश्च' (पा० सू० १।४।५५।) इत्यत्रत्य 'तत्प्रयोजकः' इति निर्देशेन कर्त्रर्थतृजकाभ्यां षष्ठ्या न समास इत्यर्थक 'तृजकाभ्यां कर्तरि (पा० सू० २।२।१५) इति षष्ठीसमासनिषेधस्य क्वचिदप्रवृत्त्यनुमानात्तस्य कर्तुरिति कर्तृषष्ठ्या समासः । अथवा शेषषष्ठ्या समासो बोध्यः । तस्य द्विरात्राद्यहर्गणात्मकस्याहीनसंज्ञकयागविशेषस्य कर्तुरनुष्ठातुर्यजमानस्य प्रायश्चित्तविधानासंभवादित्यर्थः ।

= याजनान्वयेऽपीति विहिते च प्रतिषेधानवकाशः' इति न्यायेन 'अहीनमशुचिकरम्' इति श्रुत्युक्तप्रतिषेधस्य याजयितृपरत्वावश्यंभावाच्च हीने याजनसंबन्धोऽपीत्यर्थः ।

※ 'न कदाचिद्गोत्राय श्राद्धं कार्यमगोत्रजैः' इत्यादिवचनैः सर्वेषामसपिण्डानामसपिण्डौर्ध्वदैहिकानुष्ठानस्य निषिद्धत्वादाचार्यादिव्यतिरिक्तासपिण्डान्त्यकर्मकर्तुः प्रायश्चित्तविधिसंभवात्तत्परमिदं प्रायश्चित्तमिति मेधातिथिस्वरस इति बोध्यम् ।

※ अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः । पदे पदे यज्ञफलमनुपूर्वं लभन्ति ते ॥ न तेषामशुभं किंचित्पापं वाऽशुभकर्मणाम् । जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥ इति पराशरवचनमनुसंधायाऽऽह—धर्मार्थमित्यादि स्नानमात्राच्छुद्धिरित्यन्तम् ।

* मात्राच्छुद्धिः । स्ने+हादिसंबन्धेन तु ×सवर्णानां दाह=मात्रे त्रिरा+त्रम् । ◡ असंबन्धिद्विजान्वहित्वा दहित्वा च सद्यः शौचम् । संबन्धे त्रिरात्रमिति पैठीनसिस्मरणात् । उ꙰त्तमवर्णदाहमात्रेऽप्यवरश्चेदित्यादिगौत-

---

* इयं च स्नानमात्राच्छुद्धिः स्वसवर्णसपिण्डव्यतिरिक्तानाथनिर्हरणादिविषयेति बोध्यम् । ब्राह्मणो हीनवर्णस्य न कुर्यादौर्ध्वदेहिकम् । कामाल्लोभात्तथा मोहात्कृत्वा तज्जातितां व्रजेत् ॥ इति ब्राह्मे ब्राह्मणकर्तृकस्य स्वापेक्षया हीनवर्णोद्देश्यकान्त्यकर्मानुष्ठानस्य सर्वथा निषिद्धत्वात् । यद्यपि पूर्वोक्तपराशरवचने 'ये वहन्ति' इत्युक्तत्वेन निर्हरण इयं शुद्धिरिति प्रतीयते तथाऽपि क्रियाकरणेऽग्निदाने चापीयमेव शुद्धिर्ज्ञेया । प्रेतसंस्पर्शसंस्कारैर्ब्राह्मणो नैव दुष्यति । वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुध्यति ॥ इत्यपरार्के वृद्धपराशरोक्त्यनुसारात् । असंबन्धिद्विजान्वहित्वा दहित्वा चेति पैठीनसिवाक्यैकवाक्यत्वाच्च । एवं चैतदेकवाक्यत्वानुरोधेन पूर्वोक्तपराशरवचने वहन्तीति निर्हरणादिसकलौर्ध्वदेहिकक्रियोपलक्षणमिति तात्पर्यम् ।

+ स्नेहादीति । असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् । विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥ असपिण्डं ब्राह्मणं मृतं ब्राह्मणो बन्धुवत्स्नेहानुबन्धेन नत्वदृष्टबुद्ध्येत्यर्थादुक्तं भवति । मातुश्चाऽऽप्तान्संनिकृष्टान्सहोदरभ्रातृभगिन्यादीन् बान्धवान्निर्हृत्य त्रिरात्रेण शुद्धो भवतीति मनुवचनार्थं मनसिकृत्य मूले—स्नेहादीत्यादि त्रिरात्रमित्यन्तम् ।

× सवर्णानामिति । सपिण्डत्वसंबन्धशून्यसनाथसजातीयानामित्यर्थः ।

= मात्र इति । अवधारणार्थकमात्रशब्देन दाहव्यतिरिक्तनिर्हरणादिसकलप्रेतकर्मणां व्युदासः ।

+ त्रिरात्रमिति । अस्य तदन्नाशनतद्गृहवासयोरभावेऽपि मातुलत्वादिसंबन्धे चेत्यादिः । तद्गृहवासादिद्वयसत्त्वे केवलं तदन्नाशनेऽपि वा दशाह एव । संबन्धादित्रितयस्याभावे त्वेकरात्रम् । मातुलसंबन्धतद्गृहवासयोरभावेऽपि केवलं तदन्नाशने चापि त्र्यहमिति व्यवस्था बोध्या ।

◡ असंबन्धीति । सवर्णत्वविशिष्टानाथत्वे सति सपिण्डत्वादिसंबन्धशून्यानित्यर्थः ।

꙰ उत्तमेति । क्षत्रियादिरुत्तरोत्तरो वर्णः पूर्वपूर्वं वर्णं यद्युपस्पृशेत्तदा यज्जातीयं शवं निर्हरति तज्जातिप्रयुक्तं दशरात्रद्वादशरात्रादिकमाशौचमुपस्पृष्टवतोऽपि जानीयादित्यर्थः । 'अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र तच्छवोक्तमाशौ-

मोक्तं शवजात्याशौचम् । यद्यपि तत्रोपस्पर्शनं निर्हरणमिति मिताक्ष-रायां व्याख्यातं तथाऽपि कै*मुतिकन्यायेन दाहेऽपि तत्सिध्यति । भूत्वा दाहमात्रकरणेऽपि सवर्णे 'यदि निर्हरति 'इत्यादिकूर्मपुरा-

---

चम्' इति गौतमवचनानुसारेणाऽऽह—उक्तमेत्यादिना सिध्यतीत्यन्तेन । अत्र दाह-कर्तुर्हीनवर्णस्येत्यादिर्बोध्यः ।

* ननु निरुक्तगौतमवचने 'उपस्पर्शनं निर्हरणम्' इति मिताक्षरायामुक्तत्वा-त्मेतनिर्हरण इदं गौतमोक्तमाशौचविधानं न तद्दाह इत्याशङ्क्याऽऽह—कैमुतिकेति । महाकार्यकरणे समर्थस्य तदपेक्षया लघुभूतकार्यकरणेऽप्यनुक्ताऽपि शक्तिरस्तीत्यर्थ-सिद्धस्यार्थस्य प्रतिपिपादयिषायां कैमुतिकन्याय आश्रीयते । यथा चराचरगुरुः सच्चिदानन्दरूपः सदाशिवो यदा सर्वपापान्वितानप्यस्माञ्शरणागतान्सर्वदुःखेभ्यो मोचयति तदाऽल्पपापान्साधून्वा दुःखेभ्यो मोचयतीति किमु वक्तव्यम् । नैव पृथग्वक्तव्यम् । अयत्नसिद्धेऽर्थे पृथग्वचनापेक्षा नास्तीत्यर्थः । तथा प्रकृतेऽपि 'ब्रह्मचारिणः शवकर्मणा व्रतान्निवृत्तिः' इति वासिष्ठवाक्ये शवसंबन्धिनिर्हरणा-द्यौर्ध्वदेहिककर्मजातप्रतिपादकसामान्यमुखप्रवृत्तकर्मशब्दोपादानेन (अत एव कुल्लूक-भट्टः—'आदिष्टी नोदकं कुर्यात्' इति मनुस्मृतिस्थश्लोकव्याख्यानावसरे स्वकृत-मन्वर्थमुक्तावल्यां वासिष्ठवाक्यस्थं 'शवकर्मणा' इति प्रतीकमुपादाय शवनिमित्तकेन नि-र्हरणदहनोदकदानपूरकपिण्डषोडशश्राद्धादिकर्मणेति व्याख्यातवान्) निर्हरणपिण्डो-दकदानाद्यन्यतमेऽखिले वौर्ध्वदेहिके कर्मणि कथंचिद्ब्रह्मचारिणा कृते व्रतभ्रंश-प्राप्तौ 'अन्यत्र मातेत्यादिः' पर्युदासः क्रियते । एवं च मातापितृगुर्वादेरन्त्यकर्माणि निर्हरणाद्यात्मके कस्मिंश्चिदपि वा ब्रह्मचारिणा कृते व्रतभ्रंशो नास्तीत्युक्तम् । तदेकवाक्यत्वाय (अत एव कुल्लूकभट्टराघवानन्दौ 'आदिष्टी नोदकं कुर्यात्' इति मनुवचनव्याख्यानावसरे 'उदकमिति पूरकपिण्डषोडशश्राद्धादिसकलप्रेतकृत्योपलक्ष-णमिति व्याख्यातवन्तौ) । आचार्यपित्रुपाध्यायानिति याज्ञवल्क्यवचनस्थनिर्हृत्यग्र-हणस्योपलक्षणत्वावश्यकत्ववद्गौतमसूत्रव्याख्यावसरे मिताक्षरोक्तनिर्हरणग्रहणस्या-प्युपलक्षणत्वावश्यकत्वे स्थिते निर्हरणे प्रोच्यमानमाशौचं दाहेऽपि सिध्यतीति किमु वक्तव्यम् । न तत्पृथग्वचनमर्हतीति न्यायेनेत्यर्थः ।

किंचापरार्कः 'प्रवेशनादिकं कर्म' इति याज्ञवल्क्यस्मृतीयवचनस्थ 'प्रेतसंस्प र्शिनाम्' इति पदस्य 'ये शवस्यालंकरणनिर्हरणदाहान्कुर्वन्ति ते शवस्पृशः' इत्यर्थं निरदिक्षत् । तत्तुल्यन्यायाद्गौतमवचनस्योपस्पृशेदित्यस्याप्ययमेवार्थो ग्रहीतुं शक्य इति दाहेऽपि तत्सिध्यतीत्यर्थः ।

णोक्तं *तदेव । हीन+वर्णोत्तमवर्णे त्ववरश्चेद्वरमित्यादि व्याघ्रोक्तं द्विगुणं जात्याशौचम् । यत्तु—

योऽसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः ।
आशौचं तु भवेत्तस्य प्रेतजातिसमं नृप ।। इति ।

ब्राह्मं ×तदापदि द्रष्टव्यम् । केचित्तु दाहमात्रेऽपि जात्याशौचं भवत्येव । पैठीनसिस्त्रिरात्रं तु तदसंभवेऽनुकल्प इति वदन्ति । =अत्र च विजातीय-

---

*तदेवेति । सपिण्डव्यतिरिक्तस्वसजातीयस्य मौल्यलोभेन दाहमात्रकरणेऽपि दाहकस्य स्वस्वजातिप्रयुक्तं दशरात्रद्वादशरात्रादिकमाशौचं भवतीत्यर्थकं 'यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः । दशाहेन द्विजः शुध्येद्द्वादशाहेन भूमिपः ।। मासार्धेन च वैश्यस्तु शूद्रो मासेन शुध्यति' इति कौर्मवचनमनुसंधायाऽऽह—भृत्येति । तदेवेति च । भृतिर्वेतनम् । मौल्यमिति यावत् । यस्य दशाहद्वादशाहादि यावत्परिमितमाशौचं विहितं तदेव तावत्परिमितमेवाऽऽशौचं सवर्णासपिण्डप्रेतदाहकस्य भवतीत्यर्थः ।

+हीनवर्णेति । समाहारे द्वंद्वः । हीनवर्णोत्तमवर्णविषये त्वित्यर्थः । अयमर्थः—हीनवर्णेन क्षत्रियादिना स्वस्वापेक्षयोत्तमवर्णस्य ब्राह्मणादेः, अथवोत्तमवर्णेन ब्राह्मणादिना स्वस्वापेक्षया हीनवर्णस्य क्षत्रियादेर्निर्हारे दाहे च 'अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र तच्छवोक्तमाशौचम्' इति गौतमवचनेन यज्जातीयशवस्य निर्हरणादिकं करोति तज्जातिप्रयुक्ताशौचं निर्हर्तुर्दाहकस्य च भवतीत्यर्थः । अत्रैव भृतिग्रहणे तु—'अवरश्चेद्वरं वर्णं वरो वाऽप्यवरं यदि । वहेच्छवं तदाशौचं द्रव्यार्थे द्विगुणं भवेत् ।। इति व्याघ्रोक्तिं लक्ष्यीकृत्याऽऽह—हीनवर्णोत्तमवर्णे त्वित्यादि द्विगुणं जात्याशौचमित्यन्तम् । यज्जातीयशवस्य निर्हरणादिकं करोति तच्छवजातीयं द्विगुणमाशौचं कुर्यादित्यर्थः ।

× ननु यदि ( उत्तमवर्णकर्तृकहीनवर्णकर्मके ) हीनवर्णकर्तृकोत्तमवर्णकर्मके च निर्हरणादौ व्याघ्रोक्तं द्विगुणं जात्याशौचमिष्यते तर्हि 'योऽसवर्णं तु मूल्येन' इति ब्राह्मोक्तवचनस्य का गतिरित्याशङ्क्याऽऽह—तदापदीति ।

= अत्रेति । यद्यपि विजातीयस्य निर्हरणे दाहाद्यौर्ध्वदेहिकाक्रियायां वाऽऽशौचप्रयुक्तो गुरुलघुभावो वक्तुमशक्यः । तादृशनिर्हरणे यादृशं यावच्चाऽऽशौचमुच्यते तादृशस्य तावतश्च तादृशदाहाद्यौर्ध्वदेहिकक्रियायामाशौचस्योक्तत्वात् । तथाऽपि प्रायश्चित्ततदभावाभ्यां तयोर्मध्ये विशेषोऽवधार्यते । दाहादौ कृच्छ्रादिप्रायश्चित्तसहितमाशौचं निर्हरणे तु प्रायश्चित्तरहितं तदुक्तम् । एवं च दाहादौ प्रायश्चित्तस्या-

दाहादौ प्रायश्चित्तकृत एव निर्हरणादिष्वेवः । आशौचं तु तद्वदेव ।
* प्रायश्चित्तस्याऽऽशौचानुसारेण न्यूनाधिकभावः कल्पनीयः ।

अधमदहनविधौ तं तमेवाऽऽप्नुवन्ति ।

स्वापेक्षयाऽ+धमवर्णस्यासपिण्डस्य दहनादिकरणे, यस्य दाहादि कुर्वन्ति तं तं वर्णमाप्नुवन्ति । तत्तुल्या भवन्तीत्यर्थवादः । तेन

---

धिकस्य विधानेन निर्हरणापेक्षया तत्र दोषाधिक्यं कल्पनीयमित्याह—प्रायश्चित्तकृत एवेति । आशौचं तु तद्वदेवेति च ।

*प्रायश्चित्तेति । अयं भावः—ब्राह्मणेन क्षत्रियस्य वैश्यस्य वा दाहाद्यौर्ध्वदेहिके संपादिते सति दाहादेः कर्तुर्ब्राह्मणस्य 'अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र तच्छवोक्तमाशौचम्' इति गौतमवचनेन क्रमेण शवजातिप्रयुक्तमाशौचं द्वादशरात्रं पञ्चदशरात्रं च विहितम् । स्वानन्तरे यदाशौचं तदपेक्षया, एकान्तरेऽधिकं प्रोक्तम् । अत आशौचन्यूनाधिकभावानुसारेणाधमदहनादिविधौ प्रायश्चित्तस्यापि न्यूनाधिकभावः कल्पनीयः । स चेत्थम्—स्वसवर्णदाहादौ यदि पादकृच्छ्रः प्रायश्चित्तत्वेन गृहीतस्तदा स्वानन्तरेऽर्धकृच्छ्रः । एकान्तरे पादकृच्छ्रसहितोऽर्धकृच्छ्रः । द्व्यन्तरे द्वावर्धकृच्छ्रौ । इत्येवं रीत्योह्यम् । भृतिग्रहणेनाधमदहनादौ तु तत्तदुक्तमाशौचं प्रायश्चित्तं च सर्वं द्विगुणं बोध्यम् । अस्यायमर्थः—भृत्या सवर्णदाहादौ प्रायश्चित्तमाशौचं च स्नेहेन सवर्णदाहोक्ताशौचप्रायश्चित्तापेक्षया द्विगुणं कार्यम् । अनन्तरे चतुर्गुणम् । एकान्तरे षड्गुणम् । द्व्यन्तरेऽष्टगुणमिति ।

+ 'नोत्तमस्तर्पयेन्नीचम्' इति निषेधमनुसंधाय ब्रवीति—स्वापेक्षयाऽधमेति । अयं भावः—ब्राह्मणेन स्वापेक्षया हीनानां क्षत्रियवैश्यशूद्राणां, क्षत्रियेण स्वापेक्षया हीनयोर्वैश्यशूद्रयोर्वैश्येन स्वापेक्षयाऽधमस्य शूद्रस्य च दाहाद्यौर्ध्वदेहिके कृते सति वैश्यान्तो ब्राह्मणादिर्दाहादेः कर्ता तं तं भावं प्राप्नोति । तेनाधमेन तुल्यो भवति । शवतुल्याधमजातितां प्राप्नोतीत्यर्थः । अत्र प्रमाणमग्रे वक्ष्यमाणं ब्राह्मवचनमेव । अत्र तं तमेवाऽऽप्नुवन्तीत्ययमर्थवादः । तेन हीनस्य स्वापेक्षया हीनस्य दाहाद्यौर्ध्वदेहिके कृते तत्र दोषाधिक्यं कल्प्यते न तु [illegible]-दाहाद्यपेक्षया प्राक्तने निर्हरणादौ । नोत्तमस्तर्पयेन्नीचम्, इति वचनेन हीनजातिकर्मकतृप्तिप्रयोजकस्यैवान्त्यकर्मणः सविशेषं प्रतिषिद्धत्वात् । तृप्तिप्रयोजकमन्त्यकर्म च दाहाद्येव नतु तदपेक्षया प्राक्तनं निर्हरणादिकमिति स्पष्टमेव । एवं च हीनविजातीयदाहादौ दोषाधिक्यात्तज्जात्याशौचं प्रायश्चित्तं चेति द्वयम् । तादृशस्य निर्हरणे तु दोषाधिक्याभावान्न प्रायश्चित्तं किंतु केवलं जात्याशौचमेव । प्रायश्चित्तं च क्षत्रियादेरुत्तरोत्तरमधमत्वाधिक्यात्तदनुसारेणाधिकं कल्प्यमिति युक्त्योह्यम् । तदेतत्सर्वमाकलय्याऽऽह—स्नेहेन तावदित्यादि ।

दोषाभिधयात्स्नेहेन तावद्दाहे सर्वस्मिन्नौर्ध्वदेहिके कृते तत्तज्जातिप्रयुक्त-माशौचं, प्रायश्चित्तं चानन्तरे द्विगुणं, एकान्तरे त्रिगुणं व्यन्तरे चतुर्गुणम् । भृत्या त्वाशौचं प्रायश्चित्तं च तत्तदुक्तापेक्षया द्विगुणं भवतीत्यर्थः । तथा च ब्रह्मपुराणे—

ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन ।
कामान्मोहाद्भयाल्लोभात्कृत्वा तज्जातितां व्रजेत् ॥ इति ।

ब्राह्मणग्रहणमु * पलक्षणम् । अधमजातिप्राप्तेरेव दोषत्वात्सत्यपि-स्त्वन्यवर्णानामिति सामान्यग्रहणे हीनवर्णपरमेवेदम् । अत्र च कामादिहेतूपादानाद्धर्मार्थं द्विजानां द्विजप्रेतदाहादौ दोषाभावो गम्यते । शूद्रस्य तु धर्मेणापि द्विजैर्दाहादि न कार्यम् । शूद्रेण च तेषामिति निर्हरणाशौच उक्त + प्रायम् । अत्र च निर्हाराद्याशौचे निर्हरणादिकर्तृसंबन्धिनां

* उपलक्षणमिति । अयं भावः—ब्राह्मणेन स्वापेक्षयाऽन्यवर्णानां हीनजातीयानां क्षत्रियादीनां दाहाद्यौर्ध्वदेहिके कृते सति दाहादेः कर्ता दाहाद्यन्त्यक्रियाविषयक्षत्रियादिहीनजातितां प्राप्नोतीत्यर्थकेन ‘ब्राह्मणस्त्वन्यवर्णानाम्’ इति ब्रह्मपुराणस्थवचनेनाधमजातिप्राप्तिरूपो दोषो विधीयते । स चाधमजातिप्राप्तिरूपो दोषो न केवलं हीनजातीयक्रियाकर्तुर्ब्राह्मणस्यैव संभवति किंतु क्षत्रियवैश्ययोरपि संभवति । तयोरपि वैश्यशूद्रयोः स्वापेक्षयाऽधमजातीययोः केनापि कारणेनान्त्यक्रियाकारित्वस्य संभवात् । एवं चोत्तमजातीयेन स्वापेक्षयाऽधमजातीयस्य दाहाद्यन्त्यविधावनुष्ठिते स्वापेक्षयोत्तमजातीयोऽधमजातितामाप्नोति, न केवलमुत्तमजातिर्ब्राह्मण एवाधमजातिं लभत इति ब्राह्मवाक्यार्थः पर्यवस्यति । तथा च ब्राह्मवचनस्थं ब्राह्मणशब्दोपादानं यत्किंचिदपेक्षयोत्तमजातीयत्वविशिष्टस्योपलक्षणं सिध्यति । न तत्र ब्राह्मणत्वे निर्भरः कार्य इति यावत् । अन्त्यक्रियाकर्तृवाचिब्राह्मणग्रहणस्योपलक्षणत्वाङ्गीकारादेव च तादृशक्रियोद्देश्यभूतार्थकत्वेनोपात्तस्यान्यवर्णानामित्यस्य सामान्यरूपेण क्षत्रियवैश्यशूद्रवाचित्वेऽपि यत्किंचिदपेक्षया हीनजातिपरत्वं संपद्यत इति बोध्यम् ।

+ उक्तप्रायमिति ‘मृतं द्विजं न शूद्रेण हारयेन्न शूद्रं द्विजेन’ इति विष्णुस्मृतावविशेषेण शूद्रस्य कर्तृत्वेन कर्मत्वेन च निषेधश्रवणादुक्तप्रायमित्यर्थः । अत्र यद्यपि ‘न हारयेत्’ इत्युक्तत्वाद्द्विजकर्मकनिर्हरणक्रियानिरूपितस्यैव कर्तृत्वस्य तथा द्विजकर्तृकनिर्हरणक्रियानिरूपितस्यैव कर्मत्वस्य च निषेधः शूद्रे प्रतीयते न तादृशदाहादिक्रियानिरूपितस्य, तथाऽपि दाहाद्यपेक्षया स्वल्पदोषयुततादृशनिर्हरणक्रियानिरूपितयोः कर्तृत्व-

भार्यापुत्रादीनां द्रव्याणां च नाऽऽशौचं किंतु * तस्यैव । + तस्यापि नित्यकर्मलोपो नास्ति ।

× आशौचं यस्य संसर्गादापतेद्गृहमेधिनः ।
क्रियास्तस्य न लुप्यन्ते गृ=ह्याणां च न तद्भवेत् ॥

इत्यङ्गिरःस्मरणात् ॥ १४ ॥

⊙ पालाशीमाहिताग्नेः प्रतिकृतिमथवाऽस्थीनि दग्ध्वा दशाहाद्याशौचा ज्ञातयः स्युस्तत इतरनृणां त्रीण्यहान्येव कुर्युः । अन्यो विप्राद्यशौचे सकृददनमदंस्तावदाशौचकृत्स्याद्यावत्तेषां तदन्ते व्रतमपि च चरेद्रोदने त्वेकरात्रम् ॥ १५ ॥

---

कर्मत्वयोः शूद्रे निषेधे प्रतिपाद्यमाने तदपेक्षयाऽप्यधिकदोषयुततादृशदाहादिक्रियानिरूपितयोः कर्तृत्वकर्मत्वयोः शूद्रे निषेधः प्रतिपादयितुमभीष्ट इति किमु वक्तव्यमिति कैमुतिकन्यायेन ( निर्हृत्यापि व्रती व्रती ( याज्ञ. स्मृ. ३।१९ ) इतिवचनस्थनिर्हरणग्रहणवद्विष्णुस्मृतिस्थनिर्हरणग्रहणस्याप्युपलक्षणत्वाङ्गीकारेण च ) विष्णुस्मृतिप्रदिपादितो निषेधो दाहादावपि सिध्यतीति बोध्यम् ।

* तस्यैवेति । निर्हरणादिकर्तुरेव । एवकारेण तत्स्वामिकानां पुत्रकलत्रादीनां द्रव्याणां च व्यावृत्तिः ।

+ तस्यापीति । निर्हरणादेः कर्तुरपि । अपिशब्देन तत्संबन्धिनां भ्रातृपुत्रादीनामाशौचाभावप्रयुक्तो नित्यकर्मलोपाभावः समुच्चिचीषितः ।

× निर्हरणादिप्रयुक्ताशौचे वर्तमानेऽपि नित्यकर्म न हातव्यं किंचैतदाशौचं न तत्संबन्धिनामित्यर्थिकां स्वोक्तिमार्षवचनोपन्यासेन प्रमाणयति—आशौचमिति ।

= गृह्याणामिति । गृहे भवानां भार्यादीनां तद्द्रव्याणां च ।

⊙ अथेदानीं देशान्तरमृतस्य शरीरालाभे च दाहविधिं पञ्चदशवृत्तेनाऽऽह—पालाशीमिति । आहिताग्नेः साग्निकस्यास्थिभिः प्रतिकृतिं कृत्वा तदलाभे शौनकादिगृह्योक्तविधिना पालाशीं पलाशनिर्मितां प्रतिकृतिं कृत्वा तां च दग्ध्वा ज्ञातयो दशाहाद्याशौचं कुर्युः । तत इतरनृणामनाहिताग्नीनां पालाश्यादिप्रतिकृतिं कृत्वा तथैव दग्ध्वा ज्ञातयस्त्रीण्यहान्याशौचभाजः स्युः । अत्रोभयत्र मूलं च वसिष्ठवचनम्—'आहिताग्निश्चेत्प्रवसन्म्रियेत तत्पुनःसंस्कारं कृत्वा शववदाशौचम् । अनाहिताग्नेस्त्रिरात्रमिति । सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च कटाग्निना । असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स बान्धवैः ॥ एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥ इति । अन्यः सकुल्यो दशाहाशौचवतां गृहेऽदनमन्नं सकृदेकवारमप्यदन् भुञ्जंस्तावदाशौचकृत्तेषां यावत्कालमाशौचं तावदाशौचभाक् स्यात् । अशुचिर्भवेत् । अन्त आशौचान्ते

आहिताग्नेः श्रौताग्निमतः प्रेतस्य काष्ठवद्दाहादिना नष्टशरीरस्यास्थ्नां लाभे पञ्चगव्यप्रोक्षणादिपूर्वं तानि दग्ध्वा तेषामप्यलाभे पालाशीं पलाशवृन्तनिर्मितां कुशमयीं वा प्रतिकृतिं स्वशाखोक्तविधया कृत्वा तदैव दग्ध्वा यदा कदाचिद्दाहेऽपि तद्दिन*प्रभृत्येव ज्ञातयः सर्वे सपिण्डा दशाहादिसंपूर्णाशौचिनः स्युः । +इदं चोपलक्षणम् । तेन दुहितृदौहित्रादयोऽपि दाहदिनप्रभृत्येव स्वस्वाशौचभागिनः स्युः । तथा च वसिष्ठः—आहिताग्निश्चेत्प्रवसन्म्रियेत पुनः संस्कारं कृत्वा शववदाशौचमिति । अत्र च पूर्वकृतायाः शरीरप्रतिपत्तेर्लौकिकत्वात्संस्कारत्वाभावेऽपि संस्कारसमानकार्यत्वात्संस्कारत्वं विवक्षित्वा तदपेक्षया प्रतिकृतिदाहस्य पुनःसंस्कारत्वोक्तिः । यदा तु प्रोषितमृतस्याप्याहिताग्नेः शरीरं लभ्यते तदा तदेव दग्धव्यम् । तथा च ब्रह्मपुराणे—

आहिताग्नौ विदेशस्थे मृते सति कलेवरम् ।
निधेयं नाग्निभिर्यावत्तदीयैरपि दह्यते ॥
तावत्कालं दक्षिणाग्नेः कुशैरास्तीर्य वेदिकाम् ।
अधोमुखीं च समिधं धारयित्वा विधानवत् ॥

---

यस्य यद्व्रतं विहितं तदपि चरेत्कुर्यात् । 'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते' इति निषिद्धाचरणादिति भावः । रोदने त्वेकरात्रम् । प्रेतस्य सपिण्डैः सह रोदने कृत एकरात्रमाशौचं स्यात् । तथा च पारस्करः—मृतस्य बान्धवैः सार्धं कृत्वा तु परिदेवनम् । वर्जयेत्तदहोरात्रं दानश्राद्धादिकर्मसु ॥ इति ।

* तद्दिनप्रभृत्येवेति । दाहदिनप्रभृत्येवेत्यर्थः । एवकारेण मरणदिवसव्युदासः । 'साग्नेः संस्कारकर्मणः' दाहादग्निमतो विद्यात्' इत्यादिवचनैः श्रौताग्निमतो मरणे दाहदिवसमारभ्यैवाऽऽशौचस्य विहितत्वात् । प्रतिकृतिदाहेऽपि तद्वदेव दाहदिनमारभ्यैवाऽऽशौचं कर्तव्यम् । तदुक्तं वसिष्ठवचने—शववदाशौचमिति । प्रत्यक्षतः शवदाहे यथा दाहदिनमारभ्यैवाऽऽशौचं विधीयते न दाहात्प्राङ्मृतिदिनमारभ्य, प्रतिकृतिदाहेऽपि तथैवाऽऽशौचं कर्तव्यं न तु प्रतिकृतिदाहात्प्राङ्मरणदिनमारभ्येति तदर्थः ।

+ इदमिति । इदं सपिण्डग्रहणम् । उपलक्षणमिति । आशौचप्रयोजकसपिण्डत्वसोदकत्वदुहितृत्वदौहित्रत्वादिसंबन्धवत उपलक्षणमित्यर्थः । उपलक्षणत्वे प्रमाणं च वसिष्ठवचनमेव । आशौचविधानोद्देश्यभूतसंबन्धिविशेषानादरेण शववत्प्रत्यक्षशवदाहवदाशौचविधावुद्देश्यत्वेन प्रत्यासत्त्या शवसंबन्धिनां भार्यादुहित्रादीनां लाभादिति भावः ।

परकीयेन वत्सेन दुग्ध्वा तां गां च तद्गृहे ।
गोक्षीरेणाथ तेनैव जुहुयादग्निहोत्रकम् ॥
पश्चादग्नीन्समारोप्य यज्ञभाण्डानि तान्यपि ।
उपयच्छेत विप्राय तत्तत्तोयदमेव हि ॥
मथित्वाऽग्निप्रणयनं कृत्वा तत्कुणपं दहेत् । इति ।

तत इतरनृणां त्रीण्यहान्येव कुर्युः ।

आहिताग्नीतरेषां स्मार्ताग्निमदादीनां नृणां ततः प्रतिकृतिदाहानन्तरं त्रीण्येवाहान्याशौचं कुर्युर्नतु दशाहादि । तथा च ब्रह्मपुराणे—

अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः ।
तदलाभे पलाशानां वृन्तैः कार्यः पुमानपि ।
शतैस्त्रिभिः षष्ट्यधिकैः शरं वृन्तैर्विधानतः ।
वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्मणा ॥
ऊर्णासूत्रेण बद्ध्वा तु प्रलेप्तव्यो यवैस्तथा ।
सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाऽग्निना ॥
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स बान्धवैः ।
एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥ इति ।

त्रिरात्रमध्ये पिण्डदानप्रकारोऽन्य*त्र निरूपितः । पर्णशरं पर्ण पलाशस्तस्य शरः पर्णत्रयवृन्तं तन्निर्मितं प्रतिरूपकमित्यर्थः । इदं चास्थ्नामप्युपलक्षणम् ।

+ विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा ।
दाहयेद्वर्हिषाऽऽच्छाद्य पात्रन्यासादि पूर्ववत् ॥
अस्थ्नामलाभे पर्णानि शकलान्युक्त×याऽऽवृता ।
दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम् ॥ इति ।

---

*अन्यत्रेति । याज्ञवल्क्यमिताक्षरादौ । तदुक्तं शातातपपारस्कराभ्याम्—आशौचस्य तु ह्रासेऽपि पिण्डान्दद्याद्दशैव तु । प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः । द्वितीये चतुरो दद्यादस्थिसंचयनं तथा । त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्ततः । इत्यादिना निरूपित इत्यर्थः ।

+ प्रेतदेहालाभे विहितस्य पर्णशरदाहस्यास्थिदाहोपलक्षणत्वे प्रमाणं प्रदर्शयन्नाह—विदेशमरणेऽस्थीनीति ।

× उक्तयाऽऽवृतेति । पूर्वोक्तयाऽऽहिताग्निप्रक्रिययेति यावत् ।

छन्दोगपरिशिष्टेऽस्थ्नामपि देहालाभे दाहविधानात् । * इदं च त्रिरात्रं निश्चितमरणस्य सर्वस्य प्रतिकृतिदाहे + संपूर्णाशौचकालादूर्ध्वं क्रियमाणे पत्नीपुत्रयोः पूर्वं × गृहीताशौचयोर्भवति । अगृहीताशौचयोस्तु = संपूर्णमेव । अगृहीताशौचत्वं च—यत्र द्वादशवर्षादिप्रतीक्षोत्तरकालं मरणावधारणेन दाहादिकं क्रियते तत्र तत्पूर्वं मरणसंदेहादेव । अन्यत्रापि मरणाज्ञानेन संभवति । पत्नीपुत्रातिरिक्तानां तु द्वादशवर्षादिप्रतीक्षोत्तर प्रतिकृतिदाहे त्रिरात्रम् । + तत्र तत्पूर्वं मरण-

---

* इदमिति । 'एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्' इति ब्राह्मवचनेन पर्णशरदाहोत्तरं विहितं त्रिरात्राशौचमित्यर्थः ।

+ 'प्रोषिते कालशेषः स्यात्' (या. स्मृ. ३ । २१) इति वचनेनाऽऽशौचप्रवृत्तिदिनादूर्ध्वमाशौचज्ञानेऽवशिष्टदिनैः शुद्धेरभिधानादाह—संपूर्णाशौचकालादूर्ध्वमिति । तथा च दशाहमध्ये प्रतिकृतिदाहे सत्ययं त्रिरात्रविधिर्न भवति ।

× गृहीताशौचयोरिति । आश्वलायनगृह्यपरिशिष्टेऽतीतसंस्कारमुपक्रम्य 'अन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचं गृहीताशौचयोः कर्माङ्गं त्रिरात्रम्' इत्यनेन गृहीताशौचयोर्भार्यापुत्रयोरेव त्रिरात्राशौचप्रतिपादनादिति भावः । तथा चागृहीताशौचयोर्नायं त्रिरात्रविधिः प्रवर्तत इत्याशयेनाऽऽह—अगृहीताशौचयोस्त्वित्यादि । अत्र यद्यपि 'दग्ध्वा अशुचिर्भवेत्' इत्यन्वये सति समानकर्तृत्वविवक्षाप्रतिपादकक्त्वाप्रत्ययश्रवणेन दाहाशुचिभवनक्रिययोरेककर्तृकत्वप्रतीत्या दाहकर्तुरेवेदं त्रिरात्रविधानं प्रतिपिपादयिषितं प्रतीयते न पत्नीपुत्रयोस्तथाऽपि निरुक्ताश्वलायनगृह्यपरिशिष्टवचोबलात्समानकर्तृकत्वाविवक्षणेन पूर्वोत्तरकालिकत्वरूपनिमित्तनिमित्तिभावमात्रांशविवक्षया क्त्वाप्रत्ययोपपादनात्प्रतिकृतिदाहनिमित्तकस्य ब्राह्मोक्तत्रिरात्राशौचस्य भार्यापुत्रविषयत्वं व्यवस्थापितं कैश्चिदिति बोध्यम् ।

= संपूर्णमेवेति । 'अन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचम्' इत्याश्वलायनगृह्यपरिशिष्टवचनेन श्रौताग्निमद्व्यतिरिक्तस्मार्ताग्निमन्निरग्निकादिमरणविषयके प्रतिकृतिदाहे पूर्वमगृहीताशौचयोः पत्नीपुत्रयोः संपूर्णाशौचविधानादिति भावः । पूर्वमगृहीताशौचवत्त्वं च प्रोषितस्य कस्यचिद्द्वादशाब्दादिप्रतीक्षावशान्मृतिसंदेहात्तदज्ञानाद्वा भवति तत्रेदं पत्नीपुत्रयोः संपूर्णाशौचं विधीयते । यद्यप्यत्र 'पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्' इति ब्राह्मोक्तं प्रतिकृतिदाहप्रयुक्तत्रिरात्राशौचं प्रसज्जते तथाऽपि पत्नीपुत्रव्यतिरिक्तसपिण्डेषु द्वादशाब्दप्रतीक्षावशान्मृतिसंदेहान्मरणाज्ञानाद्वाऽगृहीताशौचवत्सु तच्चरितार्थमिति विशेषविषयकेणाऽऽश्वलायनवचनेन सामान्यविषयकस्य तस्य बाधः ।

+ ननु पर्णशरदाहे मासत्रयमासषट्कादिकालविशेषव्यवस्थितत्रिरात्रपक्षिण्यादिवि-

कालविशेषानवधारणेन कालविशेषव्यवस्थितत्रिरात्राद्यतिक्रान्ताशौच-पक्षासंभवे प्राथमिकत्रिरात्रपक्षस्यैवोचि*तत्वात् । + अन्यत्र तु त्रिरा-

---

षयः कुतो न प्रवर्तन्त इत्याशङ्कयाऽऽह—तत्रेति । तत्र द्वादशवर्षादिप्रतीक्षोत्तरं क्रियमाणे प्रतिकृतिदाहे । तत्पूर्वं पर्णशरदाहात्प्रागित्यर्थः ।

* उचितत्वादिति । ‘ यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरात् । कुशपुत्तलदाहेन तस्य स्यादवधारणा ’ इति बृहस्पत्यादिवचनबलाद्द्वादशसंवत्सरपर्यन्तं यस्य न जीवद्वार्ता श्रूयते न चाप्यागच्छति तस्य मरणमवधार्य कुशपुत्तलादिदाहविधिना सर्वोऽपि दाहाद्यन्त्यविधिः कर्तव्यतया विधीयते । तत्र पर्णशरदाहात्प्राक्तने काले तन्मरणकल्पनाऽऽवश्यकी । कल्पितमरणस्य च दाहक्षणावधिकमासत्रयमासषट्कादिव्यवहितत्वरूपविशेषणविशिष्टप्राक्कालिकत्वकल्पनायां प्रमाणाभावेन दाहापेक्षया सामान्यतः प्राक्कालिकत्वकल्पनस्यैव न्याय्यत्वम् । अत एव नात्र गृहीताशौचवत्त्वं संभवति । अत एव च द्वादशवर्षादिप्रतीक्षोत्तरं चतुर्दशवर्षादावपि क्रियमाणे प्रतिकृतिदाहे दशाहोत्तरभाविकालविशेषावलम्बनेन प्रवृत्तानामतिक्रान्तत्वप्रयुक्तत्रिरात्राद्याशौचविधीनां न प्रवृत्तिः किंतु ब्राह्मोक्तत्रिरात्रस्यैवेत्याशयेनाऽऽह—मरणकालविशेषानवधारणेनेत्यादि । तथा च कल्पितमरणकालस्य कालत्वरूपसामान्यरूपेण ज्ञानेऽपि वारादिविशिष्टतत्तन्मासपक्षगतदिनत्वात्मकविशेषरूपेण ज्ञानाभावाद्विशिष्टकालज्ञानप्रयुक्तानां त्रिरात्रादीनां न प्रवृत्तिरिति यावत् । किंतु प्रथमोपस्थितत्वाद्दाहनिमित्तकत्रिरात्रस्यैवोचितत्वादित्यर्थः । नत्वतिक्रान्ताशौचान्तर्गतत्रिरात्रपक्ष इति यावत् । अत्रेदं बोध्यम्—मरणकालानवधारणेन व्यहाद्यतिक्रान्ताशौचानि न प्रवर्तन्त इत्युक्त्वाऽतिक्रान्तान्तर्गतप्राथमिकत्रिरात्रपक्ष एव ग्रहीतुमुचित इत्युक्तिर्व्याहता । यद्युचितस्तर्हि न प्रवर्तन्त इति विरुध्द्धि । यदि न प्रवर्तन्ते तर्हि कथं त्रिरात्रपक्षग्रहणौचित्यम् । नचाप्यौचित्ये किंचित्कारणं निर्दिष्टम् । अतः परस्परविरुद्धमेतत् । इति चेदुच्यते—एवं पर्णशरं दग्ध्वेति ब्राह्मवचने क्त्वाप्रत्ययश्रवणेनोपस्थितस्य समानकर्तृकत्वांशस्याविवक्षां कृत्वा सिद्धसाध्यसमभिव्याहारन्यायेन निमित्तनिमित्तिभावपर्यवसितपूर्वोत्तरकालिकत्वमात्रांशविवक्षणेन क्त्वाप्रत्ययोपपादने कृते दाहनिमित्ताशौचस्य पुत्रादिसर्वसपिण्डविषयकस्य सिद्धत्वेन ब्राह्मत्रिरात्रस्यात्र प्रवृत्त्या प्राथमिकत्रिरात्रपक्ष एव गृहीत इव भवतीति । एवं च ब्राह्मवचने समानकर्तृकत्वस्याविवक्षां कृत्वा पुत्रादिसर्वसपिण्डेषु दाहनिमित्तत्रिरात्राशौचविधानद्वारा त्रिरात्रपक्षस्यैव ग्रहीतुमुचितत्वादिति व्याख्येयम् । अन्यथा व्याहतत्वापत्तिर्दुरुद्धरा स्यादिति प्रतिभाति ।

\+ अन्यत्रेति । मृतिवार्तायाः श्रवणेनागृहीताशौचस्थलीयदशाहाद्युत्तरकालिकपर्णशा-

त्राद्यतिक्रान्ताशौचपक्षा एव व्यवस्थया भवन्ति । *दशाहाद्यन्तः–प्रतिकृतिदाहे तु सर्वेषां कालशेष एव नतु त्रिरात्रम् । अत्र च + सर्वत्र त्रिरात्रवचनस्याऽऽका×ङ्क्षितविधित्वं मूलम् । = तथा हि–

रदाह इत्यर्थः । त्रिरात्राद्यतिक्रान्ताशौचपक्षाः.... भवन्तीति । अतिक्रान्तत्वप्रयुक्तात्रिरात्रपक्षिण्यादिविषय एव प्रवर्तन्ते नतु पर्णशरदाहप्रयुक्तं त्रिरात्रमित्यर्थः । निर्णयसिन्धौ तु—' देशान्तरमृतं श्रुत्वा नाऽऽशौचं चेत्कथंचन । गृहीतमिति शेषः । कालात्ययेऽपि कुर्वीत दाहकाले दिनत्रयम् ' ॥ इत्यङ्गिरसा पत्नीपुत्रव्यतिरिक्तानां सपिण्डानामगृहीताशौचानां पर्णशरदाहे त्रिरात्राशौचमुक्तम् । गृहीताशौचानां तु स्नानमात्रं स्मृत्यर्थसार उक्तमित्युक्तम् ।

* दशाहेति । यद्ययं प्रतिकृतिदाहो दशाहादिमध्य एव क्रियेत तदा भार्यापुत्रादिसर्वसपिण्डानामवशिष्टदिनैरेव शुद्धिर्नतु दाहनिमित्तत्रिरात्र इत्यर्थः । ' प्रोषिते कालशेषः स्यात् ' इति याज्ञवल्क्येन दशाहादिमध्येऽशौचेऽवगतेऽवशिष्टदिनैः शुद्धेरभिधानादिति भावः । नन्वप्रोषितस्यापि मृतस्य यदि कथंचिल्लौकिकाग्निदाहजलप्रक्षेपादिना शरीरालाभेन दशाहमध्ये पर्णशरदाहः क्रियते तदाऽपि न त्रिरात्रम् । प्रोषितत्वस्याविवक्षितत्वादिति भावः । किंत्ववशिष्टदिनैरेव शुद्धिरिति बोध्यम् ।

+ सर्वत्रेति । गृहीतागृहीताशौचवत्सपिण्डविषयके प्रतिकृतिदाहनिमित्ताशौच इत्यर्थः । अत्रेदं बोध्यम्—प्रतिकृतिदाहो द्विविधः । वचनबलकल्प्यमानमरणविषयकः साक्षान्मरणविषयकश्चेति । द्वादशवर्षादिप्रतीक्षोत्तरं क्रियमाण आद्यः । मृतशरीरालाभे द्वितीयः । तत्र प्रथमे कल्पितमरणस्य सामान्यरूपेण दाहप्राक्कालिकत्वाङ्गीकारेऽपि तत्तन्मासपक्षगततिथिवारविशिष्टदिनरात्रित्वादिरूपविशेषरूपेण ( निश्चितरूपेण ) दाहप्राक्कालिकत्वावधारणकल्पनायां प्रमाणाभावान्मृतिसंदेहवशाच्चाऽऽशौचप्रवृत्तेर्व्याहतत्वेन पुत्रादिसपिण्डानां गृहीताशौचवत्त्वं नैव संभवति । द्वितीये निश्चितमृतिवार्ताश्रवणे दाहकालात्प्रागाशौचग्रहः संभवति तादृशवार्ताया अश्रवणे तु नेति । तथा चात्र दाहनिमित्ताशौचविषयः षोढा भिद्यते । स यथा—प्रथमे प्रतिकृतिदाहे नित्यागृहीताशौचकपत्नीपुत्रौ ( १ ) तथाविधः पत्नीपुत्रान्यसपिण्डश्च ( २ ) द्वितीये त्वगृहीताशौचकपत्नीपुत्रौ ( १ ) तादृशः पत्नीपुत्रान्यसपिण्डः ( २ ) तथा गृहीताशौचवत्पत्नीपुत्रौ ( ३ ) तथाविधः पत्नीपुत्रान्यसपिण्डश्चेति ( ४ ) मिलित्वा षड्भेदाः संभवन्ति । तत्र प्रथमाद्ये ( नित्यागृहीताशौचकपत्नीपुत्रे ) कल्पितमरणकालस्य सामान्यरूपेण ज्ञानेऽपि दाहकालापेक्षया दशाहादिव्यवहितप्राक्कालिकविशिष्टदिनत्वादिरूपविशेषरूपेण परिज्ञानाभावान्मृतिदिनावधिकदशाहोत्तरमासत्रयादिकालविशेषव्यवस्थितत्र्यहाद्यतिक्रान्ताशौचवि-

बाधकवचनानि न प्रवर्तितुर्मार्हन्ते । नापि 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इति मरणनिमित्तकदशाहाशौचविधायकं प्रवर्तते । तस्य निश्चितमरणस्थले सावकाशत्वात् । प्रकृतस्थले मरणस्य संदिग्धत्वाच्च । द्वितीयाद्ये ( अगृहीताशौचकपत्नीपुत्रे ) मृतिवार्ताया अज्ञानाद्यद्यपि पूर्वमाशौचग्रहो न कृतस्तथाऽपि दाहकाले मरणकालज्ञानसत्त्वात्तदवधिकदशाहोत्तरमासत्रिमासत्रयादिकालविशेषव्यवस्थितत्र्यहाद्यतिक्रान्ताशौचप्रवृत्तिर्यद्यपि समस्ति तथाऽपि निरुक्तस्थलद्वये 'अन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचम्' इत्याश्वलायनगृह्यपरिशिष्टेन प्रतिकृतिदाहनिमित्तं संपूर्णं दशाहमाशौचं विहितम् । तदुक्तं निर्णयसिन्धुटीकायां नौकायामार्डे इत्युपाह्वकृष्णंभट्टैः—'मृतिसंदेहवशात्तदज्ञानाद्वेदं संपूर्णाशौचविधानम्' इति । तच्च पत्नीपुत्रयोरेवागृहीताशौचयोः सूत्रे तथैव स्पष्टोक्तेः । आद्ये प्रतिकृतिदाहविषयेऽगृहीताशौचयोरिति विशेषणमुपरञ्जकतया बोध्यम् । तत्प्रयोजनं तु साक्षान्मरणविषयकप्रतिकृतिदाहस्थले द्वितीयतृतीये ( गृहीताशौचवत्पत्नीपुत्रे ) संपूर्णाशौचाप्रवृत्तिरिति ज्ञेयम् । द्वितीयद्वितीये ( अगृहीताशौचकपत्नीपुत्रान्यसपिण्डे ) यथायथं त्र्यहाद्यतिक्रान्ताशौचान्येव प्रवर्तन्ते । दाहकाले निश्चितमरणज्ञानसत्त्वेन प्रथमोपस्थितमरणनिमित्तकत्रिरात्राद्यतिक्रान्ताशौचविधिप्रवृत्त्यैव निर्वाहात् । नात्र ब्राह्मोक्तं त्रिरात्राशौचं प्रवर्तितुमुत्सहते । तस्य 'गृहीताशौचयोः कर्माङ्गं त्रिरात्रम्' इति गृह्यपरिशिष्टवाक्यैकवाक्यतया पत्नीपुत्रपरत्वेन व्यवस्थापितत्वात् । एवं च निरुक्तस्थले ( अगृहीताशौचकपत्नीपुत्रान्यसपिण्डे ) त्र्यहाद्यतिक्रान्ताशौचपक्षा एव यथास्वं भवन्त्येतन्मते । कल्पतर्वादिमते त्वत्र ब्राह्मोक्तं त्रिरात्रमेवेत्यन्यदेतत् । एतच्चाग्रे स्पष्टी भविष्यति । द्वितीयचतुर्थे ( गृहीताशौचवत्पत्नीपुत्रान्यसपिण्डे ) आशौचस्य पूर्वं गृहीतत्वेनातिक्रान्तत्वाभावात्त्र्यहाद्यतिक्रान्ताशौचानि नोपतिष्ठन्ते । किंतु स्नानमेव । अत एव 'गृहीताशौचानां पत्नीपुत्रान्यसपिण्डानां दाहकाले स्नानमात्रमेव' इत्युक्तं स्मृत्यर्थसारे । अन्ये तु 'देशान्तरमृतं श्रुत्वा नाऽऽशौचं चेत्कथंचन । कालात्ययेऽपि कुर्वीत दाहकाले त्रिरात्रकम्' । इति विशेषवचनात्त्रिरात्रमाहुः । नात्रापि ब्राह्मोक्तं त्रिरात्रमुपतिष्ठासति; तस्य पत्नीपुत्रविषयकत्वस्य पूर्वमभिधानात् । कल्पतर्वामते त्वत्रापि ब्राह्मोक्तं त्रिरात्रमेव । प्रथमद्वितीये ( नित्यागृहीताशौचकपत्नीपुत्रान्यसपिण्डे ) मरणकालानवधारणान्मृतिसंदेहवशाच्च त्र्यहाद्यतिक्रान्ताशौचानि न प्रवर्तितुमुत्सहन्त इति ब्राह्मोक्तमेव प्रवर्तते । न च गृह्यपरिशिष्टवाक्यैकवाक्यतया पत्नीपुत्रपरत्वस्य व्यवस्थापनात्कथमत्र ब्राह्मवचनप्रवृत्तिः । किंच दग्ध्वेति क्त्वाप्रत्ययश्रवणेन समानकर्तृकत्वप्रतीत्या दाहकर्तुरेवेदं त्रिरात्रमुचितं न पुत्रादिसपिण्डानामिति वाच्यम् । कल्पतरुदिवोदासादिग्रन्थपर्यालोचनया समानकर्तृकत्वाशाविवक्षाया आवश्यकत्वात् । अत एव निर्णयसिन्धुटीकायाम् 'गृहीताशौचयोः कर्माङ्गं त्रिरात्रम्' इति गृह्यप-

रिशिष्टवचनाद्ब्राह्मोक्तत्रिरात्रस्य पत्नीपुत्रविषयत्वमित्यस्वरस इत्युक्तम् । न चैवं द्वितीयद्वितीये ( अगृहीताशौचकपत्नीपुत्रान्यसपिण्डे ) द्वितीयचतुर्थे ( गृहीताशौचवत्पत्नीपुत्रान्यसपिण्डे ) च ब्राह्मोक्तं त्रिरात्रं प्रवर्ततेति वाच्यम् । कल्पतर्वादिमते प्रवर्तत एवेति तत्र तत्र पूर्वमुक्तमेव । परंतु टीकाकृन्मते क्वचिदन्तरङ्गत्वादतिक्रान्ताशौचप्रवृत्त्या(त्तेः) प्रयोजनाभावात्क्वचिदाशौचस्य गृहीतत्वेन कृतकृत्यत्वाद्विशेषवचनेन बाधाच्च ब्राह्मोक्तं न प्रवर्तते । एतच्चाग्रे सोपपत्तिकं विस्तरेण निरूपयिष्यते । द्वितीयतृतीये ( गृहीताशौचवत्पत्नीपुत्रे ) निश्चितमृतिवार्ताश्रवणेन दाहकालात्प्रागाशौचस्य परिगृहीतत्वेनातिक्रान्तत्वस्य वक्तुमशक्यत्वादतिक्रान्ताशौचाप्रवृत्तेर्ब्राह्मवचनेनोक्तं दाहनिमित्तकं त्रिरात्राशौचमेव प्रवर्तते । तथा च सर्वत्रेत्यस्य नित्यागृहीताशौचकपत्नीपुत्रान्यसपिण्डे गृहीताशौचवत्पत्नीपुत्रे चेति स्थलद्वये इत्यर्थः । एवं च षड्विधदाहप्रयुक्ताशौचविषयस्थलानां मध्ये यत्र न कथमप्याशौचपरिच्छेदो भवति तत्रैव ब्राह्मोक्तं त्रिरात्रं प्रवर्तत इति तात्पर्यार्थः । निरुक्तस्थलद्वये च दाहनिमित्ताशौचविधेः स्वावच्छेदकत्रिरात्ररूपकालविशेषविधाने साकाङ्क्षितत्वं भवति । एतदेव चाऽऽकाङ्क्षितविधित्वं निरुक्तस्थलद्वये स्वावच्छेदकत्वेन त्रिरात्ररूपकालविशेषग्रहणे मूलं प्रमाणं बोध्यमिति ।

×आकाङ्क्षितविधित्वमिति । अयं भावः—'एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्' इति पर्णशरदाहप्रयुक्ताशौचविधायके ब्राह्मवचने त्रिरात्रमिति पदस्योपादानमकृत्वा 'पर्णशरं दग्ध्वा अशुचिर्भवेत्' इत्येव प्रतिकृतिकर्मकं दाहं निमित्तीकृत्य यदि केवल( स्वावच्छेदककालविशेषविरहित )माशौचं विधीयेत । तथा सति पूर्वोक्तद्विविधप्रतिकृतिदाहाशौचीयस्थलद्वये तदाशौचं कियन्तं कालं व्याप्नोति ( कियत्कालपर्यन्तं भवति ) इति दाहप्रयुक्ताशौचावधेः स्वविषयाशौचपरिच्छेदककालविशेषाकाङ्क्षायाः सत्त्वेन स विधिः ( 'दग्ध्वाऽशुचिर्भवेत्' इति ब्राह्मोक्तो दाहप्रयुक्ताशौचविधिः ) तादृशाकाङ्क्षापूर्वके स्वविषयाशौचपरिच्छेदकत्रिरात्ररूपकालविशेषविधाने साकाङ्क्षो भवतीत्यतोऽस्य 'दग्ध्वाऽशुचिर्भवेत्' इति ब्राह्मोक्तदाहाशौचविधायकवचनस्याऽऽकाङ्क्षितविधित्वं भवति । एवं च प्रतिकृतिदाहं निमित्तीकृत्य स्वावच्छेदकत्रिरात्ररूपकालविशेषविशिष्टमाशौचं विधीयत इति विशिष्टविधिरयमित्यर्थः । तथा च प्रतिकृतिदाहाशौचीययादृशस्थले दाहनिमित्ताशौचविधिः स्वविषयावच्छेदकत्रिरात्ररूपकालविशेषविधाने साकाङ्क्षो भवति तादृशस्थल एवायं त्रिरात्रविशिष्टः प्रतिकृतिदाहप्रयुक्ताशौचविधिः प्रवर्तत इति यावत् । आकाङ्क्षितोऽपेक्षितो विधिः ( कालविशेषविधिः ) येन विधिना ( दाहप्रयुक्तसामान्याशौचविधिना ) स आकाङ्क्षितविधिः । तस्य भावस्तत्त्वमिति तदर्थः । एतदेव चाऽऽकाङ्क्षितविधित्वं पूर्वोक्तद्विविधप्रतिकृतिदाहविषयकस्थलद्वये तादृशाशौचावच्छेदक-

त्रिरात्ररूपकालविशेषविधाने प्रमाणं भवति। सेयमाकाङ्क्षा द्वितीयद्वितीये (अगृहीताताशौचकपत्नीपुत्रान्यसपिण्डस्थले) न जायते। तत्र दाहकालात्प्राङ्मरणाज्ञानेऽपि मरणस्य मरणदिनस्य च निश्चितज्ञानसत्त्वेन दाहापेक्षया प्रथमोपस्थितमरणनिमित्तकातिक्रान्ताशौचविधायकानां त्र्यहादिकालविशेषव्यवस्थितानाम् 'आ त्रिपक्षात्त्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः' इत्यादिवचनानां प्रथमतः प्रवृत्त्या यथायथमाशौचपरिच्छेदकत्र्यहादिकालविशेषनिर्णयस्य जातत्वेन पश्चात्प्रवर्तमानस्य दाहनिमित्ताशौचविधेः कालविशेषविधाने निराकाङ्क्षत्वात्। नचैवं द्वितीयचतुर्थे (गृहीताशौचवत्पत्नीपुत्रान्यसपिण्डे) स्थले पूर्वमाशौचस्य गृहीतत्वेनातिक्रान्तत्वाभावात्त्र्यहाद्यतिक्रान्ताशौचानि यद्यपि नोपस्थातुमर्हन्ति तथाऽपि ब्राह्मोक्तं त्रिरात्रं प्रवर्ततेति वाच्यम्। स्वविधेयस्याऽऽशौचस्य पूर्वमेव गृहीतत्वेन कृतकृत्यत्वात्प्रयोजनाभावेन लक्ष्ये लक्षणन्यायेनाग्निर्यद्दग्धं तद्दहतीति न्यायेन वा प्रतिबद्धप्रवृत्तिकत्वादेव न प्रवर्तितुमुत्सहते। अनेनैवाऽऽशयेनैतत्स्थले स्मृत्यर्थसारकारेण स्नानमात्रमुक्तम्। एवं च त्रिरात्रविधाने निराकाङ्क्षमेवेति ब्राह्मवचनं न प्रवर्तते। कल्पतर्वादिग्रन्थकारास्त्वेतत्प्रवृत्तावाकाङ्क्षितविधित्वं मूलमिति नाङ्गी कुर्वन्ति किंत्वनेन वचनेनापूर्वमेव त्रिरात्रं दाहनिमित्तेन विधीयत इति मन्वते। अत एवाऽऽशौचग्रहाग्रहयोरुभयत्रापि त्रिरात्रमेव भवति। नचैवमगृहीताशौचकपत्नीपुत्रयोः कल्पतर्वादिमते त्रिरात्रमेव स्यान्न दशरात्रमिति वाच्यम्। 'अन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचम्' इत्याश्वलायनगृह्यपरिशिष्टेन विशेषविहितेन दशरात्रेण त्रिरात्रस्य बाधात्। तथा चागृहीताशौचकपत्नीपुत्रान्यसपिण्डे, गृहीताशौचवत्पत्नीपुत्रान्यसपिण्डे, नित्यागृहीताशौचकपत्नीपुत्रान्यसपिण्डे, गृहीताशौचवत्पत्नीपुत्रे चेति चतुर्षु स्थलेषु कल्पतर्वादिमते ब्राह्मोक्तं त्रिरात्रं प्रवर्तते। नित्यागृहीतशौचकपत्नीपुत्रे, अगृहीताशौचकपत्नीपुत्रे चेति स्थलद्वये गृह्यपरिशिष्टोक्तं संपूर्णमाशौचं प्रवर्तते। त्रिरात्रवचनस्याऽऽकाङ्क्षितविधित्वं मूलमिति मते तु गृहीताशौचवत्पत्नीपुत्रे नित्यागृहीताशौचकपत्नीपुत्रान्यसपिण्डे चेति स्थलद्वय एव ब्राह्मोक्तं त्रिरात्रं प्रवर्तते। अत्रैव स्थलद्वये ब्राह्मवचनस्य तादृश्याकाङ्क्षा जायते। तथा हि—प्रथमे प्रतिकृतिदाहस्थले मरणस्य कल्पितत्वेन मिथ्यात्वात्तत्सपिण्डेषु नित्यागृहीताशौचकपत्नीपुत्रभिन्नेषु शावाशौचमेव तावदादौ प्रवर्तितुं नोत्सहते। तत्कथमिव तदवधिकदशाहोत्तरभावित्रिपक्षादिकालविशेषावलम्बीनि त्र्यहाद्यतिक्रान्ताशौचानि प्रवर्तितुमुत्सहेरन्। द्वितीये तु प्रतिकृतिदाहे मरणस्य सत्यत्वेऽपि निश्चितमृतिवार्ताश्रवणेन तदैवाऽऽशौचस्य परिगृहीतत्वेनातिक्रान्तत्वाभावाद्दाहकाले तत्सपिण्डे पत्नीपुत्ररूपेऽतिक्रान्ताशौचानि नोत्सर्पितुमीहन्ते। किंतु ब्राह्मोक्तस्यैव दाहनिमित्ताशौचविधेः प्रवृत्तिर्वक्तव्या। तस्य च विधेस्त्रिरात्ररूपकालविशेषविधाने साकाङ्क्षत्वं भवतीति

पूर्वोक्तत्रिरात्रवि*षये + दाहानुयाय्याशौचपरिच्छेदककालविशेषापेक्षायां त्रिरात्ररूप×तद्विधौ तस्य वचनस्याऽऽकाङ्क्षितविधित्वं भवति । = अन्यत्र तु ⌣ कालविशेषादेर्निर्णीतत्वेनापेक्षाभावादनाकाङ्क्षितविधानं स्यात् । तथाऽऽश्वलायनगृह्यपरिशिष्टमपि—'+अथाती-

---

कृत्वा द्विविधप्रतिकृतिदाहार्थनिरुक्तस्थलद्वये दाहनिमित्ताशौचविधेः प्रवृत्तिः सिध्यति । एवं च त्रिरात्रपर्यन्तं दाहनिमित्ताशौचं कुर्यादित्यर्थपर्यवसानेन साऽऽकाङ्क्षा समाहिता भवति । तथा च त्रिरात्रमित्यत्यन्तसंयोगे द्वितीया । तिसृणां रात्रीणां समाहारस्त्रिरात्रम् । 'तद्धितार्थोत्तरपदसमाहारे च' ( पा० सू० २ । १ । ५१ ) इति समाहारे द्विगौ 'अहःसर्वैकदेश०' ( पा० सू० ५ । ४ । ८७ ) इति समान्तोऽच्प्रत्ययः । रात्राह्नाहाः पुंसीति पुंस्त्वं ततो द्वितीयेति प्रक्रियाक्रम इति ज्ञेयम् ।

= तदेव चाऽऽकाङ्क्षितविधित्वमुपपादनेन प्रदर्शयन्नाह—तथा हीति ।

* दाहनिमित्तकाशौचविधायक 'दग्ध्वा अशुचिर्भवेत्' इति वाक्यस्य कीदृशे विषय आकाङ्क्षितविधित्वं भवति कीदृशे च विषये नेति प्रदर्शयन्नाह—विषय इति । देशान्तरं प्रस्थितस्य द्वादशवर्षादिप्रतीक्षोत्तरं बृहस्पत्यादिवचनबलान्मरणं प्रकल्प्य क्रियमाणे प्रतिकृतिदाहविषय इत्यर्थः ।

+ दाहानुयायीति । पर्णशरदाहमनुयात्यनुसरतीति दाहानुयायि । दाहानुसारेण प्रवृत्तं दाहनिमित्तकमिति यावत् ।

× तद्विधाविति । दाहानुयाय्याशौचपरिच्छेदकत्रिरात्ररूपकालविशेषविधावित्यर्थः । तस्य 'दग्ध्वा अशुचिर्भवेत्' इति वचनस्येति यावत् । स्पष्टं विवरीतोऽयं ग्रन्थोऽधुनैव सप्तषष्टिसंख्यपृष्ठीय( ६७ )पङ्क्तिस्थायां 'आकाङ्क्षितेति' प्रतीकटिप्पण्यामिति तत्रैव द्रष्टव्यः ।

= अन्यत्रेति । पूर्वोक्तप्रतिकृतिदाहत्रितयव्यतिरिक्त इत्यर्थः ।

⌣ कालविशेषेति । आशौचपरिच्छेदकस्य कालविशेषस्य त्र्यहादेः पूर्वोपस्थितेः कालविशेषव्यवस्थापितैरतिक्रान्तत्वप्रयुक्तत्र्यहाद्याशौचविधायकवचनैर्निर्णीतत्वेन दाहनिमित्ताशौचविधेः कालविशेषविधानाकाङ्क्षाया अभावेन तादृशविधेरनाकाङ्क्षितविधित्वमापद्येत । तच्चायुक्तम् । 'अनाकाङ्क्षितविधानापेक्षया ह्याकाङ्क्षितविधानं ज्यायः' इति न्यायादिति भावः ।

+ अथातीतेति । अस्यायमर्थः—अथातीतस्यादर्शनं गतस्यालब्धस्येति यावत् । प्रेतदेहस्य संस्कारो दाहाशौचादिसकलौर्ध्वदेहिकसंस्कारः । तत्प्रतिकृतिसंस्कार इति यावत् । उच्यत इति शेषः । स चेत्संस्कारो मृताशौचपरिच्छेदकदशाहमध्ये

असंस्कारः । स चेदन्तर्दशाहे स्यात्तत्रैव तत्सर्वं समापयेदूर्ध्वमाहिताग्नेर्दा-हादिभ्यः सर्वमाशौचं कुर्यात्कर्म च यथा कालम*न्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचं गृहीताशौचयोः कर्माङ्गं त्रिरात्रम्' इति । एतन्मूलादेव दग्ध्वेति त्वाप्रत्ययाद्दाहकर्तृमात्रविषयत्वेन प्रतीय-मानस्यापि त्रिरात्रस्य समानकर्तृकत्वाविवक्षया पत्नीपुत्रविषयत्वमु-क्तम् । विश्वादर्शे तु—'प्रतिकृतिदहने त्वग्निदे स्यात्त्रिरात्रम्' इत्य-

प्रथमदिनमारभ्य दशमदिनपर्यन्ते कस्मिंश्चिद्दिने स्याक्रियेत तदा तत्सर्वं दाहादि-दशाहपेतकर्माशौचं चेत्येतत्सर्वं तत्रैव दशाह एव समापनीयम् । 'प्रोषिते कालशेषः स्यात्' इति याज्ञवल्क्येन दशाहमध्येऽशौचेऽवगतेऽवशिष्टदिनैः शुद्धेरभि-धानादिति भावः । अयं च दशाहमध्ये प्रतिकृतिसंस्कारः श्रौताग्निमद्भिन्नस्यैव संभ-वति । नतु श्रौताग्निमतः । तस्य तु 'साग्नेः संस्कारकर्मणः' इति दाहदिनमा-रभ्यैवाऽऽशौचप्रवृत्तेरभिधानेन प्रतिकृतिदाहात्प्रागाशौचाभावात् । तदेवोच्यते-ऊर्ध्वमाहिताग्नेरित्यादि । आहिताग्नेः श्रौताग्नित्रयवतः । दाहादिभ्यः । दाहपदेन मृतशरीरस्य साक्षाद्दाहः । आदिपदेनास्थिदाहपर्णशरदाहौ । साक्षाच्छरीरदाह आदिराद्यावयवो येषां तेभ्य इति बहुव्रीहिः । विवक्षितावयवभेदः समूहोऽन्यपदार्थः । अयमर्थो धार्ष्ट्येन मयोक्तो युक्तश्चेद्ग्राह्यः । तथा च शरीरदाहास्थिदाहप्रतिकृतिदा-हेभ्य ऊर्ध्वं सर्वमाशौचं यस्य यावदुक्तं यथा—सपिण्डानां दशाहं समानोदकानां त्रिदिनं भागिनेयादीनां भिन्नगोत्राणां पक्षिण्यादि, इत्येतत्सर्वमाशौचं कुर्यात् । उद-कदानप्रेतपिण्डमासिकश्राद्धाद्यखिलमौर्ध्वदेहिकं कर्म च यथाकालं स्वं स्वं कालमन-तिक्रम्य स्वस्वकाले कुर्यादाचरेदित्यर्थः । इमामेव चाऽऽहिताग्नेर्मरणे दाहदिनमार-भ्यैवाऽऽशौचप्रवृत्तिमनुसंधाय धर्मसिन्धावुक्तम्—'मन्त्रवद्दाहादारभ्य तु पुत्रादिसपि-ण्डानां दुहितृदौहित्रादिभिन्नगोत्राणां चाऽऽशौचं भवत्येव, नत्वतिक्रान्तनिमित्तक आशौचाभावस्तस्य ह्रासो वा । अत एवाऽऽहिताग्नेः पर्णशरदाहेऽपि दशाहमेव देशा-न्तरेऽपि कालान्तरेऽपि सिध्यति' इति ।

* स्मार्ताग्निमन्निरग्निकादीनामतीतसंस्कारविषय आह—अन्येष्विति । अन्येषु श्रौता-ग्नित्रयवद्भिन्नेषु स्मार्ताग्न्यादिषु विषये श्रौताग्निमदन्यप्रतिकृतिदाहविषय इति यावत् । उच्यत इति शेषः । द्वादशवर्षादिप्रतीक्षोत्तरं क्रियमाणे वचनबलकल्प्य-मानमरणविषयकप्रतिकृतिदाहे मृतिसंदेहवशादन्यस्मिन्साक्षान्मरणविषयकप्रतिकृति-दाहे च निश्चितमृतिवार्ताया अश्रवणात्पूर्वं दाहकालात्प्रागगृहीताशौचयोः पत्नीपु-त्रयोः सर्वं संपूर्णं दशाहमाशौचं भवेत् । निश्चितमृतिवार्तायाः श्रवणेन दाहकाला-त्प्राग्गृहीताशौचयोस्तु पत्नीपुत्रयोर्दाहकाले कर्माङ्गं त्रिरात्रमाशौचं स्यादिति ।

मिधानादाह*कर्तुरेव त्रिरात्रम् । इतरेषां तु प्रोषित+मरणरीत्येति प्रतीयते । केचित्तु सपिण्डानामपि त्रिरात्रमुक्तम् । मम त्वत्रेदं प्रतिभाति—यदि गृह्यपरिशिष्टवचन आश्वासस्तदा त्रिरात्रस्य गृहीताशौचपत्नीपुत्रविषयत्वं पूर्वोक्तं युक्तमेव । यद्यनाश्वासस्तदा द्वादशवर्षादिप्रतीक्षोत्तरं दाहे सर्वेषां पुत्रादीनां त्रिरात्राशौचप्रतिपादककल्पतरुदिवोदासप्रकाशादिग्रन्थदर्शनान्मिताक्षरादिस्वारस्याच्च समानकर्तृकत्वाविवक्षया गृहीताशौचानामगृहीताशौचानां वा सर्वेषां पुत्रादीनां सपिण्डानां सर्वत्र प्रतिकृतिदाहे स्वाशौचकालादूर्ध्वं क्रियमाणे त्रिरात्रमिति युक्तमिति । देशान्तरगतस्य तु जीवद्वार्ताऽनाकर्णने विशेषो गृह्यकारिकायाम्—

दूरदेशान्तरगते जीवद्वार्ता पुनः पुनः ।
इतस्ततः समन्विच्छेत्पर्यालोच्य गतागतैः ॥
तस्यामश्रूयमाणायां वयःकालविशेषतः ।
तस्य पूर्ववयस्कस्य विंशत्यब्दोर्ध्वतः क्रिया ॥
ऊर्ध्वं पञ्चदशाब्दात्तु मध्यमे वयसि स्मृता ।
द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृता ॥
चान्द्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतैः ।
कुशैः प्रतिकृतिं तस्य दग्ध्वाऽऽशौचादिकाः क्रियाः ॥ इति ।

कार्या इति शेषः ।

---

* कर्तुरेवेति । 'दग्ध्वा अशुचिर्भवेत्' इति दाहनिमित्ताशौचविधायकमन्त्रवाक्ये समानकर्तृकक्रियाद्वयान्तःपातिपूर्वकालिकक्रियावाचकधातुविहितक्त्वाप्रत्ययश्रवणेन प्रतीयमानसमानकर्तृकत्वांशस्य विवक्षितत्वात्प्रत्यासत्तेश्च दाहाशुचिभवनक्रिययोरेककर्तृकत्वप्रतीतेर्दाहकर्तुरेवेदमित्यर्थः । एवकारेण दाहकर्तृव्यतिरिक्तसपिण्डव्यवच्छेदः । एतेन समानकर्तृकत्वांशाविवक्षितत्वहेतौ गृह्यपरिशिष्टवचनेऽनाश्वासः स्फोरितः ।

+ प्रोषितमरणेति । यथा प्रवासं गतस्य मरणे दशाहोर्ध्वं ज्ञाते मासत्रयपर्यन्तं त्रिरात्रमाशौचं, मासषट्कपर्यन्तं पक्षिणी, मासनवकपर्यन्तमेकादिनं तदूर्ध्वं स्नानमिति त्र्यहाद्यतिक्रान्ताशौचं भवति तथा प्रतिकृतिदाहेऽग्निदव्यतिरिक्तसपिण्डानां प्रतिकृतिदाहकालाद्यपेक्षया त्र्यहाद्यतिक्रान्ताशौचं भवति नतु सर्वकाले त्र्यहमेवेति भावः ।

अन्यो विप्राद्यशौचे सकृद्दन्नमदंस्तावदाशौचकृ-
त्स्याद्यावत्तेषाम् ।

अन्योऽसगोत्रो विप्रादीनामशौचे बुद्धिपूर्वं सकृदप्यन्नाद्यादि त-त्स्वामिकमदनं सिद्धान्नमदन्नश्नन्यस्मिन्दिने भुङ्क्ते तदारभ्य यावत्तेषा-माशौचं शिष्टं तावदाशौचकारी सोऽपि स्यात् । तथा च विष्णुः— 'ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति तस्य तावदाशौचं याव-त्तेषाम्' इति । एवं च प्रथमदिने तदन्नभोजनमात्रेऽपि यदा दशरा-त्रादि तदा निर्हृत्य तदन्नभोजनमात्रे त्रिरात्रं यद्गुद्धपरेणोक्तं तद्यत्किंचि-देव । अबुद्धिपूर्वे भोजने तु—

अन्तर्दशाहे भुक्त्वाऽन्नं सूतके मृतकेऽपि वा ।
अस्याऽऽशौचं भवेत्तावद्यावदन्नं व्रजत्यधः ॥

इत्याङ्गिरसं द्रष्टव्यम् । आपदि तु कामतोऽकामतो वा तदन्नभोजने—

यावत्तदन्नमश्नाति दुर्भिक्षोपहतो नरः ।
तावन्त्यहान्यशौची स्यात्प्रायश्चित्तं ततश्चरेत् ॥ इति कूर्मपुराणोक्तम् ।

* अनुज्ञातव्यतिरिक्तासिद्धतदीयादनीयप्रतिग्रहे तु नाऽऽशौचं किंतु + वक्ष्यमाणं प्रायश्चित्तमेवार्धक्लृप्त्या योज्यम् ।

---

* अनुज्ञातव्यतिरिक्तेति । 'लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणे-ष्वप्सु दधिसर्पिःपयःसु च । तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः । पण्येषु चैव सर्वेषु नाऽऽशौचं मृतसूतके । पक्वं भक्ष्यजातं लड्डुकमोदकादि । पक्वशब्देनाग्निभ-र्जितमपि ग्राह्यम् । अपक्वं व्रीहियवादि धान्यम् । स्वयंग्रह इति स्वयमेव स्वाम्यनुज्ञा-तो गृह्णीयादित्यर्थः । पक्वापक्वाभ्यनुज्ञानमन्नसत्रप्रवृत्तविषयम् । अन्नसत्रप्रवृत्तानामा-ममन्नमगर्हितम् । भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं च पयः पिबेत् ॥ इत्याङ्गिरसोक्तत्वात् । अत्र पक्वशब्दो भक्ष्यव्यतिरिक्तौदनादिविषयो बोध्यः । इत्येवमादीनामाशौचिस्वा-मिकानामाशौचिगृहस्थितानां वा केषांचिद्द्रव्याणां ग्रहणं शास्त्रेणाभ्यनुज्ञायत इति ते पदार्था अनुज्ञाता उच्यन्ते । तेभ्योऽन्यद्यदसिद्धमपक्वमभर्जितं चाऽऽशौचिस्वामिकं तद्गृहस्थितं वाऽदनीयं भक्ष्यजातं तस्य परिग्रहे सतीत्यर्थः । शास्त्राभ्यनुज्ञाताव्य-तिरिक्तमितरदसिद्धं सिद्धान्नभिन्नं यत्तदीयमाशौचिसंबन्ध्यदनीयपदार्थजातं तस्य प्रतिग्रह इति यावत् ।

+ वक्ष्यमाणमिति । मार्कण्डेयपराशरच्छागलेयादिवचनैर्वक्ष्यमाणं प्रायश्चित्तमर्धी-कृत्य योज्यमित्यर्थः ।

तदन्ते व्रतमपि विचरेत्।

तदन्त आशौचान्ते व्रतं प्रायश्चित्तमपि विविधं व्यवस्थयाऽऽचरेत्। तथा च विष्णुः—'आशौचव्यपगमे प्रायश्चित्तं कुर्यात्' इति। तत्र कामतः सकृद्भोजने—

भुक्त्वा तु ब्राह्मणाशौचे चरेत्सांतपनं द्विजः।
भुक्त्वा तु क्षत्रियाशौचे तप्तकृच्छ्रो विधीयते॥
वैश्याशौचे तथा भुक्त्वा महासांतपनं चरेत्।
शूद्राशौचे तथा भुक्त्वा द्विजश्चान्द्रायणं चरेत्॥

इति मार्कण्डेयोक्तं द्रष्टव्यम्। तत्रैवाभ्यासे—

शूद्रस्य मृतके भुक्त्वा षण्मासान्व्रतमाचरेत्।
वैश्यस्य तु तथा भुक्त्वा त्रीन्मासान्व्रतमाचरेत्॥
क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत्।
ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रती भवेत्॥

इति शङ्खोक्तम्। अकामतः सकृद्भोजने—

अज्ञानाद्भुञ्जते विप्राः सूतके मृतके तथा।
प्राणायामशतं कृत्वा शुध्यन्ते शूद्रसूतके॥
वैश्ये षष्टिर्भवेद्राज्ञि विंशतिर्ब्राह्मणे दश।
एकाहं च त्र्यहं पञ्चसप्तरात्रमभोजनम्।
ततः शुचिर्भवेद्विप्रः पञ्चगव्यं पिबेन्नरः॥

इति च्छागलेयोक्तम्। ब्राह्मणादिक्रमेणैकाहादयो योज्याः। अकामतोऽभ्यासे त्वेतदेव द्विगुणम्। आपद्यज्ञानतः सकृद्भोजने—

अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा।
प्रायश्चित्तं कथं तत्र चातुर्वर्ण्ये विधीयते॥
गायत्र्यष्टसहस्रेण शुद्धिः स्याच्छूद्रसूतके।
विशः पञ्चशतेनैव क्षत्रियस्य शतेन च॥
ब्राह्मणस्य तथा भुक्ते प्राणायामेन शुध्यति।
अथवा वामदेव्येन साम्नैकेनैव शुध्यति॥ इति पराशरोक्तम्।

तत्रैव—कामतः सवर्णस्याऽऽशौचे द्विजो भुक्त्वा स्रवन्तीमासाद्य तस्मिन्मग्नस्त्रिरघमर्षणं जप्त्वोत्तीर्य गायत्र्यष्टसहस्रं जपेत्। क्षत्रियाशौचे ब्राह्मणस्त्वेतदेवोपोषितः कृत्वा शुध्यति। वैश्याशौचे ब्राह्मण-

स्त्रिरात्रोपोषितश्च। ब्राह्मणाशौचे राजन्यः क्षत्रियाशौचे वैश्यः स्रवन्तीमासाद्य गायत्रीशतपञ्चकं जपेत्। वैश्यश्च ब्राह्मणाशौचे गायत्र्यष्ट*शतं जपेत्। शूद्राशौचे द्विजो भुक्त्वा प्राजापत्यं चरेत्। शूद्रश्च द्विजाशौचे स्नानमाचरेत्। शूद्राशौचे शूद्रः स्नात्वा पञ्चगव्यं पिबेदिति विष्णूक्तम्। आवद्यभ्यासे त्वेतस्यैवाऽऽवृत्तिः। वै+ष्णवातिरिक्तं च सर्वं व्रतजातं ब्राह्मणस्यैव भोक्तुः। क्षत्रियादेस्तु पादपादन्यूनं कल्प्यम्। × एतच्च प्रायश्चित्तमाशौचिस्पृष्टतत्स्वामिकमि=द्धानभोक्तुराशौचिस्पृष्ट-

---

* अष्टशतमिति। अष्टोत्तरं शतमिति शाकपार्थिवादित्वान्मध्यमपदलोपिसमासः। नत्वष्टगुणितं शतं शताष्टकमित्यर्थः। ब्राह्मणाशौचे क्षत्रियादेरुत्तरोत्तरन्यूनजातीयस्य न्यूनन्यूनप्रायश्चित्तकथनस्यैवोचितत्वात्। गायत्रीशताष्टकमित्यर्थे तु गायत्रीशतपञ्चकप्रायश्चित्तवतः क्षत्रियस्य स्नानमात्रप्रायश्चित्तवतः शूद्रस्य च मध्यवर्तिनो वैश्यस्य पूर्वापेक्षयाऽधिकपरिमाणप्रायश्चित्तकथनमसंबद्धं स्यादित्यूह्यम्।

+ विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्। वैश्येऽर्धं पाद एकस्तु शूद्रजातिषु शस्यते। इति बृहद्विष्णुवचनमूलकं प्रायश्चित्तेन्दुशेखरे ब्राह्मणादिवर्णानुक्रमेण प्रायश्चित्ततारतम्यमुक्तम्। यथा 'शास्त्रोपदिष्टं पूर्णप्रायश्चित्तं विप्रस्यैव। क्षत्रियविट्शूद्राणां तु पादपादहानिः। क्वचिद्विशेषस्तु वाचनिकः' इति। तदनुसंधायाऽऽह—वैष्णवातिरिक्तमिति। 'कामतः सवर्णस्याऽऽशौचे द्विजो भुक्त्वा' इत्यादि विष्णूक्तं वर्जयित्वा शास्त्रेण यावदुपदिष्टं प्रायश्चित्तं तत्संपूर्णमाशौचमध्ये भोक्तुर्ब्राह्मणस्यैव भवति क्षत्रियादेस्तु आशौचमध्ये भोक्तुस्तत्पादपादन्यूनं योज्यम्। क्षत्रियस्य पादत्रयम्। वैश्यस्य पादद्वयम्। शूद्रस्यैकः पाद इति। यथा शङ्खेन—शूद्राशौचमध्ये भोक्तुर्ब्राह्मणस्य प्रायश्चित्तत्वेन षण्मासपर्यन्तं व्रतमुक्तम्। तत्र शूद्राशौचे यदि राजन्यो वैश्यो वा भुञ्ज्यात्तदा न तयोः षण्मासपर्यन्तं व्रतं प्रायश्चित्तम्। किंतु राजन्यस्य पादन्यूनं सार्धमासचतुष्टयपर्यन्तं वैश्यस्य च पादद्वयन्यूनं मासत्रयपर्यन्तं व्रतं प्रायश्चित्तम्। एवं शूद्रस्याप्यूह्यम्। अत्र प्रायो व्रतशब्दो गोमूत्रयावकाहारपर इति धर्मशास्त्रीयपरिभाषाऽवगन्तव्यम्।

× एतच्चेति। आशौचिस्पृष्टतत्स्वामिकान्नभोजनेऽभिहितमित्यर्थः। आशौच्यस्वामिकतत्स्पृष्टमात्रान्नभोजने तु मत्या कृच्छ्रः। अमत्याऽर्धकृच्छ्रः। इत्युक्तं धर्मसिन्धुसारे। यस्तु—आशौचिस्पृष्टतत्स्वामिकान्नं भुङ्क्ते तस्य केवलाशौचिस्वामिकान्नभोजननिमित्तकं केवलाशौचिस्पृष्टान्नभोजननिमित्तकं चेति प्रायश्चित्तद्वयं समुच्चित्य कर्तव्यतया विधीयत इत्यर्थः।

■ सिद्धान्नेति। सिद्धमग्निपक्व( शिजविलेलें )मन्नम्। नत्वाममन्नमित्यर्थः।

भोजननिमित्तप्रायश्चित्तेन समुच्चीयते । नि*मित्ताविनाभावात् । आशौचस्पृष्टतद्भोक्तुस्तत्केवलम् । असि+द्धान्नभोक्तुस्तूक्तम् ।

## रोदने त्वेकरात्रम् ।

असपिण्डोऽसपिण्डमरणनिमित्ते रोदनेऽश्रुपाते कृते तन्निमित्तकमेकरात्रमाशौचं कुर्यात् । तथा च पारस्करः—

मृतस्य बान्धवैः सार्धं कृत्वा तु परिदेवनम् ।
वर्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म च ॥ इति ।

अत्र च रोदननिमित्तैकरात्राशौचप्रतिपादकमिदमेकमेव वचनं मिताक्षरायां लिखितमिति कृत्वा मूलकारेणैतावदेवोक्तम् । गौतमीयमिताक्षरापाराशरव्याख्याशौचदशकादिदाक्षिणात्यनिबन्धेषु हारलताशुद्धिविवेकादिप्राच्यनिबन्धेषु तु वचनप्रदर्शनपूर्वकं वर्णकालभेदव्यवस्थिता नानाविधा आशौचकल्पाः प्रदर्शिताः । ते यथा—'ब्राह्मणादीनां ब्राह्मणविषये रोदनेऽस्थिसंचयनात्पूर्वं स्नानं तदुत्तरमाचमनम् । क्षत्रियादीनां क्षत्रियविषये वैश्यशूद्रयोश्च वैश्यविषये शूद्रस्य च शूद्रविषये रोदनेऽस्थिसंचयनात्पूर्वं सचैलस्नानं तदूर्ध्वं स्नानमात्रम् ' इति । तथा च ब्रह्मपुराणे—

मृतस्य यावदस्थीनि ब्राह्मणस्या×हृतानि तु ।

---

* निमित्ताविनाभावादिति । विनेत्यस्य पृथगित्यर्थः । 'विनञ्भ्यां नानाञौ नसह' ( पा० सू० ५।२।२७ ) इति सूत्रे नसहेत्युक्तेः । ' पृथग्विनान्तरेणर्ते ' इत्यमराच्च । तस्य भावो धर्मो विनाभावः । पृथक्त्वमित्यर्थः । न विनाभावोऽविनाभावः । पृथक्त्वस्याभावोऽपृथक्त्वं साहित्यमिति यावत् । निमित्तयो ( कृच्छ्रसांतपनादिप्रायश्चित्तप्रयोजकयोराशौचिस्पृष्टान्नभोजनतत्स्वामिकान्नभोजनयोः ) अविनाभावो निमित्ताविनाभावः । तस्माद्धेतोरित्यर्थः । निमित्तविनाभावाभावादिति पाठेऽप्ययमेवार्थः । निमित्तयोर्विनाभावस्य पार्थक्यस्याभावादुभयनिमित्तसमवधानादित्यर्थादिति यावत् । आशौचिस्पर्शविशिष्टतत्स्वामिकान्नभोजनस्थले ह्युभयविधप्रायश्चित्तप्रयोजकयोराशौचिस्पृष्टान्नभोजनतत्स्वामिकान्नभोजनरूपयोर्निमित्तयोः समवधानस्य सत्त्वादाशौचिस्पृष्टान्नभोजननिमित्तकप्रायश्चित्तेन ( कृच्छ्रार्धकृच्छ्रादिना ) सहाऽऽशौचिस्वामिकान्नभोजननिमित्तकं प्रायश्चित्तं ( सांतपनादि ) समुच्चीयत इत्यर्थः ।

+ असिद्धान्नेति । आमान्नेत्यर्थः । तद्भोक्तुः—आशौचिस्वामिकामान्नभोक्तुः । आशौचं नास्ति किंतूक्तप्रायश्चित्तमर्धवल्लप्त्या कार्यमित्युक्तमित्यर्थः ।

× अहृतानीति । मृतस्य ब्राह्मणस्यास्थीनि यावदहृतानीत्यन्वयः । अहृतानि न हृतानि न संचितानीत्यर्थः ।

तावद्योऽबान्धवस्तत्र रौति तद्बान्धवैः सह ॥
तस्य * स्नानाद्भवेच्छुद्धिस्ततस्त्वाचमनं स्मृतम् ।

ततः— अस्थिसंचयनानन्तरम् ।

सचैलं स्नानमन्येषामकृते त्वस्थिसंचये ।
कृते तु केवलं स्नानं क्षत्त्रविट्शूद्रजन्मनाम् ॥ इति ।

अन्येषां क्षत्त्रविट्शूद्रजन्मनामि+त्यन्वयः । अत्र चाऽऽशौचभागि-

---

* स्नानादिति । अत्र स्नानपदेन सचैलस्नानं बोध्यम् । 'अनस्थिसंचिते विप्रे ब्राह्मणो रौति चेत्तदा । स्नानेनैव विशुद्धिः स्यात्सचैलेन न संशयः' ॥ इति सचैलस्नानहेतुकविशुद्धिप्रतिपादककौर्मवाक्यैकवाक्यत्वादिति भावः ।

+ इत्यन्वय इति । अन्यत्वस्यावधिसापेक्षत्वेन पूर्ववचने विषयसमर्पकषष्ठ्यन्तपदोपात्तब्राह्मणापेक्षयाऽन्यत्वस्य ग्रहणादन्येषामित्यस्य ब्राह्मणव्यतिरिक्तानामित्यर्थः। तेषां च विषयतासंबन्धेन प्रकरणप्राप्ते रोदनेऽन्वयः । तथा च ब्राह्मणव्यतिरिक्तक्षत्रियादिविषयके रोदने सतीत्यर्थः । क्षत्रविट्शूद्रजन्मनामित्याशौचाधिकारिसमर्पकम् । क्षत्रियादीनामन्यपदोपस्थितब्राह्मणव्यतिरिक्तोद्देश्यकरोदने संबन्ध( कर्तृत्व )सत्त्वादन्येषां क्षत्रविट्शूद्राणां च मिथोऽन्वय इत्यर्थः । एवं च ब्राह्मणव्यतिरिक्तविषयेऽकृतेऽस्थिसंचयने रोदने सति क्षत्रविट्शूद्राणां सचैलं स्नानम् । कृते त्वस्थिसंचये केवलं स्नानमिति फलितोऽन्वयः । अत्र ब्राह्मणव्यतिरिक्तानामन्यपदाद्युगपदुपस्थितत्वेन क्रमिकज्ञानाभावान्न यथासंख्यान्वयः । किंत्वन्यपदोपस्थितानां ब्राह्मणव्यतिरिक्तानां त्रयाणां क्षत्रविट्शूद्रेषु प्रत्येकमन्वयः । तथा चैवं वचनव्यक्तयो भवन्ति-- क्षत्रियविषये रोदने क्षत्रियस्य विशः शूद्रस्य च, वैश्यविषये क्षत्रियस्य विशः शूद्रस्य च, अथ च शूद्रविषये क्षत्रियस्य विशः शूद्रस्य च सचैलं स्नानमिति त्रीणि महावाक्यानि । त्रिषु च पुनः प्रत्येकं त्रीणि त्रीण्यवान्तरवाक्यानीति मिलित्वा नव वाक्यानि । तेषां च नवानां वाक्यानां कोष्टकं बालबोधार्थं प्रदर्श्यते—

| रोदनविषयः—रोदनकर्ता | रो. वि.- रो. क. | रो. वि. - रो. क. |
|---|---|---|
| क्षत्रियः—क्षत्रियः | [ वैश्यः—क्ष. ] | [ शूद्रः - क्षत्रि. ] |
| क्षत्रियः—वैश्यः | वै. —वै. | [ शू. - वै. ] |
| क्षत्रियः—शूद्रः | वै. —शू. | शू. - शू. |

इति । तत्र प्रथमकोष्टकस्थितमहावाक्यार्थानुसंधानेन 'क्षत्रियादीनां क्षत्रियविषये' इति कल्पोदयः । द्वितीयकोष्टकस्थिते धनुश्चिह्नान्तर्गते प्रथमोदाहरणे

समर्पकमबान्धवपदं समहीनवर्णपरं नतु ब्राह्मणमात्रपरम् । * प्रमाणाभावात् । + ब्राह्मणस्य क्षत्रियवैश्यविषयेऽपि × तत्रैव—

अस्थ्नां संचयने विप्रो रौति चेत्क्षत्रवैश्ययोः ।
तदा स्नातः सचैलस्तु = द्वितीयेऽहनि शुध्यति ॥
कृते तु संचये विप्रः स्नानेनैव शुचिर्भवेत् ॥ इति ।

+ क्षत्रियस्य वैश्यविषयेऽप्येतदेव । ⊙ तुल्यत्वात् । शूद्रविषये तु—

---

⊙ 'द्व्यहात्क्षत्रियवैश्ययोः' इति वचनेन तुल्यन्यायादेतदपवादकस्य द्व्यहाशौचस्य वक्ष्यमाणत्वादपवादविषये च 'प्रकल्प्य चापवादं तत उत्सर्गोऽभिनिविशते' इति न्यायादुत्सर्गप्रवृत्तेर्द्वितीयतृतीयोदाहरणयोरेवानेन वचनेनाऽऽशौचं विधीयत इत्याशयेन 'वैश्यशूद्रयोश्च वैश्यविषये' इति कल्प उदितः । एवं तृतीयकोष्ठकगतप्रथमद्वितीयोदाहरणस्थलेऽपि चतुष्कोणान्तःप्रविष्टे पूर्वोक्तापवादस्य सत्त्वेन तृतीयोदाहरणस्थल एवानेनाऽऽशौचं विधेयं भवतीति 'शूद्रस्य च शूद्रविषये' इति पक्षः सिध्यति ।

*प्रमाणाभावादिति । मृतस्य यावदस्थीनीति वचने स्नानापनोद्यरोदनाशौचाभिकारिसमर्पकेणाबान्धवपदेन ब्राह्मणसजातीयन्यूनजातीयेतदुभयविधस्याप्यबान्धवस्य ग्रहणम् । तस्य सामान्यमुखप्रवृत्तत्वात् । तथा च मृतसजातीयस्य ब्राह्मणस्यैव ग्रहणमित्यत्र प्रमाणाभाव इति भावः । एतेन 'ब्राह्मणादीनां ब्राह्मणविषये रोदनेऽस्थिसंचयनात्पूर्वं स्नानं तदुत्तरमाचमनम्' इति पक्षः समर्थितः ।

+ ननु 'मृतस्य यावदस्थीनि' इति ब्राह्मवचनेन ब्राह्मणोद्देशेन रोदने ब्राह्मणादीनां चतुर्णामाशौचप्राप्तावपि क्षत्रियवैश्योद्देन रोदने ब्राह्मणस्याऽऽशौचं किंचिदपि न प्राप्नोतीत्याशङ्क्य तत्रेत्याह—ब्राह्मणस्येत्यादिना ।

× तत्रैवेति । ब्रह्मपुराण एवेत्यर्थः । एवं चैतादृशे विषयेऽपूर्वमेवाऽऽशौचं विधीयत इति भावः ।

= द्वितीयेऽहनीति । द्वितीयेऽहनि प्राप्ते सति स्नातः शुध्यतीत्यन्वयः । तथा चैकाहः फलितो भवति ; यत्तु द्वितीयेऽहनि व्यतीते शुध्यतीति केषांचिद्व्याख्यानं तत्—'अस्थिसंचयनादर्वागेकाहं क्षत्रवैश्ययोः' इति कौर्मवचनाननुसंधानमूलकमित्यनादरणीयम् ।

+ ननु यदि 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिश्रुतिप्रसिद्धक्रमापेक्षयैव 'सचैलस्नानमन्येषाम्' इति ब्राह्मवचनस्थान्यपदाद्ब्राह्मणव्यतिरिक्तानां क्षत्रियविट्-

अस्थिसंचयनात्प्राग्ब्राह्मणस्य * त्रिरात्रम् । क्षत्रियवैश्ययोर्द्विरात्रम् । तदूर्ध्वं तु सर्वेषां द्विजातीनामेकरात्रम् । यथाऽऽह पारस्करः—

अस्थिसंचयनादर्वाग्यदि विप्रोऽश्रु पातयेत् ।
मृते शूद्रे गृहं गत्वा + त्रिरात्रेण विशुध्यति ॥
अस्थिसंचयनादूर्ध्वं मासं यावद्द्विजातयः ।
अहोरात्रेण × शुध्यन्ति वाससा क्षालनेन च ॥ इति ।

---

शूद्राणामुपस्थितिरित्युच्यते तदा ' शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय ' इत्यत्रेव यथासंख्यान्वयप्रवृत्त्या क्षत्रियवैश्यशूद्रविषयके रोदने सति क्रमात्क्षत्रियविट्शूद्राणां स्नानकालपर्यन्तमाशौचसिद्धावपि वैश्योद्देशेन रोदने क्षत्रियस्य नाऽऽशौचं प्राप्नोति । नाप्यनेन ' अस्थ्नां संचयने विप्रो० ' इति वचनेन । अत्र क्षत्रवैश्योद्देशेन रोदने विप्रस्याऽऽशौचश्रवणेऽपि वैश्योद्देशेन रोदने क्षत्रियस्य विशेषाश्रवणात् । इत्यत आह—क्षत्रियस्य वैश्यविषयेऽपीति ।

⊙ तुल्यत्वादिति । क्षत्रियोद्देशेन रोदने विप्रस्य यदाशौचमेकाहं विहितमेतदेवैकाहाशौचं वैश्योद्देशेन रोदने क्षत्रियस्य भवति । युक्तेस्तुल्यत्वादित्यर्थः । अयं भावः—क्षत्रियोद्देशेन रोदने सति विप्रस्यैकाहाशौचविधाने या युक्तिरवलम्बिता तयैव युक्त्या वैश्योद्देशेन रोदने क्षत्रियस्यैकाहाशौचविधिरूह्यत इति युक्तेस्तुल्यत्वम् । विप्रस्याऽऽशौचविधानेऽवलम्बिता युक्तिश्च स्वानन्तरन्यूनवर्णोद्देश्यकरोदनकर्तृत्वम् । तादृग्रोदनकर्तृत्वं यथैव विप्रेऽस्ति तथैव क्षत्रियेऽप्यस्तीति स्वानन्तरन्यूनवैश्यवर्णोद्देशेन रोदने क्षत्रियस्यैकाहाशौचविधानं ब्राह्मवचनस्याभिप्रेतमित्यनुमीयते । तथा च क्षत्रियपदं न क्षत्रियत्वजातिविशिष्टपरं किंतु यत्किंचिदपेक्षयाऽवरवर्णत्वविशिष्टरोदनोद्देश्यपरम् । विप्रपदं च न विप्रत्वजातिविशिष्टपरं किंतु यत्किंचिदपेक्षया श्रेष्ठवर्णत्वविशिष्टरोदनकर्तृपरमिति स्वानन्तरन्यूनवर्णोद्देशेन रोदनकर्तुराशौचविधानेऽस्य वचनस्य तात्पर्यमिति यावत् ।

* त्रिरात्रमिति । अस्य, ' मृतशूद्रगृहगमनपूर्वकरोदने ' इत्यादिः । एतच्चाग्रे मूलभूतार्षवचनप्रदर्शनावसरे स्पष्टी भविष्यति ।

+ त्रिरात्रेणेति । इदं च ब्राह्मणस्य त्रिरात्राशौचविधानं मृतशूद्रगृहे रोदने सति बोद्धव्यम् । तत्र ' गृहं गत्वा ' इत्युक्तेः । इतरथा ' मृतस्य बान्धवैः सार्धम् ' इत्येकरात्रं वा, ' मृतस्य यावदस्थीनि ब्राह्मणस्याहृतानि तु ' इति ब्राह्मवचनेन युक्तिसाम्यात्स्नानपर्यन्तं वाऽऽशौचं बोध्यम् । अनेन च ' अस्थिसंचयनात्प्राग्ब्राह्मणस्य त्रिरात्रम् ' इति स्वोक्तेः समूलत्वं प्रदर्शितम् ।

× शुध्यन्तीति । अनेन ' तदूर्ध्वं सर्वेषां द्विजातीनामेकरात्रम् ' इति स्वोक्तौ प्रमाणमुपदर्शितम् ।

सजातेर्दिवसेनैव द्व्यहात्*क्षत्रियवैश्ययोः ॥ इति ।
सजातेरित्यर्धमस्थिसंचयनात्प्राक्कालविषयत्वेन तत्संलग्नत्वाद्विशुध्यती-त्येतदनन्तरमर्धाद्द्रष्ट+व्यम् । सजातेः शूद्रस्याहोरात्राभिधानं च तद्-गृह×वासाद्यनुबन्धवतो द्रष्टव्यम् । अन्यस्य= तु पूर्वोक्तं÷ सचैल-स्नानमेवेति । असपिण्डवाचकान्याज्ञातिपदोपादानेन सपिण्डानां निर्हर-णादौ दोषाभावो दर्शितः । तथा च हारीतः—

* द्व्यहात्क्षत्रियेति । अनेन 'क्षत्रियवैश्ययोर्द्विरात्रम्' इत्युक्तिः सना-थीकृता ।

+ द्रष्टव्यमिति । 'सजातेर्दिवसेनैव' इत्यादिपद्यार्धं यद्यपि 'अस्थिसंचया-दूर्ध्वम्' इति वचनादूर्ध्वं पठितं तथाऽपि तत् 'अस्थिसंचयनादर्वाक्' इति वच-नादग्रेतनत्वेनानुसंधेयम् । पाठक्रमापेक्षयाऽऽर्थक्रमस्य बलीयस्त्वात् । यदि च पाठ-क्रम एवाऽऽद्रियेत तदा शूद्रोद्देशेनास्थिसंचयनादूर्ध्वं रोदने शूद्रस्यैकाहं क्षत्रियवैश्य-योश्च द्व्यहमाशौचं भवतीति सजातेरित्यस्यार्थो वक्तव्यः । तथा चास्थिसंचयनात्प्राग्रो-दने तयोराशौचाभाव एव । तादृशवचनाभावात् । एवं चास्थिसंचयनात्पूर्वं रोदन आशौचात्यन्ताभावोऽथास्थिसंचयनानन्तरं रोदने तु सहसैव द्व्याहिकमेतावद्दीर्घमा-शौचं विधेयमित्यत्यन्तानुचितं स्यात् । 'अस्थिसंचयनादूर्ध्वम्' इति वचनात्प्राक् 'अस्थिसंचयनादर्वाक्' इति वचनसंलग्नत्वेन पाठे तु शूद्रोद्देशेनास्थिसंचयनात्प्राग्रो-दने क्षत्रियवैश्ययोर्द्व्यहं शूद्रस्य चैकाहमाशौचं भवतीत्यर्थो वक्तव्यः । सोऽयमर्थः पूर्वप्रक्रान्तार्थानुगुणो भवति । पूर्वप्रक्रान्तार्थश्चास्थिसंचयनात्प्राक्कालिकावस्थायां शूद्रोद्दे-शेन तदपेक्षया श्रेष्ठजातीयेनाश्रुपाते कृते तस्याऽऽशौचाभिधानम् शूद्रापेक्षयोच्चजाती-याश्च वैश्यः क्षत्रियो ब्राह्मणश्चेति त्रयः । तत्र सर्वतः श्रेष्ठजातीयस्य ब्राह्मणस्य त्रिरात्र-माशौचमभिहितम् । तदनन्तरं च तदपेक्षया न्यूनजातीययोर्न्यूनकालिकाशौचाभिधान-स्यावसर इति ब्राह्मणाशौचाभिधानानन्तरं क्षत्रियवैश्याशौचाभिधानमुचितं भवति । तथा च वर्णतः कालतश्चेत्यर्थतः प्राप्तोऽयं क्रम इति, अस्थिसंचनादर्वागित्यादिविशु-ध्यतीत्यन्तवचसोऽनन्तरमस्य पद्यार्धस्य पाठो द्रष्टव्यः । अत एवास्य क्षत्रियवैश्या-धिकारिकद्व्याहिकाशौचस्यास्थिसंचयनप्राक्कालविषयत्वमपि सिध्यतीति सर्वं सम-ञ्जसम् ।

× तद्गृहवासेति । एतदपेक्षया पूर्वस्मिन्नस्थिसंचयनादर्वागिति वचने 'गृहं गत्वा' इत्युक्तत्वादिति भावः ।

= अन्यस्येति । तद्गृहवासाद्यननुबन्धवतः । तद्गृहमगच्छत इति यावत् ।

÷ पूर्वोक्तमिति । सचैलं स्नानमन्येषामिति प्रागुक्तमित्यर्थः ।

*विहितं हि सपिण्डस्य प्रेतनिर्हरणादिकम् ।
दोषः स्यादसपिण्डस्य तत्रानाथक्रियां विना ॥ इति ॥ १५ ॥

सर्वत्राऽऽशौचेऽशुचित्वादेव सर्वेषामस्पृश्यत्वे प्राप्ते क्वचित्केषांचिदपवादमाह—

+जन्मन्यस्पृश्यता नो भवति कुलभुवां मातृवर्जं पितुश्च
स्नानादूर्ध्वं सचैलादथ निधनकृताशौचकेऽल्पे त्रिभागे ।
पूर्वांशस्योपरीत्थं महति च यदि संचायनं वृत्तमासी-
न्नो चेत्तस्योपरिष्टादथ तु गृहजयोर्दासयोराप्लवोर्ध्वम् ॥ १६ ॥

जन्मनि तन्निमित्ताशौचे ×मातृवर्जं सूतिकाव्यतिरिक्तानां =कुलभुवा-

* अत्र श्लोके ज्ञातयः, अन्यः, इति शब्दं प्रयुक्तवता मूलकृता रोदननिर्हरणादावसपिण्डस्य दोष उक्त इति सपिण्डस्य तत्र दोषाभावः सूचितः । तत्र प्रमाणं प्रदर्शयति—विहितं हीति ।

+ इहाऽऽशौचपदेनाशुचित्वव्याविनाऽस्पृश्यत्वस्य प्रतीतौ रूढ्या जातायां जन्माशौचे तदपवादं षोडशवृत्तेनाऽऽह—जन्मन्यस्पृश्यता नो इति । जन्मनिमित्ताऽस्पृश्यता कुलभुवां सपिण्डानां सोदकानां च नो भवति । किंतु मातृवर्जं मातुः सूतिकायास्त्वस्पृश्यता भवत्येवेत्यर्थः । पितुर्विशेषमाह—स्नानादूर्ध्वं सचैलादिति । सचैलस्नानादूर्ध्वं पितुरस्पृश्यता नो भवतीति पूर्वेण संबन्धः । मृताशौचेऽप्यस्पृश्यत्वसंकोचनमाह—अथेति । निधनकृताशौचके मरणनिमित्ताशौचकेऽल्पे त्रिरात्रादिके त्रिभागे त्रिधा विभक्ते पूर्वांशस्योपरि प्रथमांशादुपरितनं यद्भागद्वयं तत्रास्पृश्यता नो भवतीति संबन्धः । इत्थं महति च दशाहादिकेऽप्येवमेव । यदि संचायनमस्थिसंचयनं प्रथमदिन एव वृत्तमासीत्तदैवायं विभागलक्षणः प्रकारः । नो चेद्यदि तु न तत्कृतं स्यात्तर्हि तस्योपरिष्टादस्थिसंचयनानन्तरं दिनानि त्रिधा विभज्य प्रथमभागं त्यक्त्वोत्तरभागद्वयेऽस्पृश्यता नो भवति । पूर्वभागे तु भवत्येवेति तात्पर्यम् । अथ त्विति । अथेत्यधिकारान्तरे । गृहजयोः स्वगृहोत्पन्नयोर्दासीदासयोराप्लवोर्ध्वं स्नानानन्तरमस्पृश्यता नो भवतीति संबन्धः ।

× मातृवर्जमिति । मातरं वर्जयित्वेत्यर्थः । 'द्वितीयायां च' ( पा० सू० ३।४।५३ ) इति णमुल् । नच तत्र परीप्सायामित्यनुवृत्तेरुक्तत्वात्कथमत्र णमुलिति वाच्यम् । अत्रापि परीप्साया विवक्षितत्वात् । परीप्सा च त्वरा । सा यथा—यत्र जननाशौचनिमित्तास्पृश्यता निषिध्यते तत्र तत्समकालमेव मातरं वर्जयित्वा सा निषेद्धव्या । न तत्र विलम्बितव्यमिति ।

= कुलभुवामिति । कुलोत्पन्नानां सपिण्डानां सोदकानां चेत्यर्थः । तदेवोक्तम्—आशौचभागिनामिति ।

आशौचभागिनामस्पृश्य*ता नो भवति । सूतिकायास्तु यावद्दशाहाद्य-स्पृ+श्यतैव । तदाहाङ्गिरा.—'सूतके सूतिकावर्जं संस्पर्शो न निषिध्यते' इति । उत्तरकालं तु मासादिपर्यन्तं पक्षद्वयमुक्तम् । कर्मानधिकारमात्रं वचनबलात् ! तावत्कालमाशौचं वेत्युक्तमि×त्यर्थः ।

= पितुश्च स्नानादूर्ध्वं सचैलात् ।

चस्त्वर्थे । जनकस्य तु सचैलस्नानादूर्ध्वं तत्रास्पृश्यता नो भवति । तत्पूर्वं तु तस्याप्यस्पृश्यतैव । अन्येषां तु सचैलस्नानाभावान्निमित्ता-दारभ्यैवास्पृश्यत्वं न भवति । एवं सत्यर्थात्पितुर्जन्माशौचे स्नानमपि विहितं भवति । तथा च सं वर्तः—

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥

इति । ◡ अत्र च पुत्रग्रहणमविवक्षितं निमि⊛त्तविशेषणत्वात्प्रसूतिमात्र-

---

* अस्पृश्यता नो इति । शावाशौचं च सर्वेषां सूतकं मातुरेव हि । स्नानं प्रकुर्यात्तु पिता ज्ञातयो न सचैलिनः ॥ इति बृहस्पतिस्मरणादिति भावः ।

+ अस्पृश्यतैवेति । 'सूतिका सर्ववर्णानां दशरात्रेण शुध्यति' इति प्रचेतसः स्मरणाच्चेति भावः ।

× इत्यर्थ इति । अयं भावः—दशरात्रानन्तरं शुद्धेरभिधानात् 'सूतिकां पुत्रवतीं विंशतिरात्रेण स्नातां सर्वकर्माणि कारयेन्मासेन स्त्रीजननीम्' इति पैठीनसिवचनेन दशरात्रादूर्ध्वं मासादिपर्यन्तं कर्मानधिकारमात्रं बोध्यते। अथवा निर्निमित्तं कर्मानधिकारस्यायुक्तत्वात्कर्मानधिकारमात्रप्रयोजकमाशौचं बोध्यते । इति तात्पर्यकल्पनेन पक्षद्वयमुक्तमिति भावः ।

= सूतिकाव्यतिरिक्तानां कुलोत्पन्नाशौचाधिकारिणां जन्माशौचनिमित्तास्पृश्यतानिषेधविषये पितुर्विशेषमाह—पितुश्चेति ।

⁂ स्नानादूर्ध्वमिति वदता तत्प्रागस्पृश्यत्वं तदपनोदकं स्नानं च सूचितम् । तत्र प्रमाणं प्रदर्शयति—संवर्त इति ।

◡ 'जाते पुत्रे पितुः स्नानं' इति संवर्तवचने जन्यपुंस्त्ववाचिनः पुत्रशब्दस्योपादानात् 'नाऽऽशौचं सूतके पुंसः सपिण्डानां कथंचन' इत्यङ्गिरोवचने पुंसः सूतकं नेत्युक्तत्वाच्च पुत्रोत्पत्तौ पितुरस्पृश्यत्वं स्नानं च, न कन्योत्पत्ताविति केचिन्मीमांसन्ते तन्न युक्तमित्याह—अत्र च पुत्रग्रहणमिति ।

⊛ निमित्तेति । निमित्तस्य विधेयाशौचहेतुभूतस्य जननस्य विशेषणं पुत्रशब्दः । 'पुत्रे जाते पितुः स्नानम्' इत्यस्य पुत्रजननहेतुकं सचैलस्नानपर्यन्तं पितुराशौ-

*विषयेण माता शुध्येद्दशाहेनेत्येतेन समभिव्याहाराच्च । अति +प्रसङ्गस्य

चमित्यर्थात् । तथा च विधेयमाशौचम् । निमित्ततया तदुद्देश्यं जननम् । तद्विशेषणं पुत्रशब्द इत्युद्देश्यविशेषणत्वादविवक्षितं पुत्रग्रहणमित्यर्थः । तत्रापि पुंस्त्वांशस्यैवाविवक्षा बोध्या । न जन्यत्वांशस्य । तद्विवक्षां विनोद्देश्यस्वरूपस्यैवाप्रतीतेः । ग्रहं संमार्ष्टीत्यत्रैकत्वस्याविवक्षितत्वेऽपि ग्रहत्वविवक्षावत् । कथं तत्रैकत्वस्याविवक्षेति चेच्छृणु—' दशापवित्रेण ग्रहं संमार्ष्टि ' इति सोमे श्रूयते । ग्रहः पात्रविशेषः । दशापवित्रं वासःखण्डः । संमार्जनं संशोधनं संक्षालनमिति यावत् । अनेन च ग्रहमुद्दिश्य संमार्गो विधीयते । तत्र ग्रहमिति कर्मद्वितीयया ग्रहस्येप्सिततमत्वेनोद्देश्यत्वात् ( ईप्सिततमत्वं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाश्रयत्वेनोद्देश्यत्वम् ' इति नागेशभट्टाः )। हवनादौ तस्यैवोपयोगाच्च प्राधान्यं प्रतीयते । संमार्गस्तु ग्रहं प्रति गुणभूतः । एवं च ' प्रतिप्रधानं गुणावृत्तिः ' इति न्यायाद्यावन्तो ग्रहाः स्युस्तेषां सर्वेषां संमार्ग इति निश्चये सति कति ग्रहाः संमार्जनीया इति बुभुत्सायां अनुदयादुद्देश्यग्रहविशेषणीभूतमेकत्वं श्रूयमाणमपि न विवक्ष्यते तद्वज्जननस्योद्देश्यत्वेन प्राधान्यात्तस्यैवाऽऽशौचविधौ निमित्तत्वेनोपयोगेऽवधारिते किंकर्तृकं जननमित्याकाङ्क्षाया अनुदयाच्छ्रूयमाणमप्युद्देश्यजननविशेषणीभूतपुत्रशब्दार्थगतं पुंस्त्वं न विवक्ष्यत इत्यर्थः ।

* ननु जननस्योद्देश्यत्वेन प्राधान्येऽपि तावतैव कथमुद्देश्यजननविशेषणीभूतपुत्रग्रहणमविवक्षितं भवितुमर्हेत् । ग्रहं संमार्ष्टीत्यत्र तु प्रतिप्रधानं गुणावृत्तिरिति न्याय एकत्वाविवक्षानुग्राहको दृश्यते । न तथाऽत्र किंचित्पुत्रग्रहणाविवक्षानुग्राहकं समवलोक्यते । तथा च न स दृष्टान्तः पुत्रग्रहणाविवक्षासाधको भवतीत्यत आह—प्रसूतिमात्रविषयेणेत्यादि । अयं भावः—' माता शुध्येद्दशाहेन ' इति वाक्यान्तरे किंचिद्विशेषणमनुपादाय सामान्यतो जननविषये मातुराशौचं प्रतिपाद्यते । नच तत्र पुत्रग्रहणं संबध्नातीति वक्तुं शक्यम् । तस्य वाक्यान्तरस्थत्वेन विच्छिन्नत्वात् । तथा च केवलप्रसूतिविषयेण मात्राशौचेन साहचर्यात्पित्राशौचेनापि केवलप्रसूतिविषयेण भवितव्यमित्यवगम्यते । एवं च केवलप्रसूतिविषयकमात्राशौचसाहचर्यं पुत्रग्रहणाविवक्षानुग्राहकं भवतीत्यर्थः । तथा च कन्याजननेऽपि पितुराशौचं स्नानं च सिध्यति । किंच पुत्रोत्पत्ताविव कन्योत्पत्तावपि शुक्रशोणितसंबन्धसाम्याविशेषादपि कन्याजननेऽपि पितुः सचैलस्नानपर्यन्तमाशौचं युक्तं भवतीत्युत्पश्यामः ।

+ ननु यदि केवलप्रसूतिविषयकेण मात्राशौचेन साहचर्यात्पित्राशौचमपि केवलप्रसूतिविषयकमेवेति कल्प्यते चेत्तेनैव न्यायेन मातृवत्पितुर्दशाहाशौचातिप्रसङ्गः । किंच हेतुभूतजननविशेषणाविवक्षावद्धेतुमदाशौचविशेषणस्याप्यविवक्षायां सपिण्डेष्वस्पृश्यत्वातिप्रसङ्गश्चेत्याशङ्क्याऽऽह—अतिप्रसङ्गस्येति । अयं भावः—' पत्नुना

च विधेयविशेषणेन पितुरित्यनेनैव परिहारात् । तथा* च सामान्येनैव ब्रह्मपुराणवचनम्—

सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः ।
कृत्वा सचैलस्नानं तु शुद्धो भवति तत्क्षणात् ॥ इति ।

पित्रो+स्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम्' इति योगीश्वरवचनम् ।

---

यजेत ' इत्यत्र वाक्यान्तरप्राप्तं यागमुद्दिश्य तत्साधनत्वेन पशुर्विधीयते, पशुना यागं भावयेदिति । तथा चोद्देश्यत्वेन यागः प्रधानम् । विधेयत्वाच्च यागं प्रति गुणीभूतः पशुः । तत्र प्रतिगुणं प्रधानावृत्तिरिति न्यायो नास्तीति पशुसंख्येयत्तायाः परिच्छेदाभावात् । कतिभिः पशुभिर्यागः कर्तव्य इत्याकाङ्क्षायां पशुपदोत्तरं श्रूयमाणेनैकवचनेन प्रतीयमानं विधेयपशुविशेषणमेकत्वं विवक्ष्यते । आकाङ्क्षाशान्तिकरत्वेनेष्टत्वादिति सिद्धान्तः । तद्वत्सचैलस्नानपर्यन्तं विधीयमानमाशौचं कस्य भवतीत्याशौचाधिकार्याकाङ्क्षायां श्रूयमाणमधिकारितया विधेयाशौचविशेषणीभूतं पितृग्रहणं विधेयपशुविशेषणैकत्ववद्विवक्ष्यते । प्राप्ताकाङ्क्षाशान्तिसमर्पकत्वेनेष्टत्वात् । तथा चेतरसपिण्डव्यावृत्तिपूर्वकस्वार्थबोधकं पितृग्रहणम् । एवं चेतरसपिण्डव्यावर्तनपूर्वकं पितुः सचैलस्नानपर्यन्तमाशौचं विधीयत इति वाक्यार्थपर्यवसानान्न सपिण्डेष्वाशौचप्रसङ्गो नापि स्वस्मिन्दशाहाशौचातिप्रसङ्गः । अतिदिष्टादुपदिष्टं बलीय इति न्यायाद्वक्ष्यमाणपित्रोस्त्विति याज्ञवल्क्यवचोविरोधाच्चेत्यर्थः ।

* उद्देश्यजननविशेषणीभूतपुत्रग्रहणाविवक्षामुपोद्बलयति ब्रह्मपुराणवचनप्रदर्शनेनेत्याह—तथा चेति ।

+ विधेयाशौचविशेषणीभूतपितृग्रहणविवक्षाद्वारेण सपिण्डेष्वस्पृश्यतातिप्रसक्तं पितुर्दशाहाशौचातिपत्तिं च निरसिष्यंस्तत्र योगीश्वरयाज्ञवल्क्यं प्रमाणी करोतीत्याह—पित्रोस्त्विति । अस्यार्थः—सूतकं जननानिमित्तमस्पृश्यत्वलक्षणमाशौचं पित्रोर्मातापित्रोरेव न सर्वेषां सपिण्डानाम् । तच्चास्पृश्यत्वं मातुर्ध्रुवं दशाहपर्यन्तं स्थिरमित्यर्थः । कुतः । तदसृग्दर्शनात् । तस्याः संबन्धित्वेनासृजो दर्शनात् । पितस्तु ध्रुवं न भवति स्नानमात्रेणास्पृश्यत्वं निवर्तते, इति मिताक्षरायां विज्ञानेश्वराः । इयं च पितुः स्नानमात्रेण शुद्धिः सूतिकासंसर्गाभावे ज्ञेया । प्रसवे गृहमेधी तु न कुर्यात्संकरं यदि । दशाहाच्छुध्यते माता त्ववगाह्य पिता शुचिः ॥ इति पराशरस्मरणात् । तत्संसर्गे तु स एवाऽऽह—यदि पत्न्यां प्रसूतायां संपर्कं कुरुते द्विजः । सूतकं तु भवेत्तस्य यदि विप्रः षडङ्गवित् ॥ इति । पितृवत्सापत्नमातॄणामपि स्नानानन्तरमेव स्पृश्यत्वम् । तत्संस्पर्शे च दशाहमस्पृश्यत्वमिति प्रतिपादितं ब्रह्मपुराणे । तदाह—' अन्याश्च मातरस्तद्वत्तद्गेहं न व्रजन्ति चेत् ' इति । तद्गृहगमनं तत्संस्पर्शः । अन्या मातरः—सापत्नमातरः सूतिकासंस्पर्शं न कुर्युश्चे-

नाऽऽशौचं सूतके पुंसः सं*सर्गं चेन्न गच्छति ।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते ॥

इत्याङ्गिरोवचनं तु मिथुनीभावात्मकसंसर्गाभावे स्नानोत्तरमस्पृश्यता नास्ति पितुः, संसर्गे तु तदुत्तरमप्यस्पृश्यतेत्येतदर्थप्रतिपादकम् । +एवं च यद्वाचस्पतिना संवर्तवचने पुत्रग्रहणं विवक्षितं मत्वा पुत्रसूतके संसर्गेऽस्पृश्यतानापत्तिमनालोच्याङ्गिरोवचनस्य कन्यासूतकपरत्वं कृत्वा कन्यासूतके स्नानात्पूर्वमपि पितुर्नास्पृश्यत्वमित्युक्तं तद्धे×यम् ।

अथ निधनकृताशौचकेऽल्पे त्रिभागे पूर्वांशस्योपरि ।

अल्पे निधनकृताशौचेऽनुपनीताचार्यादिमरणनिमित्ते त्रिरात्राद्याशौचे त्रिभागे सति पूर्वांशस्योपर्यस्पृश्यता नो भवति । तथा च देवलः—

---

त्पितृवत्सचैलस्नानेन शुध्यन्ति । अथ कुर्युश्चेत्संस्पर्शं तदाऽपि पितृवद्दशाहेन शुध्यन्तीति यावत् । अन्येषां सूतिकास्पर्शे तु स्नानमात्रमेव । तदाहाङ्गिराः—सूतके सूतिकावर्जमङ्गस्पर्शो न दुष्यति । संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते ॥ इति । एतच्च स्नानं संस्पर्शदशायां संनिहितयावद्वस्त्रयुतमेव । रजोदोषस्यातिगुरुत्वात्तथैव शिष्टाचाराच्चेति युक्तमुत्पश्यामः ।

* संसर्गमिति । संसर्गः संस्पर्श इति सुमन्तुः । 'सहशयनासनभोजनम्' इति माधवः । मिथुनीभावात्मकसंगम इत्यन्ये ।

+ एवं चेति । प्रसूतिमात्रविषयेण मात्राशौचेन समभिव्याहारात्साहचर्यपरिभाषया विधेयाशौचनिमित्तीभूतजननविशेषणीभूतपुत्रग्रहणाविवक्षाद्वारा पित्राशौचस्यापि सामान्यतः प्रसूतिविषयकत्वस्य कल्पनेन कन्याजननेऽपि पितुः स्नानात्प्रागस्पृश्यत्वकल्पनायाः शास्त्रसिद्धत्वे च ।

× हेयमिति । अयं भावः—'पुत्रे जाते पितुः स्नानम्' इति संवर्तवचने निमित्तविशेषणीभूतं यत्पुत्रग्रहणं कृतं तद्विवक्षितमेव नाविवक्षितमिति वाचस्पतिपण्डितो मनुते । अथ च 'नाऽऽशौचं सूतके पुंसः' इत्याङ्गिरोवचनं सूतिकासंस्पर्शाभावे कन्याजनने पितुराशौचनिषेधकमिति कन्याजननपरमिदं वचनमिति कल्पयति । आङ्गिरोवचनस्य कन्याजननपरत्वकल्पने क्रियमाणे तत्र पुत्रजनने सूतिकासंसर्गे सति (कन्याजननाभावादङ्गिरोवचनाप्रवृत्त्या पुत्रजननसत्त्वात्संवर्तवचनप्रवृत्त्या च) पितुरस्पृश्यतापत्तिरूपं दोषं प्रसक्तमनवेक्ष्यैव 'कन्याजनने स्नानात्पूर्वमपि पितुर्नास्पृश्यत्वम्' इत्युक्तवांस्तद्धेयमनादरणीयमित्यर्थः । पुत्रग्रहणविवक्षायाः 'सूतके तु मुखं दृष्ट्वा' इति शास्त्राविरुद्धत्वादङ्गिरोवचने कन्यासूतकपरत्वकल्पनस्य पुत्रजनने सूतिकासंस्पर्शवत्पितर्यस्पृश्यतापत्तिरूपदोषग्रस्तत्वाच्चेति बोध्यम् ।

स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः ।
शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदितम् । इति ।

स्वाशौचस्य त्रिरात्रादिरूपतत्परिच्छेदककालस्यावयवभूतात्तृतीयभागरूपात्कालादनन्तरं स्पर्शनं विज्ञेयमित्यर्थः । तेनै*व संपूर्णाशौचे विशेषाभिधानादिदमसंपूर्णाशौचविषयम् । न च +तस्य सर्ववर्णसाधारण्याच्छूद्रादीनां स्वाशौचकालादित्यस्यासंगतिरिति वाच्यम् । × यत्र त्रिरात्रं विप्राणामाशौचं संप्रदृश्यते तत्र शूद्रे द्वादशाहः । षण्नव क्षत्रवैश्ययोः । इत्यादिवचनैरसंपूर्णाशौचस्यापि विषमस्योक्तत्वात् । महास्मृतिविरोधादननुष्ठानमात्रं तु तस्य ।

महति च यदि संचायनं वृत्तमासीन्नो चेत्तस्योपरिष्टात् ।

महति च दशाहादिरूपे संपूर्णे निधनकृताशौचे । इत्थं तृतीयभागादूर्ध्वमस्पृश्यता नो भवति । यदि प्रथमतृतीयभागे संचायनमस्थिसंचयनं वृत्तमासीत्कृतं भवति । नो चेद्यदि सप्तमदिनेषु संचयनं

* ननु 'स्वाशौचकालाद्विज्ञेयम्—' इति वचनेन स्वाशौचपरिच्छेदककालावयवभूतप्राथमिकतृतीयभागादूर्ध्वं प्रतिपादितेयं शुद्धिस्त्रिरात्राद्यसंपूर्णस्वाशौचकालविषयिणीति कथं निश्चीयते । न हि तत्र स्वाशौचकालः संपूर्णत्वेनासंपूर्णत्वेन वा विशेषितः । येन त्वदुक्तो विशेष सिध्येत् । किंतु सामान्यमुखप्रवृत्तस्वाशौचकालशब्दोपादानात्त्रिरात्राद्यसंपूर्णस्वाशौचकाले दशाहादिसंपूर्णस्वाशौचकाले चेत्युभयत्रापीयं शुद्धिरास्तामित्याशङ्क्य समाधत्ते —तेनैवेत्यादिना । येनाविशेषात्स्वाशौचकालस्य प्राथमिकतृतीयभागादूर्ध्वं शुद्धिरभिहिता तेनैव देवलेनेत्यर्थः । दशाहादिसंपूर्णाशौचेऽस्थिसंचयनविशिष्टप्राथमिकतृतीयांशादनन्तरमङ्गस्पर्शनाभिधानादिदं वचनं त्रिरात्रादिस्वल्पाशौचविषयकमिति निर्णीयत इत्यर्थः ।

\+ तस्येति । त्रिरात्राद्यसंपूर्णाशौचस्येत्यर्थः ।

× दशाहादिसंपूर्णाशौचं चातुर्वर्ण्ये भिन्नं दृश्यते । यथा—ब्राह्मणे दशाहम् । क्षत्रिये द्वादशाहम् । वैश्ये पञ्चदशाहम् । शूद्रे त्रिंशदहमिति । न तथा त्रिरात्रादिस्वल्पाशौचं चतुर्षु वर्णेषु भिन्नं दृश्यते । किंतु सर्ववर्णसमानमेव । इदं च वचनं स्वल्पाशौचविषय एवेति च निर्णीतं प्राक् । तथा चात्र स्वाशौचकालादित्युक्तिः किंफलिका । विवक्षितत्रिरात्रादिरूपः स्वाशौचकालो यदि विप्रादीनां विषमः स्यात्तदैव शूद्रविट्क्षत्रविप्राणां स्वाशौचकालादित्युक्तिः सार्थिका भवेन्नान्यथेत्याशङ्क्याऽऽह—यत्र त्रिरात्रमिति ।

क्रियते तदा तस्य संचयनस्योपरिष्टात्तत्कालेऽस्पृश्यता नो भवति ।
अस्थिसंचयनस्य च कालं वक्ष्यति । तथा च देवलः—

दशाहादित्रिभागेन कृते संचयने क्रमात् ।
अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनः ॥
त्रिचतुष्पञ्चदशभिः स्पृश्या वर्णाः क्रमेण तु ।
भोज्यान्नो दशभिर्विप्रः शेषा द्वित्रिषडुत्तरैः ॥ इति ।

ब्राह्मणादीनां वर्णानां क्रमाद्दशाहादिकालतृतीयभागेन गतेन तत्र संचयने कृते सत्यङ्गस्पर्शनमिच्छन्ति । तदेव विवृणोति–त्रि*चतुरित्यादि । किंचिदधिकैस्त्रिभिरिति द्रष्टव्यम् । आशौचकालमाह–भोज्यान्न इत्यादि । + द्व्युत्तरैर्दशभिः क्षत्रियः । त्र्युत्तरैर्द्वादशभिर्वैश्यः । त्रिगुणिताः षडष्टादश । तदुत्तरैर्द्वादशभिः शूद्रः । इति त्रिपदावृत्त्या व्याख्येयम् ।

---

* त्रिचतुरित्यादीति । अस्थिसंचयनानुष्ठानसहितकिंचिदधिकत्रिभिर्दिवसैर्गतैर्ब्राह्मणः स्पृश्यो भवति । एवमग्रेऽपि बोध्यम् । चतुर्भिर्दिवसैर्गतैः क्षत्रियः स्पृश्यः पञ्चभिर्दिनैर्वैश्यः स्पर्शनार्हः । दशभिर्दिनैर्गतैः शूद्रः संपर्कयोग्यो भवति । अत्र सर्वत्र स्पर्शविषिभूततत्तत्संख्याकातीतदिनेषु संचयनानुष्ठानसाहित्यमपेक्षितम् । नायमपूर्वो विधिः । तथा सति यदा प्रयोजनाभावान्न स्पृश्यते तदाऽस्पृष्टुर्विध्युल्लङ्घनजदोषप्रसङ्गात् । किंतु येन केन चित्कारणेन स्पर्श आवश्यकश्चेत्कर्तव्यः स्पर्शो न तत्र दोषशङ्का कार्या । एवं च प्राप्तावश्यकस्पर्शानुमोदनमात्रं क्रियत इति बोध्यम् । स्पर्शकर्ता च योग्यतया ज्ञेय इति ।

+ द्व्युत्तरैरिति । 'शेषा द्वित्रिषडुत्तरैः' इत्यस्य विवरणमिदम् । शेषाः क्षत्रियवैश्यशूद्राः । द्वित्रीत्यादि । द्वंद्वान्ते श्रूयमाणत्वादुत्तरशब्दस्य द्वित्रिषट्सु प्रत्येकमन्वयः । तत्र द्व्युत्तरैरित्यत्र पूर्वतोऽनुवृत्तं दशभिरिति विशेष्यं बोध्यम् । तथा च द्व्युत्तरैर्दशभिर्द्वादशभिर्दिनैः क्षत्रियो भोज्यान्नो भवति । द्वादशदिनपर्यन्तं क्षत्रियस्याऽऽशौचमित्यर्थः । त्र्युत्तरैरित्यत्र द्वादशभिरिति विशेष्यम् । तथा च त्र्युत्तरैर्द्वादशभिर्दिनैः पञ्चदशभिरित्यर्थः । वैश्यो भोज्यान्नो भवति । तावत्कालपर्यन्तं तस्याऽऽशौचमिति फलितम् । त्रिगुणिताः षट् त्रिषट् । अष्टादशेत्यर्थः । मध्यमपदलोपी समासः । त्रिशब्दस्याऽऽवृत्तिरिति तात्पर्यम । तदुत्तरमुत्तरशब्दस्यान्वयः । अष्टादशाधिकैरित्यर्थः । अत्रापि द्वादशभिरित्येव विशेष्यम् । तथा चाष्टादशाधिकैर्द्वादशभिस्त्रिंशता दिनैरित्यर्थः । शूद्रो भोज्यान्नो भवति । मासपर्यन्तं शूद्रस्याऽऽशौचमिति तात्पर्यम् ।

षडुत्तरैः पञ्चदशभिरिति मिताक्षराव्याख्यानं तु दशभिरित्येतद्विरोधा*धा-दुपेक्ष्यम् । तथा चाऽऽशौचकालाद्यतृतीयभागापगमसंचयनानुष्ठानयोर्मि-लितयोरेव स्पर्शप्रतिबन्धशक्त्यपनायकत्वं नत्वेकैकस्येत्युक्तं भवति ।

एवं च—

चतुर्थेऽहनि कर्तव्यः संस्पर्शो ब्राह्मणस्य च ।
एकादशे स्वशुद्धिर्दानमध्ययनक्रिया ॥
पञ्चमेऽहनि कर्तव्यः संस्पर्शः क्षत्रियस्य तु ।
षष्ठे चाहनि वैश्यस्य विज्ञेयं स्पर्शनं बुधैः ॥
क्षत्रियस्यात्मशुद्धिः स्याद्‌द्वादशाहेन नित्यशः ।
अर्धमासेन वैश्यस्य द्वादशाहेन वा पुनः ॥
दशमेऽहनि शूद्रस्य कार्यं संस्पर्शनं बुधैः ।
मासेनैव तु शुद्धिः स्यात्सूतके मृतके तथा ॥

इत्याङ्गिरोवचने संचयोऽप्युपलक्षितो द्रष्टव्यः । येन संचयस्तूपल-क्षणमिति यत्षडशीतावुक्तं तत्प्रमाणाभावान्नियतकालोपलक्षणासंभवा-च्चा+युक्तम् । अत एवास्थिसंचयनानन्तरदिनानि त्रिधा विभज्ये-

---

* ननु यथा त्र्युत्तरैरित्यत्र द्वादशभिरिति विशेष्यमादाय पञ्चदशभिर्दिनैर्वैश्यो भोज्यान्नो भवतीत्युच्यते तथा षडुत्तरैरित्यत्रापि पञ्चदशभिरिति विशेष्यमादायै-कविंशत्या दिनैः शूद्रो भोज्यान्नो भवतीत्येव व्याख्यानं युक्तं दृश्यते । व्याख्यातं च तथैव मिताक्षरायां विज्ञानेश्वरैः । तत्कथं मिताक्षराव्याख्यानमुपेक्ष्यमित्युच्यत इत्यत आह—विरोधादिति । अयं भावः—त्र्युत्तरैरित्यत्र पूर्वत्र त्र्युत्तरैरित्यत्र गृहीतमपि दशभिरिति विशेष्यं परित्यज्य पूर्ववाक्यार्थसिद्धद्वादशभिरिति विशेष्यग्र-हणे यथा 'विशः पञ्चदशैव तु' इति याज्ञवल्क्यवचनमनुकूलं दृश्यते तथा षडुत्तरैरि-त्यत्र पूर्ववाक्यार्थसिद्धपञ्चदशभिरिति विशेष्यग्रहणे न किंचिदनुकूलं दृश्यते । तथा च पूर्वत्र गृहीतं दशभिरित्येव विशेष्यं षडुत्तरैरित्यत्रापि ग्रहीतव्यं भवतीति तद्विरोधेनैतादृ-शव्याख्यानमयुक्तमित्युपेक्ष्यमिति । नन्वेवं भवतु मिताक्षराव्याख्यानमुपेक्ष्यं त्वत्कृ-तव्याख्याने तु किं पुनर्विनिगमकमिति चेत् 'त्रिंशद्दिनानि शूद्रस्य' इति याज्ञ-वल्क्यवचनमेवेति गृहाण । त्रिशब्दस्याऽऽवृत्त्या मध्यमपदलोपिसमासेन चाष्टादशे-त्यर्थकस्य त्रिषट्शब्दस्योत्तरशब्देन बहुव्रीहौ तत्र चान्यपदार्थाकाङ्क्षायां द्वादशभि-रित्यस्य विशेष्यत्वेन ग्रहण एव चोक्तयाज्ञवल्क्यवाक्यैकवाक्यता भवति नान्य-थेति तदेव तादृशव्याख्याने प्रमाणमिति ज्ञेयम् ।

+अयुक्तमिति । अयं भावः—यथा काकवद्देवदत्तस्य गृहमित्यत्र काकः सदा

स्यादि कस्यचिन्नो चेदित्यस्य व्याख्यानमपि निर्मूलम्। इदं च कलियुग*निषिद्धेषु माधवीयादौ पठितम्। 'अस्थिसंचयनादूर्ध्वमङ्गसंस्पर्शनं तथा' इति। अत्र चास्थिसंचयनं तृतीयभागस्याप्युपलक्षणं निषे+धस्य प्राप्तिसापेक्षत्वेन यथाप्राप्तिवर्णनात्।

---

तत्रावर्तमानोऽपि गृहान्तरेभ्यो देवदत्तगृहं व्यावर्तयतीत्युपलक्षणमित्युच्यते तथा 'दशाहादित्रिभागेन कृते संचयने क्रमात्' इति देवलवचने संचयनग्रहणमाद्यतृतीयभागेऽस्थिसंचयनं भवतु मा वा भूत्तृतीयभागान्तरेभ्य आद्यतृतीयभागं व्यावर्तयतीति स्वाशौचपरिच्छेदकदिनसमूहगताद्यतृतीयभागस्योपलक्षणमिति वक्तुमशक्यम्। विशेषणत्वे संभवत्युपलक्षणत्वे प्रमाणाभावात्काकवद्व्यावर्तकत्वाननुभवाच्च। नच नक्षत्रं दृष्ट्वा वाचं विसृजेदित्यत्र वाग्विसर्गहेतुभूतस्य नक्षत्रदर्शनस्य नक्षत्रोदयाधिकरणकालविशेषोपलक्षणत्ववत्संचयनग्रहणस्य विध्युपात्तस्वाधिकरणीभूतकालविशेषोपलक्षणत्वमिति वाच्यम्। अस्थिसंचयनस्यानियतकालत्वेन नक्षत्रदर्शनस्येव तस्य नियतकालविशेषोपलक्षणत्वासंभवात्। एतेन 'मृतकं तु त्रिधा भित्त्वा यावत्पूर्वांशनिर्गमः। सर्वेऽप्यस्पृश्यतां यान्ति संचयस्तूपलक्षणम्' ॥ इति षडशीतिवचने यदादित्याचार्येण तत्प्रणेत्रा संचयस्तूपलक्षणमित्युक्तं तदयुक्तमित्यर्थः। यदि तूपलक्ष्यते विशेष्यतेऽनेनेत्युपलक्षणम्। लक्षेः करणे ल्युट्। इति व्युत्पत्त्योपलक्षणं विशेषणमित्युच्यते तदा न किंचिदयुक्तमिति बोध्यम्। व्याख्यातं च तथैव षडशीतिटीकायां शुद्धिचन्द्रिकायां नन्दपण्डितेन। इदमत्र बोध्यम्—त्रिंशच्छ्लोकविवृतिनामकटीकानिर्माणकालः स्वयं टीकाकृतैव शाकः (११४१) इति निर्दिष्टः। षडशीतिटीकायाः शुद्धिचन्द्रिकाया निर्माणकालश्च वैक्रमः शकः (१६७०) इति। स एव शालिवाहनीयः क्रियते चेत् (१५३५) समायाति। तथा च त्रिंशच्छ्लोकविवृत्यपेक्षया शतात्संवत्सरेभ्यः प्राक्तनी शुद्धिचन्द्रिका भवति। एवं सति यदयं भट्टरघुनाथः स्वटीकायां शुद्धिचन्द्रिकायां प्रसङ्गेनापि नोल्लिखति तत्र किं बीजं स्यात्। किं तेन शुद्धिचन्द्रिका न लब्धा न दृष्टा वा। येन षडशीत्युक्तमयुक्तमिति वदति। किंतु योगाद्रूढिर्बलीयसीति न्यायेन रूढ्यर्थो द्रागेव बुद्ध्यारूढो भवति। योगार्थस्तु विलम्बेनेत्युपलक्षणशब्दस्य प्रसिद्धार्थकत्वमेव न्याय्यं नत्वप्रसिद्धविशेषणार्थकत्वमिति षडशीत्युक्तमयुक्तमिति तात्पर्यम्।

* इदं चास्थिसंचयनानुष्ठानविशिष्टस्वाशौचपरिच्छेदकदिनसमुदायगतप्रथमतृतीयभागोर्ध्वकालिकमङ्गस्पर्शनं कलिकालातिरिक्तविषयं बोध्यमित्याह—निषिद्धेष्विति।

+ कलिवर्ज्यप्रकरणपठितवचनगतास्थिसंचयनशब्दस्य प्रथमतृतीयभागस्याप्युपलक्षकत्वे प्रमाणं प्रदर्शयन्नाह—निषेधस्येत्यादि।

* अथ तु गृहजयोर्दासयोराप्लवोर्ध्वम् ।

गृहे स्वदास्यां जातयोर्दासयोर्गर्भ+दास्या गर्भदासस्य च स्वसपिण्डादिमरणनिमित्त आशौच आप्लवोर्ध्वं सचैलस्नानानन्तरमन×न्यसाध्ये कार्येऽस्पृश्यता नो भवति ॥ १६ ॥

=अन्नेनोपात्तयोस्तु त्रिरजनिचरणाद्दत्तदासादिकानां
स्वाम्याशौचाहसंख्यासमदिनगमनादूर्ध्वमन्यत्तु सूक्तम् ।
जातेऽपत्ये तु तस्मिन्नहनि निशि च तन्मङ्गलार्थेषु योग्याः
सर्वाशौचं सदा नो भवति यतिवनिब्रह्मचर्यस्थितानाम् ॥ १७ ॥

---

* गर्भदासाशौचमाह—अथ त्विति ।

+ गर्भदास्या गर्भदासस्य चेति । एवं च मूले दासयोरित्यत्र 'पुमान्स्त्रिया' (पा० सू० १।२।६७) इत्येकशेष इति भावः ।

× अनन्यसाध्य इति । यादृशं कर्म दासेन दास्या वा साध्यते तस्य कर्मणोऽन्येन साधयितुमशक्यत्व एवायमस्पृश्यताभाव इत्यर्थः । एवं चेयं दासशुद्धिरपरिहरणीयतया प्राप्तस्पर्शविषया न तु सर्वव्यवहारविषयेतितात्पर्यम् ।

= इदानीं दासभेदेनास्पृश्यत्वकालभेदेनाऽऽशौचं सप्तदशवृत्तपूर्वार्धेनाऽऽह—अन्नेनोपात्तयोरिति । अन्नदानेन गृहीतयोर्दासीदासयोस्तु पुनस्त्रिरजनिचरणात्त्रिरात्रगमनादूर्ध्वमस्पृश्यता नो भवतीति पूर्वश्लोकगतेनान्वयः । तुशब्देन पूर्वस्माद्विशेष उक्तः । दत्तदासादिकानां स्वाम्याशौचाहसंख्यासमदिनगमनादूर्ध्वमस्पृश्यता नो भवतीत्येवान्वयः । आदिशब्देन द्रव्यादिक्रीतानां संग्रहः । स्वामिनो यान्याशौचदिनानि तेषां संख्यया समदिनानामतिक्रमणादूर्ध्वमित्यर्थः । अन्यत्तु सूक्तं दासस्य स्वसाध्यकर्मण्येव योग्यता न तु कर्माधिकारे । तथा सूतिकाया दास्याः स्वप्रसवनिमित्तमस्पृश्यत्वं मासमित्येतत्सूक्तं स्पष्टम् । दासाद्याशौचे—' सद्यःस्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः ' इति स्मृतिः । तथा ' दासी दासश्च सर्वो वै यस्य वर्णस्य यो भवेत् । तद्वर्णस्य भवेच्छौचं दास्या मासं तु सूतकम् ' ॥ इत्यङ्गिरोवचनं मूलम् । इदानीं जाताशौचे जनिनिमित्तं यत्कार्यं तत्र शुद्धिमुत्तरार्धेनाऽऽह—जातेऽपत्ये त्विति । अपत्ये जाते तन्मङ्गलार्थेषु तस्यापत्यस्य मङ्गलार्थकर्मसु तस्मिन्नहनि तस्यामेव निशि च योग्या इत्यन्वयः । अयमर्थः—अपत्यमङ्गलार्थानि कर्माणि यस्मिन्दिने यस्यां च निशि विहितानि तेषु प्रथमदिनादिसाध्येषु कर्मसु सर्वे सूतकिनस्तस्मिन्काले योग्या अधिकारिणो भवन्तीति । उक्ताशौचस्य सर्वपुरुषविशेषेऽपवादमाह—सर्वाशौचमिति । एतत्सर्वमाशौचं सदा सर्वकाले यतिः संन्यासी वनी वानप्रस्थो

अनेनोपात्तयोस्तु दासयोर्भक्तदास्या भक्तदासस्य चिरमनिचरणादहो-रात्रत्रयापगमादूर्ध्वं तत्रै*व कार्येऽस्पृश्यता नो भवति । तथा च मिताक्षरोदाहृतस्मृत्यन्तरम्— सद्यःस्पृश्यो +गर्भदासो भक्तदासस्त्र्यहाच्छुचिः ॥ इति । ×दासादिशब्दैस्तत्तत्कर्मविशेषोपस्थापनादात्युपाधिकत्वाच्चाऽऽशौचसंकोचस्य—

= दास्यो दासाश्च यत्कर्म कुर्वन्त्यपि च लीलया।
तदन्यो न क्षमः कर्तुं तस्मात्ते शुचयः सदा ॥

इत्यादिवचनाच्चानन्यसाध्यावश्यकतत्तत्कार्यविषयमेवेदं शुद्ध्यभिधानम् । एवं +सत्त्र्यादिष्वपि द्रष्टव्यम् ।

---

ब्रह्मचर्यस्थित उभयविधो ब्रह्मचारी नैष्ठिक उपकुर्वाणश्चैतेषां नो भवति । एते यत्यादयो न कथंचिदप्याशौचभाज इत्यर्थः ।

* तत्रैवेति । अनन्यसाध्य एव कर्मणीत्यर्थः ।

+ गर्भदास इति । स्वदास्यां जातो गर्भदासः । भक्षयितुं भक्तं यावन्मे ददासि तावदहं ते दास इति नियमबद्धो भक्तदासः । तत्र गर्भदासः सद्यःस्पृश्यः शुद्धः । तस्याऽऽशौचं नास्तीत्यर्थः ।

× ननु योऽयं दासादीनामाशौचाभावो यश्च 'कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः ॥ इत्यादिना प्रचेतसा कार्वादीनामाशौचाभावः प्रतिपादितः स किंविषय इत्याकाङ्क्षायां कर्मनिमित्तैर्दासकारुशिल्पिवैद्यराजादिशब्दैस्तत्तत्साध्यस्यासाधारणस्य कर्मणो बुद्धावुपस्थानात् 'आपद्यपि हि कष्टायां सद्यःशौचं विधीयते' इति याज्ञवल्क्योक्तेराशौचसंकोचस्याऽऽपद्विषयकत्वाच्चाऽऽत्ययिकरोगचिकित्साप्रजापालनादितत्तद्विशेषकर्मण्येवाऽऽशौचाभावो न पञ्चमहायज्ञादिकर्ममात्रे नापि वा संव्यवहारे सर्वत्रेति द्रष्टव्यम् । अत एव विष्णुना 'न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्त्रिणां सत्त्रे न कारूणां कारुकर्मणि' इति प्रतिनियतविषय एवाऽऽशौचाभावः प्रदर्शितः । एवं चावर्जनीयतयाऽवश्यप्राप्तस्पर्शविषयैवेयं दासादीनां शुद्धिरित्याह—दासादिशब्दैरित्यादिनाऽपि द्रष्टव्यमित्यन्तेन ग्रन्थेन ।

= दास्यो दासाश्चेति । इदं ब्रह्मपुराणस्थं वचनम् । लीलयाऽनायासेन । 'न क्षमः कर्तुम्' इत्यनेनानन्यसाध्यत्वं दर्शितम् । एवं चानन्यसाध्यमावश्यकं च यद्दासादिभिः क्रियमाणं कार्यं तादृशकार्य एवेदं शुद्ध्यभिधानम् । अत्र 'यतस्तदन्यो न क्षमः कर्तुं तस्मात्ते शुचयः' इति हेतुं वदता तत्कर्तव्यस्यान्येन संपादने तस्यास्पृश्यत्वमस्त्येवेति ध्वनितम् । अतोऽपि गर्भदाससंबन्धिसद्यःस्पृश्यत्वस्याऽऽपद्विषयत्वं युक्तमिति ज्ञेयम् ।

+ एवं सत्त्र्यादिष्विति । अत्रत्यं तत्त्वं तत्तत्कार्येषु सत्त्रिव्रतीत्याद्यष्टादशश्लोकव्याख्यावसरे विस्तरतः प्रतिपादयिष्यते ।

**दत्तदासादिकानां स्वाम्याशौचाहसंख्यासमदिनगमनादूर्ध्वम् ।**

दत्तदासादिकानां स्वामिनो ब्राह्मणादेर्या स्वाशौचपरिच्छेदकाह-संख्या तत्समानां तत्परिमितानां दिनानां गमनादतिक्रमणादूर्ध्वं सत्यपि यावन्मासाद्याशौचे स्वस्वकार्येऽस्पृश्यता नो भवति । आ*दिपदेन—

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावासितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
विक्रेता चाऽऽत्मनः शास्त्रे दासाः +पञ्चदश स्मृताः ॥

---

* आदिपदेनेति । दत्तदासादिकानामित्यत्रत्येनाऽऽदिपदेनेत्यर्थः ।

\+ दासाः पञ्चदशेति । ते च यथा—गृहे स्वदास्यां जातो गृहजातः । अयमेव गर्भदासः । ( १ ) मूल्येन प्राप्तः क्रीतः ( २ ) । प्रतिग्रहादिना प्राप्तो लब्धः ( ३ ) । दायादुपागतो दायभागत्वेनाऽऽगतः पित्रादिदासः ( ४ ) । दुर्भिक्षे पोषितोऽनाकालभृतः ( ५ ) । स्वामिना धनग्रहणेनोत्तमर्णे प्रत्याधितो नीत आहितः ( ६ ) । ऋणमोचनेन दासत्वमभ्युपगत ऋणदासः ( ७ ) । समरे विजित्य गृहीतो युद्धप्राप्तः ( ८ ) । यद्यस्मिन्विवादे पराजितोऽहं तदा त्वद्दासो भविष्यामीति पणबन्धं परिभाष्य जितः पणे जितः ( ९ ) । तवाहं दासः स्वयं प्रतिपन्नस्तवाहमित्युपगतः ( १० ) । प्रव्रज्यातश्च्युतः प्रव्रज्यावासितः ( ११ ) । एतावन्तं कालं तवाहं दासो भवामीत्युपगमितः कृतः ( १२ ) । सर्वकालं भक्ता-( अन्ना )र्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः स भक्तदासः ( १३ ) । वडवा गृहदासी तया हृत(तः)तल्लोभेन तामुद्वाह्य दासत्वेन प्रविष्टो वडवाहृतः ( १४ ) । य आत्मानं विक्रीणीतेऽसावात्मविक्रेता ( १५ ) । इत्येवं पञ्चदशप्रकारा दासाः । यद्यपि पणजितत्वादिकं सर्वेषु वर्णेषु संभवति तथाऽप्युत्तरोत्तरा एव वर्णाः पूर्वपूर्व-वर्णस्य दासाः । न पूर्वपूर्वा उत्तरोत्तरस्य ; ‘ वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ’ इति याज्ञवल्क्यस्मरणात् । अस्यार्थः— ब्राह्मणादीनां वर्णानामानुलोम्येन दास्यम् । ब्राह्मणस्य क्षत्रियादयः । क्षत्रियस्य वैश्यशूद्रौ । वैश्यस्य शूद्र इत्येवमानुलोम्येन दासभावो भवति न प्रातिलोम्येन । स्वधर्मत्यागिनः पुनः परिव्राजकस्य प्रातिलोम्येनापि दासत्वमिष्यत एव । यथाऽऽह नारदः—वर्णानां प्रातिलोम्येन दासत्वं न विधीयते । स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥ इति ।

इति नारदोक्तपञ्चदशसु दासेषु भक्तदासगृहदासातिरिक्तानां दासानाम्—

उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः ।
अधमो भारवाही स्यादित्येवं त्रि*विधो भृतः ॥

इति तदु+क्तस्यैव भृतकस्य ।

× स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कृत्वा कालं सुनिश्चितम् ॥
आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।
नचान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ॥
शिक्षयन्तमसंदुष्टं य आचार्यं परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥
शिक्षितोऽपि कृतं कालमन्तेवासी समावसेत् ।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥
गृहीतशिल्पः समये कृत्वाऽऽचार्यं प्रदक्षिणाम् ।
शिक्षितश्चानुमान्यैनमन्तेवासी निवर्तते ॥

इति = तदुक्तस्यैवान्तेवासिनश्च ग्रहणम् । तथा च बृहस्पतिः—

---

*त्रिविध इति । शिष्योऽन्तेवासी भृतकोऽधिकर्मकृद्दास इति पञ्चविधशुश्रूषकमध्य उक्तस्तृतीयो भृतक आयुधीयत्वाद्युक्तत्रिप्रकारक इत्यर्थः ।

+ तदुक्तस्यैवेति । नारदोक्तस्यैवेत्यर्थः ।

× स्वशिल्पमित्यादिनिवर्ततइत्यन्तश्लोकपञ्चकस्य गोलार्थः प्रदर्श्यते—आयुर्वेदादिशिल्पशिक्षार्थं त्वद्गृहे वर्षचतुष्टयादिपर्यन्तं वसामीति निश्चित्य तावत्कालं गुरुगृहेऽन्तेवासी वसेत् । गुरुश्चैनमन्ते वसन्तं स्वगृहे भोजनं दत्त्वा यथाभिलषितं शिल्पं शिक्षयेत् । शिक्षणमन्तरा जलकाष्ठाद्याहरणादि गृहकृत्यं तस्मै न कथयेत् । किंतु सर्वत्रैनं पुत्रवत्पश्येत् । एतादृशं शिक्षयन्तमाचार्यं यो दुर्मतिः शिष्यः परित्यजेत्तं वधबन्धादिना दण्डेन बलात्कारेण तादृशगुर्वन्त एव वासयेत् । वधशब्दोऽत्र ताडनार्थो बोध्यः । दोषस्याल्पत्वात् । यद्यपि वर्षचतुष्टयादर्वागेव लब्धापेक्षितशिल्पो भवेत्तथाऽप्यङ्गीकृत कालपर्यन्तं तत्रोषित्वा शिल्पकर्म कृत्वा तत्फलमाचार्याय समर्पयेत् । एवंप्रकारेणाऽऽचार्येण शिक्षितो गृहीतशिल्पोऽन्तेवासी गुरोरनापत्समये प्रदक्षिणगमननमस्कारादिनाऽऽचार्यं संतोष्य तदनुज्ञां च गृहीत्वा शिक्षणान्निवर्तेतेति ।

= तदुक्तस्यैवेति । नारदोक्तस्यैवेत्यर्थः ।

*दासान्तेवासिभृतकाः शिष्याश्चैकत्र वासिनः ।
स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके ॥ इति ।

शिष्यो वेदविद्यार्थी । स चात्रान्तेवासितुल्याचरणो ग्राह्यः । तत्सा-हचर्यात् । सूतिकायास्तु दास्या अस्पृश्यत्वमपि मासपर्यन्तमेव । तदाहाङ्गिराः—

दासी दासश्च सर्वो वै यस्य वर्णस्य यो भवेत् ।
तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूतकम् ॥ इति ।

दासश्चात्र दत्तक्रीतादिः । अत्र +वचनद्वयेऽपि सत्येव शूद्रत्वादि-निमित्ते स्वसपिण्डमरणे मासाद्याशौचे दासत्वादिनिमित्ता स्वामिकार्ये स्पृश्यतैव प्रतिपाद्यते नत्वाशौचस्यैव संकोचस्तन्निमित्तः प्रतिपाद्यत इति हरदत्तोक्तं युक्तम् ।

×मूल्यकर्मकराः शूद्रा दास्यो दासास्तथैव च ।
स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः ॥

इति वचनेन कार्यविशेषे शुद्धौ प्रतिपादितायामपेक्षिततत्तत्संपादक-कालविशेषसमर्पणे =लाघवात् । यत्तु वाचस्पतिना दासादीनां स्वामि-

---

* दासान्तेवासीति । दासा गृहदासभक्तदासव्यतिरिक्ता नारदोक्ताः क्रीतल-ब्धाद्यास्त्रयोदश । अन्तेवासी नारदोक्तधर्मवाञ्शिल्पशिक्षार्थी । मूल्येन कर्मकरो भृतकः । एते दासाद्याः स्वजननमरणयोः स्वाम्याशौचकालेन स्पृश्या भवन्ति । यो यज्जातीयस्य समस्योत्कृष्टस्य वा दास्यादि करोति स तज्जातीयाशौचकालेनैव स्पृश्यो भवतीति तदर्थः ।

+ वचनद्वयेऽपीति । ' दासान्तेवासिभृतकाः ' ' दासीदासश्च सर्वो वै० ' इति बृहस्पत्यङ्गिरसोर्वचनद्वयेऽपीत्यर्थः ।

× निरुक्तवचनद्वयेनापि दासादीनां मासाद्याशौचस्य संकोचः क्रियत इति केचि-दाहुः । हरदत्तस्तु स्वाम्याशौचपरिच्छेदकदिनसमूहपरिमितस्वाशौचीयदिनसमूहाति-क्रमणादूर्ध्वं स्वामिकार्यसंपादने दासादीनां स्पर्शार्हत्वमात्रं बोध्यते नत्वाशौचं संको-च्यते । तथा च दासादीनां कर्मानधिकारित्वं तु मासादिपर्यन्तमेवेत्याह । तत्र हरद-त्तोक्तमेव युक्तमित्युपपादयन्नाह— ' मूल्यकर्मकराः शूद्राः ' इत्यादि समर्पणे लाघवादित्यन्तम् ।

= लाघवादिति । अयं भावः— ' मूल्यकर्मकराः ' इति शातातपवचनेन स्नानादि-शरीरसंस्कारगृहलेपनजलाहरणवस्त्रपात्रादिप्रक्षालनाद्यात्मके गृहकर्मरूपे स्वामिकार्यवि-

सपिण्डमरण आशौचमेव स्वामिसमकालमत्र प्रतिपाद्यत इत्युक्तम् । तन्मन्दम् । पूर्वोक्तयुक्त्या स्पर्शार्हत्वलक्षणशुद्धिपरत्वेन शौचशुद्धिपदयोः कर्माधिकारकपरत्व+स्वाभावात् । ×सत्यपि वा तत्परत्व आशौचानुवादेन =कालविशेषमा⊙त्रविधानात्स्व◡सपिण्डमरण एव

---

शेषे स्पृश्यत्वरूपायां शुद्धावभिहितायां सा शुद्धिरपेक्षितं यद्गृहलेपनादि तत्तकार्यं तत्संपादके तदधिकरणभूते मासाद्यात्मकस्वाशौचान्तर्गते कस्मिन्काले भवतीति जिज्ञासायां समुद्भूतायां स्वाम्याशौचीयकालतुल्यो यो मासाद्यात्मकस्वाशौचान्तर्गतो दशाहादिकालस्तत्वपगमनादुपरितनः कालोऽनेन वचनद्वयेन तादृशशुद्ध्यधिकरणत्वेन समर्प्यत इति लाघवं भवति । संकोचे तु कालविशेषसमर्पणं तत्र चास्पृश्यत्वकर्मानधिकारित्वेत्येतदुभयविधस्याप्याशौचस्य निवृत्तिश्चेत्युभयं विधातव्यमित्युभयविधाने गौरवं स्पष्टमेवेति ।

* यत्तु स्वामिनः प्रसवमरणयोर्दासानां स्वामितुल्यमाशौचं निरुक्तवचनद्वयेन बोध्यत इति वाचस्पत्यनुयायिन आहुस्तन्न युक्तमित्याह— पूर्वोक्तयुक्त्येति । 'गृहकर्मण्यदूषिताः' इति प्रतिपादितकार्यविशेषविषयकस्पृश्यत्वमात्रलक्षणशुद्ध्यनुवादेन कालविशेषमात्रविधानरूपया लाघवमूलिकया 'स्वामितुल्येन शुध्यन्ति' 'तद्वर्णस्य भवेच्छौचम्' इति वचनद्वयस्थशुद्धिशौचपदयोः स्पृश्यत्वमात्रलक्षणशुद्धिपरत्वपर्यवसायिकया युक्त्येत्यर्थः ।

+ तत्परत्वाभावादिति । शौचशुद्धिपदयोः स्पृश्यत्वमात्रलक्षणशुद्धिपरत्वे निर्णीते कर्माधिकाररूपशुद्धिपरत्वासंभवादित्यर्थः ।

× अथ शौचशुद्धिपदयोः स्पृश्यत्वकर्माधिकारत्वैतदुभयविधलक्षणशुद्धिप्रतिपादकत्वेऽङ्गीकृतेऽपि स्वसपिण्डमरणनिमित्तकं यदाशौचं शूद्रादीनां विहितं तदनुवादेन स्वाम्याशौचतुल्यकालस्य तत्परिच्छेदकत्वेनैतद्वचनद्वयेन समर्पणात्स्वसपिण्डमरण एवायं दासत्वादिनिमित्तक आशौचकालसंकोचः पर्यवस्यति नतु स्वामिसपिण्डमरणे । स्वसपिण्डमरणनिमित्तकाशौचप्रतिपादकवचनवद्दासादीनां स्वामिसपिण्डमरणनिमित्तकाशौचप्रापकवचनाभावादित्याशयेनाऽऽह— सत्यपि वेत्यादिना प्रापकमस्तीत्यन्तेन ।

= कालविशेषेति । अस्य स्वाम्याशौचपरिच्छेदककालतुल्यात्मकेत्यादिः ।

⊙ मात्रेति । मात्रशब्देन स्वाम्याशौचव्यवच्छेदः । तथा चावधारणार्थकोऽयं मात्रशब्दः संपद्यते ।

◡ स्वेति । स्वशब्देन विधेयाशौचोद्देश्यभूताः शूद्रादयो दासाः परामृष्टा बोध्याः ।

च त*त्प्राप्ते+स्तत्रैव दासत्वादिनिमित्त आशौचकाल÷संकोचः स्यात् । नहि स्वामिसपिण्डमरणे दासादीनामाशौचमापक्षमस्ति । शिष्या-न्तेवासिनोर्गुरुमरणे त्रि×रात्रादिवत्कामं स्वामिमरणे दासादीनां स्वा=मितुल्यमन्यद्वाऽऽशौचं वचनान्तरबलादस्ति चेदस्तु । न◡त्वनयोर्वचन-योस्तत्रापि स्वामितुल्याशौचप्रतिपादकत्वम् । ए⊙कत्र गुरुमरणनिमित्त-

* तत्प्राप्तेरिति । आशौचप्राप्तेरित्यर्थः ।

+ तत्रैवेति । स्वसपिण्डमरण एवेत्यर्थः । एवकारेण स्वामिसपिण्डमरणव्यावृत्तिः ।

÷ संकोचः स्यादिति । तथा च स्वसपिण्डमरणे सत्यपि दासादीनां स्वाम्याशौ-चकालतुल्यकालमेवाऽऽशौचं भवति न त्रिंशद्दिनादीत्यर्थः । एवं च निरुक्तवचनद्वय-स्थशौचशुद्धिपदयोः स्पृश्यत्वकर्माधिकारित्वेतदुभयरूपशुद्धिपरत्वं संपद्यत इति बोध्यम् ।

× त्रिरात्रादिवदिति । 'त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति' इति मनुः । 'गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ' इति याज्ञवल्क्यं च गुरोर्मरणे शिष्यान्तेवा-सिनोस्त्रिरात्राद्याशौचविधायकं बोध्यम् ।

= स्वामितुल्येति ' मृतसूतेषु दासानां पत्नीनां चानुलोमतः । स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौतकम् ।' यौतकं पृथग्भूतं स्वजात्युक्तम् । इति हारीतवचनं, 'पत्नी-नां दासानां चाऽऽनुलोम्येन स्वामितुल्याशौचं मृते स्वामिन्यात्मीयम्' इति विष्णुवचनं च स्वामितुल्याशौचबोधकं तदन्याशौचबोधकं चास्तीत्यर्थः. अस्तीति चेदिति चेच्छब्देन तद्वचनस्य तादृशार्थासंभवः सूचितः । स चासंभवो यथावसरमग्रे स्पष्टी भविष्यति ।

◡ नत्वनयोरिति । स्वामिमरणे दासादीनां स्वामितुल्याशौचप्रतिपादकं तदन्याशौच-प्रतिपादकं वा वचनान्तरमस्ति चेदस्तु नाम परंतु ' दासान्तेवासि ' 'दासी दासश्च ' इत्येतयोर्वचनयोस्तत्रापि स्वामिमरणेऽपि स्वामितुल्याशौचप्रतिपादकत्वं नास्तीत्यर्थः ।

⊙ निरुक्तवचनयोः स्वामिमरणे तत्तुल्याशौचप्रतिपादकत्वं नास्तीत्युक्त तत्र प्रमाणं प्रदर्शयन्नाह—एकत्रेत्यादि । एकत्र दासान्तेवासीति वचने । अयं भावः—दासान्तेवासीति वचने स्वामितुल्याशौचमित्यत्र स्वामिग्रहणं प्रतिसं-बन्धिन उपलक्षणमिति वक्तव्यमेव । आशौचविधाने दासभृतकयोः शिष्यान्तेवा-सिनोश्च ससंबन्ध्यर्थयोर्विभिन्नप्रतिसंबन्धिनोरुद्देश्यतयोपादानात् । एवं च यथा दासभृतकयोः प्रतिसंबन्धी स्वामीत्युच्यते तथा शिष्यान्तेवासिनोः प्रतिसंबन्धी गुरुराचार्यश्चेत्युच्यते । तस्यापि ग्रहणं सिध्यति । तथा च स्वामिमरणे दासभृतकयोः स्वामितुल्याशौचमितिवद्गुरुमरणे शिष्यान्तेवासिनोर्गुरुतुल्याशौचं भवतीति त्वया वक्तव्यम् । परं तन्न संभवति । गुरुमरणे शिष्यान्तेवासिनोस्त्रिरात्रादिविधिना

त्रिरात्राद्याशौचमागिशिष्यान्तेवासिसमभिव्याहारात् । अप*रत्र दास्यै।
मासस्तु सूतकमित्येतत्समभिव्याहारात् । नच पत्नी+नां दासानामा-

---

बाधात् । अतः स्वसपिण्डमरणे शिष्यान्तेवासिनोर्गुरुतुल्याशौचं भवतीत्येव वाक्यार्थो वर्णनीयः । न गुरुमरणे शिष्यान्तेवासिनोर्गुरुतुल्याशौचं भवतीति । उदाहरणम्— गुरुर्ब्राह्मणः । शिष्यस्तु वैश्यजातीयः । वैश्यस्य पञ्चदशाहं जात्याशौचं विहितम् । एवं सति वैश्यजातीयशिष्यस्य स्वसपिण्डमरणनिमित्तके पञ्चदशाहव्यापिन्याशौचे समागते सति ब्राह्मणस्य दशाहाशौचवत्त्वाद्गुर्वा( ब्राह्मणा )-शौचकालसमकालमाशौचं शिष्यस्य भवति । दशाहकालातिक्रमणादूर्ध्वं स शिष्यो गुरुशुश्रूषायां शुद्धो भवति न देवपूजादिकर्मण्यपीति तात्पर्यम् । तादृशशिष्यान्तेवासिसाहचर्याद्दासभृतकविषयेऽपि स्वसपिण्डमरणे दासभृतकयोः स्वामितुल्याशौचं भवतीत्येव वाक्यार्थो वक्तव्यः । न स्वामिमरणे स्वामितुल्याशौचमिति । अन्यथा शिष्यान्तेवासिविषये स्वसपिण्डमरणे दासभृतकयोश्च स्वामिमरणे, इति विधिवैषम्यं दुर्निवारं स्यात्तदाह— गुरुमरणेत्यादि समभिव्याहारादित्यन्तमिति ।

* अपरत्रेति । दासी दासश्चेति वचने । अयं भावः— दासी दासश्चेति वचनं यदि स्वामिमरणे दासानां स्वामितुल्याशौचविधायकत्वेन त्वयेष्येत तदा ' दास्या मासस्तु सूतकम् ' इति चतुर्थचरणेन प्रसूताया दास्या मासाशौचाभिधानमनुपपन्नं स्यात् । दासवद्दास्या अपि स्वाम्याशौचकालेनैव शुद्धत्वात् । किंच स्वामिमरणनिमित्तकदासाशौचप्रस्तावे सति तत्र दास्याः प्रसवनिमित्तकाशौचाभिधानस्य सुतरामसंगत्यापत्तेः । तस्मात्स्वजनने दास्या मासस्तु सूतकमित्येव चतुर्थचरणस्यार्थः । नतु स्वामिमरणे दास्याः प्रसूताया मासं सूतकमिति । तत्साहचर्याद्दासीदासयोरपि स्वसजातीयसंबन्धिमरण एव स्वामितुल्याशौचेन शुद्धिरिति व्याख्येयम् । न स्वामिमरणे स्वामितुल्याशौचेन शुद्धिरिति । इतरथा प्रसूताया दास्याः स्वविषये मासेन शुद्ध्यभिधानं, तद्व्यतिरिक्तदासीदासयोस्तु स्वसजातीयेतरस्वामिविषये स्वामितुल्याशौचकालेन शुद्ध्यभिधानमिति विधिवैषम्यं दुरुद्धरं स्यादित्याशयेनाऽऽह—दास्या मास इत्यादि समभिव्याहारादित्यन्तमिति ।

+ पत्नीनामिति । आनुलोम्येन पत्नीनां दासानां च स्वामितुल्यमाशौचमित्यन्वयः । आनुलोम्यमनुक्रमः । ब्राह्मणादेः पूर्वपूर्ववर्णस्यानुक्रमेणोत्तरोत्तरवर्णीयानां पत्नीनां दासानां चेत्यर्थः । तथा च ब्राह्मणस्य क्षत्रविट्शूद्रजातीयानां पत्नीनां दासानां च क्षत्रियस्य वैश्यशूद्रजातीययोः पत्न्योर्दासयोश्च वैश्यस्य शूद्रजातीयपत्नीदासयोश्च स्वामितुल्यमाशौचं भवति । अत्राभिधेयस्याऽऽशौचस्य मरणनिमित्तकत्वेन कस्य मरण इत्याकाङ्क्षायां प्रत्यासत्त्या ' मृते स्वामिन्यात्मीयम् '

सुलोम्येन स्वामितुल्यमाशौचं 'मृते स्वामिन्यात्मीयम्' इति विष्णुवचने पत्नीनां स्वामिसपिण्डमरणे स्वामितुल्याशौचप्रतिपादनाद्दासानामपि *तत्रैव तत्प्रतिपादनमिति वाच्यम् । पत्नी+नामपि स्वसपिण्डमरणे

इत्यग्रेऽभिहितत्वाच्च स्वामिसपिण्डमरणे हीदं पत्नीनां दासानां च स्वामितुल्याशौचं विष्णुवचनेन प्रतिपाद्यत इति पूर्वपक्षाशयः ।

* तत्रैवेति । स्वामिसपिण्डमरण एवेत्यर्थः ।

+ पूर्वोक्तविष्णुवचनेऽप्यनुलोमपत्नीनामपि स्वसपिण्डमरणे स्वाम्याशौचसमकालमस्पृश्यत्वमेव प्रतिपाद्यते नतु स्वामिसपिण्डमरणे स्वामितुल्यमाशौचमभिधीयत इति दूर एव तावद्दासानां स्वामिसपिण्डमरणे स्वामितुल्याशौचाभिधानं प्रत्याशेति सिद्धान्तयन्नभिधत्ते—पत्नीनामपि स्वसपिण्डमरण इत्यादि । अत्रत्यं तत्त्वं प्राक्पृष्ठे ( अंक १२० ) उपपादितमपि तत्स्मृतिप्राप्तयेऽवसरसंगत्या पुनः संक्षेपतः प्रस्तूयते । निरुक्तविष्णुवचन आशौचशब्दोऽस्पृश्यत्वमात्रलक्षणाशौचपरो वाऽस्पृश्यत्वकर्मानधिकारित्वैतदुभयलक्षणाशौचपरो वा संभवति । तत्र स्वामितुल्यमाशौचमित्यन्तपूर्ववाक्येऽस्पृश्यत्वलक्षणाशौचपरः । मृते स्वामिनीत्युत्तरवाक्ये तूभयविधलक्षणाशौचपर इति बोध्यम् । तथाऽत्र प्रतिपाद्याशौचे मरणस्य निमित्तत्वेनोपादानात्कस्य मरण इत्याकाङ्क्षा जायते । तत्र पत्न्यादेः स्वामिनश्चेत्युभयोरुपस्थितावपि प्रतिपाद्याशौचोद्देश्यत्वेन पत्न्यादेरुपादानान्निमित्तभूतमरणप्रतियोगि( विशेषण )त्वेन तद( पत्न्याद्य )न्वयो न संभवति । तथा च पत्न्यादेर्मरणे स्वामितुल्यमाशौचमिति वचनानुपपत्त्या पत्न्यादेर्ये सपिण्डास्तन्मरणे पत्न्यादेः स्वामितुल्यमाशौचमिति वक्तव्यम् । तथैव ' मृते स्वामिन्यात्मीयम् ' इत्यनेन स्वामिमरणे पत्न्यादेः स्वजातीयाशौचाभिधानात्स्वामितुल्याशौचविधौ निमित्तभूतमरणविशेषणत्वेन स्वामिनोऽन्वयेन स्वामिमरणे पत्न्यादेः स्वामितुल्याशौचमित्यस्य वक्तुमशक्यत्वात्स्वामिसपिण्डमरणे पत्न्यादेः स्वामितुल्याशौचमित्यङ्गीकार्यम् । एवं च मरणप्रतियोगित्वेनान्वयार्हः स्वामिसपिण्डो वा पत्न्यादिसपिण्डो वा संभवति । तत्र ' गृहकर्मण्यदूषिताः ' इत्यनेन दोषाभावस्य भूम्युपलेपनादिगृहकर्मविषयकत्वेनोक्तत्वाद्विहितकर्मणि दोषोऽस्त्येवेति सूचितम् । तथा चास्पृश्यत्वार्थकं दूषितपदमित्युक्तं भवति । तदेकवाक्यत्वाय स्वामितुल्यमाशौचमित्यत्रत्याशौचशब्दस्यास्पृश्यत्वमात्रपरत्वमादीयते चेत्— स्वामिसपिण्डमरणे पत्न्यादेः स्वामितुल्यं स्वाम्याशौचकालं यावदाशौचमस्पृश्यत्वं भवतीति वाक्यार्थः संपद्यते । अत्रास्पृश्यत्वमपूर्वं विधेयं भवति । स्वामिसपिण्डमरणे पत्न्यादेस्तदप्राप्तेः । यदा च शब्दशक्तिस्वभावादस्पृश्यत्वकर्मानधिकारित्वैतदुभयार्थपर आशौचशब्द आश्रीयते तदा स्वामि-

सपिण्डमरणे पत्न्यादेः स्वामितुल्यं स्वाम्याशौचपरिच्छेदककालसमकालमाशौचमुभयविधं भवतीति वाक्यार्थो जायते। इदमप्यपूर्वं विधानं तत्र विशिष्टस्येति पूर्वस्माद्विशेषः। यदा तु मरणप्रतियोगित्वेनान्वयी पत्न्यादिसपिण्डो गृह्यतेऽस्पृश्यत्वमात्रार्थक उभयार्थको वाऽऽशौचशब्दश्च भवति तदा स्वसपिण्डमरणे पत्न्यादेः स्वाम्याशौचकालं यावदस्पृश्यत्वं भवतीति वोभयविधमाशौचं भवतीति वा क्रमेण वाक्यार्थः। तत्र 'स्वाम्याशौचकालं यावदस्पृश्यत्वं भवति' इति प्रथमे वाक्यार्थे पत्न्यादेः स्वसपिण्डमरणनिमित्तेन प्राप्तद्वादशाहाद्याशौचान्तर्गतास्पृश्यत्वांशानुवादेन तत्परिच्छेदकत्वेन स्वाम्याशौचकालः प्रतिपाद्यते। अस्पृश्यत्वपरिच्छेदकत्वेन प्राप्तद्वादशाहादिकालः स्वाम्याशौचकालेन संकोच्यत इति यावत्। तथा च स्वसपिण्डमरणे पत्न्यादेः स्वाम्याशौचपरिमितकालपर्यन्तमेव पत्न्यादेरस्पृश्यत्वं भवति न तदूर्ध्वमिति तात्पर्यम्। एवमेव 'स्वाम्याशौचकालं यावदाशौचमुभयविधं भवति' इति द्वितीयवाक्यार्थेऽपीति बोध्यम् परंतु तत्रोभयांशविशिष्टाशौचस्यानुवाद इति विशेषः। स्वामिसपिण्डमरणनिमित्तेनास्पृश्यत्वमात्रलक्षणाशौचविधाने उभयविधलक्षणाशौचविधाने वा तादृशाशौचं तत्परिच्छेदकस्तादृशः कालश्चेति द्वयं विधातव्यं भवतीत्युभयविधौ गौरवम्। स्वसपिण्डमरणनिमित्तेन तु विधाने प्राप्ताशौचानुवादेन तत्परिच्छेदकस्तादृशः काल एक एव विधातव्यो भवतीत्येकविधाने लाघवं स्पष्टम्। तत्राप्यस्पृश्यत्वमात्रस्यानुवादपक्षे सुतरां लाघवं बोध्यम्। एवं च लाघवानुरोधेन स्वसपिण्डमरणे सत्यानुलोम्येन पत्नीनां दासानां च स्वाम्याशौचकालं यावदस्पृश्यत्वं भवति। मृते तु स्वामिनि [ स्वामिमरणावस्थायां ] स्वसपिण्डजननमरणनिमित्तकं स्वजातीयं द्वादशाहाद्याशौचमित्येव निरुक्तविष्णुवचनस्यार्थो न्याय्यः, नतु स्वामिसपिण्डमरणे स्वाम्याशौचकालं यावदस्पृश्यत्वमाशौचं वेत्यर्थः। तादृशार्थे सत्युभयविधानस्याऽऽवश्यकतया गौरवस्य स्पष्टत्वात्। ननु 'मृते स्वामिन्यात्मीयम्' इत्युत्तरविष्णुवचनेन स्वामिनि मृते सति पत्नीनां दासानां च यत्स्वजातीयमाशौचं प्रतिपाद्यते तत्र स्वामिमरणं निमित्तत्वेन धर्तुमशक्यम्। स्वामिमरणे तन्निमित्तेनानुलोमपत्नीनां 'यत्संख्यं तेषु विद्यते' इति ब्रह्मपुराणवचनेन स्वाम्याशौचग्राह्यत्वस्योक्तेः। दासानां च तद्गृहवासतदन्नभोजनतत्संपर्ककरणे स्वामिजातीयमेवाऽऽशौचम्। तत्संपर्काद्यकरणे तु—'ग्रामेश्वरे कुलपतौ शुद्धिर्नक्षत्रदर्शनात्' ( कुलपतिर्गर्भदासादेः कुलस्य स्वामी ) इति वृद्धमानववचनेन नक्षत्रदर्शनपर्यन्तकालिकाशौचस्य प्रातिस्विकरूपेणोक्तेश्चेति। किंतु प्रत्यासत्त्या पत्न्यादिसपिण्डानां मरणं निमित्तत्वेन संबन्धनीयम्। तथा च स्वामिमरणोत्तरावस्थायां पत्न्यादेः पित्रादिसपिण्डमरणं चेज्जायेत तदा तन्निमित्तेन स्वजात्युक्तमेवाऽऽशौचं पत्न्यादिना धर्तव्यमित्यर्थो वक्तव्यः। यथा ब्राह्मणस्य क्षत्रियादिजातीयायां पत्न्यां

तावत्कालास्पृश्यत्वस्यैव तत्रापि प्रतिपादनात् । स्वामिसपिण्डयोरस्पृश्यत्वाशौचकालयोश्च संप्रतिपत्तिः पत्नीषु दासेषु भेद इत्यपेक्षितत् । तस्मात्स्वामिमरणे तत्सपिण्डमरणे वा स्वामितुल्यमाशौचमिति नैषां वचनानामर्थः किंतु पूर्वोक्त* एव । दासान्तीनां तु स्वामिशौचेन

---

सत्यां तादृशपतिमरणोत्तरकाल यदि तस्याः पित्रादिसपिण्डमरणनिमित्तकमाशौचं प्राप्नुयात्तदा तया स्वजातिविहितं द्वादशाहाद्येवाऽऽशौचमाचरणीयं न तु स्वामिजीवन-दशायामिव दशाहाद्यस्पृश्यत्वरूपम् । पत्नीनामित्यादिपूर्ववाक्ये स्वामितुल्यमाशौच-मित्यत्र निमित्ताकाङ्क्षायां स्वामिसपिण्डपत्न्यादिसपिण्डमरणयोरुभयोरुपस्थाने सति यद्यपि मृते स्वामिनीत्युत्तरवाक्येण सहास्य समाननिमित्तकत्वरूपैकवाक्यत्वसंपत्त्यर्थं पत्न्यादिसपिण्डमरणस्यैव निमित्ततयाऽनुषङ्गः प्राप्तस्तथाऽपि स्वामितुल्यमाशौच-मित्यत्र स्वामिसपिण्डमरणस्यापि निमित्तत्वेन संबन्धः करणीयः । तथा सति 'स्वामि-सपिण्डमरणे पत्नीनां दासानां च स्वामितुल्यमाशौचं भवति' इति वाक्यार्थे निष्पन्ने स्वसपिण्डमरणनिमित्तकास्पृश्यत्वकालस्य स्वामिसपिण्डमरणनिमित्तकाशौ-चकालस्य चेत्युभयोः पत्नीषु दासेषु चैकरूपतया प्रतीतिर्भवति । एवं च पत्नी-ष्विव दासेष्वपि स्वसपिण्डस्वामिसपिण्डयोस्तन्मरणप्रयुक्तयोरस्पृश्यत्वाशौचका-लयोः समावेशार्थं स्वामिसपिण्डमरणस्यापि निमित्तत्वेन संबन्धः कर्तव्यः । अन्यथा पत्नीष्वेवास्पृश्यत्वाशौचकालयोः समावेशः स्यान्न दासेष्विति भेदो भवेत् । ननु स्वामितुल्यमाशौचमित्यत्र स्वामिसपिण्डमरणस्य निमित्तत्वेन संबन्धमकृत्वा पत्न्यादिसपिण्डमरणस्यैव निमित्तत्वेन संबन्धे क्रियमाणे कथं पत्नीष्वस्पृश्यत्वाशौचकालयोः समावेश इति चेदुच्यते—यथा-ऽनेन विष्णुवचनेनानुलोमपत्नीनां स्वसपिण्डमरणे स्वाम्याशौचकालतुल्यकालं यावदस्पृश्यत्वं बोध्यते तथोत्तमाधमसापिण्ड्ये सति जनने मरणे चोत्तमाशौचमेवाध-मेन कार्यमिति 'सर्वे तूत्तमवर्णानां शौचं कुर्युरतन्द्रिताः' ( मनुः ) 'शूद्रा वैश्याः क्षत्रियास्तु क्रमादुत्तरजातिषु । बान्धवेषु चरन्त्यत्र यत्संख्यं तेषु विद्यते ॥ ( ब्रह्मपुराणम् ) इत्यादिमन्वादिवचनैरुक्तत्वात्सामिसपिण्डमरणेऽनुलोमपत्नीनां स्वामितुल्यमाशौचं च बोध्यते । तथा च पत्नीषु स्वसपिण्डमरणनिमित्तकास्पृश्यत्व-कालस्य स्वामिसपिण्डमरणनिमित्तकाशौचकालस्य चैकरूपतया प्रतीतिः समावेशो भवति न दासेषु । स्वामिदासयोः सापिण्ड्याभावेन दासानां स्वामिमरणनिमित्तकं स्वामितुल्याशौचाप्रसक्तेः । तदुक्तम्—स्वामिसपिण्डयोरस्पृश्यत्वाशौचकालयोश्च संप्रतिपत्तिः पत्नीषु दासेषु भेद इतीति ।

* पूर्वोक्त एवेति । अयं भावः—'दासान्तेवासिभृतकाः' 'दासी दासश्च

स्पृश्यत्वं कर्मानधिकारस्तु मासावधिरेव । यदाहाङ्गिराः—दासी दासश्चेदित्यादि । मिताक्षराग्रन्थादप्येवमेवावगम्यते । षडशीतावप्येवमेव—

स्वामिशौचेन दासाद्याः स्पृश्या मासात्तु कर्मसु ।
योग्याः स्युर्मासतो दासी सूता चेत्स्पृश्यतामियात् ॥ इति ।

नहि स्वामिमरणे तत्सपिण्डमरणे वा मासाशौचसंभवः । विष्णुवचने चाऽऽनु+लोम्येनेति विशेषणात् । प्रतिलोमदासानां 'वर्णानामानुलो-

---

सर्वो वै०' 'मृतसूतेषु दासानां०' 'पत्नीनां दासानामानुलोम्येन०' इत्यादिवचनानामयमर्थः—पत्न्यादेरित्यत्रत्यादिशब्देन दासान्तेवासिभृतकशिष्याणां ग्रहणम् । तथा च पत्न्यादेः सपिण्डमरणजननयोः स्वाम्याशौचकालं यावत्पत्न्यादीनामस्पृश्यत्वरूपमाशौचं भवति । स्वामिनि मृते तु स्वसपिण्डजननमरणयोः पत्न्यादेः स्वस्वजातीयं द्वादशाहादिकमाशौचं भवति । नतु स्वाम्याशौचसमकालं नापि स्वामितत्सपिण्डमरणनिमित्तकमाशौचममीभिर्वचनैः प्रतिपाद्यत इत्येवं पूर्वमुक्त एवार्थ इत्यर्थः।

* दासान्तेवासिभृतकाः शिष्याश्चैकत्र वासिनः । स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके ॥ इति बृहस्पतिवचनेन स्वामितत्सपिण्डजननमरणयोर्दासानां स्वामितुल्यमाशौच ( अस्पृश्यत्वकर्मानधिकारित्वैतदुभयविधलक्षण ) मेव प्रतिपाद्यत इति केचिद्वदन्ति । तत्तुच्छम् । कथमिति तदुच्यते—'स्वामिशौचेन दासाद्याः स्पृश्या मासात्तु कर्म । योग्याः स्युर्मासतो दासी सूता चेत्स्पृश्यतामियात् ॥' ( षडशीतिः १९ ) इति षडशीतिवचने 'मासात्तु कर्मसु योग्याः स्युः' इत्येवं प्रतिपादितया दासानां मासातिक्रमेण विहितकर्मसु योग्यतया असंगतत्वापत्तेः । नहि स्वामितत्सपिण्डजननमरणयोर्दासानामयं मासं कर्मानधिकारः संभवति । स्वाम्याशौचकालेनैव दासानां शुद्धत्वात् । किंच स्वामितत्सपिण्डजननमरणप्रयुक्तदासाशौचप्रकरणे 'दासी दासश्च सर्वो वै यस्य वर्णस्य यो भवेत् । तद्वर्णस्य भवेच्छौचं दास्या मासं तु सूतकम् ॥ इत्याङ्गिरोवचने चतुर्थचरणेन 'दास्या मासं तु सूतकम्' इत्येवं प्रतिपादितस्य दास्याः प्रसवनिमित्तास्पृश्यत्वस्य सुतरामसंगतत्वापातात् । तस्मादेते दासाद्याः स्वसपिण्डजननमरणयोः स्वाम्याशौचकालेन शुध्यन्ति स्पृश्या भवन्तीत्युक्तैव व्याख्या साधीयसी । तदेतदाह-दासादीनां त्वित्यादिना 'मासाशौचसंभवः' इत्यन्तेन ।

+ आनुलोम्येनेति । स्वामिदासयोर्वर्णक्रमेणोत्कृष्टनिकृष्टजातिप्रयुक्तसंबन्ध आनु-

म्येन दास्यं न प्रतिलोमतः' इति निषेधातिक्रमात्प्रातिलोमाश्रितस्त्रीणा-मिवाऽऽशौचाभावः ।

---

लोम्यम् । अनुलोमविवाहेऽपि पतिपत्न्योरुत्कृष्टनिकृष्टजातीयत्वेसंबन्धरूपमानुलोम्यम् । तथा च ब्राह्मणस्य क्षत्रियवैश्यशूद्रास्त्रयोऽनुलोमदासाः । क्षत्रियस्य वैश्यशूद्रौ द्वौ । वैश्यस्य शूद्र एक एव । ब्राह्मणस्य ब्राह्मणः, क्षत्रियस्य क्षत्रियः, वैश्यस्य वैश्यः, शूद्रस्य शूद्रः, इत्येवं सवर्णो दासः सर्वेषां स्थित एव । एवं च शूद्रस्यानुलोमदासो नास्तीत्यर्थः । एवमनुलोमविवाहे ब्राह्मणस्य क्षत्रिया वैश्या शूद्रा चेत्येवं तिस्रोऽनुलोमभार्याः । क्षत्रियस्य वैश्या शूद्रा चेति द्वे । वैश्यस्य शूद्रैव । ब्राह्मणस्य ब्राह्मणी, क्षत्रियस्य क्षत्रियेत्येवं सवर्णा पुनः सर्वेषां मुख्या भार्या स्थितैवेति । क्षत्रियस्य ब्राह्मणो दासः क्षत्रियस्य ब्राह्मणी भार्येत्येवं प्रातिलोम्येन दासभावो दांपत्यभावो वा निषिद्धः । अत एवोक्तं नारदेन—वर्णानां प्रातिलोम्येन दासत्वं न विधीयते । स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥ इति । अत्र पूर्वार्धेन क्षत्रियादेर्ब्राह्मणादिर्दास इत्येवं वैपरीत्येन दासतां निषिध्य कथं तर्हि दासता विहितेत्याकाङ्क्षायामाह—दारवदिति । यथा विवाहसंस्कारप्रयुक्ता दारता ब्राह्मणस्य क्षत्रियजातीया स्त्रीत्येवमानुलोम्येनैव संबन्धेन विहिता तथा ब्राह्मणादेः क्षत्रियादिर्दास इत्येवमनुलोमसंबन्धेनैव दासताऽभीष्टा भवतीत्यर्थः । अत्र क्षत्रियस्य ब्राह्मणो दास इत्येवं प्रातिकूल्येन दासतानिषेधपूर्वकं ब्राह्मणस्य क्षत्रियो दास इत्येवमानुकूल्येन दासताविधाने दारताया दृष्टान्तीकरणाद्दृष्टान्तस्वस्य च सिद्धवन्निर्दिष्ट एव स्फुरणाद्विवाहसंस्कारप्रयुक्तदारतायां प्रतिलोमसंबन्धनिषेधः सिद्धो भवति । अन्यथा प्रतिलोमसंबन्धनिषेधपुरःसरानुलोमसंबन्धघटितदासताविधाने दारताया दृष्टान्तीकरणासंगत्यापत्तेः । अत एवान्यत्रेत्युपात्तम् । स्वधर्मत्यागिन इत्यनेन च प्रातिलोम्येन दासतायां प्रातिलोम्येन विवाहे स्त्रिया प्रातिलोम्येन परपुरुषाश्रयणे च स्वधर्महानिरूपो दोष उक्त इति बोध्यम् । तथा च 'पत्नीनां दासानामानुलोम्येन' इति विष्णुवचन आनुलोम्येनेति विशेषणात्प्रातिलोम्येन दासत्ववतां 'वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः' (या. २ । १८३) इति निषेधातिक्रमप्रयुक्त आशौचाभावः सूचितः । यथा 'अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च' (या. ३।२१) इत्येतद्व्याख्यानावसरे मिताक्षरायां विज्ञानेश्वराचार्यैः 'स्वभार्यासु अन्यगतासु अन्यं प्रतिलोमव्यतिरिक्तमाश्रितासु मृतासु अहोरात्रमेवाऽऽशौचम् । प्रतिलोमाश्रितासु चाऽऽशौचाभाव एव । 'पाखण्ड्यनाश्रितास्तेना भर्तृघ्न्यः कामगादिकाः' ( या. ३।६) इत्यनेन प्रतिषेधात्' इत्युक्तम् । अत्र कामगादीनां स्त्रीणामाशौचनिमित्तत्वाभावप्रतिपाद-

अन्यत्तु सूक्तम् ।

जन्मन्यस्पृश्यतेत्यादेरयं शेषः । अन्यत्तु कर्मानधिकारलक्षणमाशौचं मातृवर्जं सपिण्डादीनां दशाहादिरूपं सुष्ठु पूर्वमुक्तमित्यस्पृश्यतेत्यस्य व्यावर्त्यमुक्तम् ।

जातेऽपत्ये तु तस्मिन्नहनि निशि च तन्मङ्गलार्थेषु योग्याः ।

अपत्ये जाते सति यस्मिन्नहनि यस्यां वा रात्रावपत्यजन्म तस्मिन्नहनि तस्यां वा रात्रौ चकारात्षष्ठदशमदिनयोश्च तस्यापत्यस्य मङ्गलं कल्याणं तदर्थेषु दानपूजादिषु स्मृतिपुराणोक्तेषु सदाचारप्राप्तेषु च येषां पित्रादीनां यानि विहितानि तेषु ते सत्यप्याशौचे योग्या अधिकारिणो भवेयुः । तन्मङ्गलार्थग्रहणं जातश्राद्धादेरप्युपलक्षणम् ।

तथा च ब्रह्मपुराणे—

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं षष्ठं च सर्वदा ॥
तत्र दद्यात्सुवर्णं च भूमिं गां तुरगं रथम् ।
छत्रं छागं च माल्यं च शयनं चाऽऽसनं गृहम् ॥
जातश्राद्धे च न दद्यात्पक्वान्नं ब्राह्मणेष्वपि ॥ इति ।

अन्यत्रापि कर्तव्यमुक्तं व्यासेन—

सूतिकावासनिलया जन्मदानामदेवताः ।
तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता ॥
प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥ इति ।

मार्कण्डेयेनापि—

रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।
रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः ॥
पुरुषाः शस्त्रहस्ताश्च गीतनृत्यैश्च योषितः ।
रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ॥ इति ।

---

नेन तासु शास्त्रीयविधिमर्यादोल्लङ्घनजं दोषाधिक्यं सूचितम् । एवं च प्रतिलोमसमाश्रयणनिषेधातिक्रमनिमित्तः प्रतिलोमाश्रितासु आशौचाभावः प्रतिपादितस्तद्वत्प्रकृतेऽपीत्याशयेनाऽऽह—प्रतिलोमदासानामित्यादि प्रतिलोमस्त्रीणामिवाऽऽशौचाभाव इत्यन्तम् ।

जन्मदिनरात्र्योश्च शुद्धिर्नालच्छेदात्पूर्वमेव द्रष्टव्या । प्राङ्नाडीच्छेदात्संस्कारं पुण्यार्थात्कुर्वन्ति नाड्यां छिन्नायामाशौचमिति हारीतस्मरणात् । तथा न केवलं ग्रहणादिवद्दान एवाधिकारः ( किंतु ) प्रतिग्रहेऽपि न दोषः । तदाह वृद्धयाज्ञवल्क्यः—

कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः ।
हिरण्यभूगवाश्वाजवासःशय्यासनादिषु( कम् ) ॥
तत्र सर्वं प्रतिग्राह्यं कृतान्नं तु न भक्षयेत् ।
भक्षयित्वा च तन्मोहाद्द्विजश्चान्द्रायणं चरेत् ॥

इदमपि नालच्छेदनात्पूर्वमेव । कुमारप्रसवे नाड्यामच्छिन्नायां गुडतैलहिरण्यवस्त्रप्रावरणगोधान्यप्रतिग्रहेऽदोष इति शङ्खलिखितवचनात् ।

**सर्वाशौचं सदा नो भवति यतिवनिब्रह्मचर्यस्थितानाम् ।**

यतिश्चतुर्थाश्रमी । वनी तृतीयाश्रमी । ब्रह्मचर्यस्थितः प्रथमाश्रमी । एतेषां सर्वं सपिण्डासपिण्डजननादिनिमित्तकमाशौचं सदा संध्यावन्दनादिकालेऽपि न तु सत्र्यादिवत्कार्यविशेषकाले, नो भवति । तथा च याज्ञवल्क्यः—सत्रिव्रति*ब्रह्मचारिदातृब्रह्मविदां तथेति । दानमात्राधिकारी वानप्रस्थः । अयं चाऽऽशौचाभावः कर्मविशेषोपस्थापकपदाभावान्न राज्ञां राजकर्मणीत्यादिवद्वचनाभावाच्च +सर्वविषय इत्यभिप्रेत्योक्तं सदेति । × सर्वाशौचपदेन चात्र सपिण्डसोदकदौहित्रभागिनेयत्वाद्यनापाद्यनिमित्तकाशौचमेव गृह्यते नत्वापाद्यदाहनिर्हारादिनिमित्तम् । तस्यैव द्रागुपस्थितत्वेन निषेधार्थमनुवादौचित्यात् । =किंच सत्र्यादिषु

* ब्रह्मचारीति । नैष्ठिक उपकुर्वाणश्चेति द्विविधो ब्रह्मचारी । ब्रह्मविद्यतिः ।

+ सर्वविषय इतीति । संध्यावन्दनाग्निहोत्रादिश्रौतस्मार्ताद्यखिलकर्मगोचर इत्यर्थः ।

× सर्वाशौचेति । सर्वाशौचपदेन (स्वसहभूत्वानुत्पाद्य) सपिण्डसमानोदकदौहित्रभागिनेयत्वादिप्रयुक्तमेवाऽऽशौचं गृह्यते न तु स्वासहभू (स्वनिष्पाद्य) निर्हरणादिपकौर्ध्वदेहिकानुष्ठाननिमित्तकाशौचम् । अनापाद्यसपिण्डत्वादिनिमित्तकाशौचस्यैव झटित्युपस्थितिविषयत्वादित्यर्थः ।

= 'सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा' (याज्ञ. ३।२८) इति याज्ञवल्क्यवचनेनान्नसत्रप्रवृत्तादीनां य आशौचस्य निषेधः प्रतिपाद्यते सोऽनापाद्य(स्वानुत्पाद्य) सपिण्डत्वादिनिमित्तकाशौचस्यैवेति निर्विवादत्वेन तादृशसत्र्यादिनाऽऽचर्यातुं, आपाद्य( स्वोत्पाद्य )दाहनिर्हारादिनिमित्तकाशौचे 'आशौचं यस्य संसर्गात्' इति वचनेन क्रियालोपाभावस्य सिद्धत्वा दापाद्यनिमित्तकाशौचे कर्माधिकारकथनस्यानुप-

तावदनापाद्यनिमित्तकाशौचविषय एव निषेधः । तत्र तत्तत् *तत्तत्कर्माधिकारप्रतिपादनार्थत्वादा+पाद्यनिमित्तके च ×तदधिकारस्य

आशौचं यस्यसंसर्गादापतेद्गृहमेधिनः ।
क्रियास्तस्य न लुप्यन्ते गृह्याणां च न तद्भवेत् ॥

इति वचनेन सिद्धत्वादानर्थक्यापत्तेः । तथा च तत्समभिव्याहाराद्यत्यादिष्वपि तद्वि=षय एव निषेधः । तत्र तत्कार्यविषयोऽत्र तु सर्वविषय इत्येतावान्विशेषः । अत एव पित्रादेर्दाहादिकर्तुर्ब्रह्मचारिणोऽप्यनुज्ञानाद्व्रतभ्रंशाभावेऽप्याशौचमस्त्येव । अन्यस्य तु तत्कर्तुर्व्रतभ्रंशोऽपीत्युक्तं पूर्वम् । +अत्र च यद्यपि ‘वैतानोपासनाः कार्याः क्रियाश्च

---

योगाच्च यत्यादीनामप्यनापाद्यसपिण्डत्वादिनिमित्तकमेवाऽऽशौचं निषिध्येत इत्यपि प्रायवानाह—किंच सत्र्यादिष्विति ।

* तत्तत्कर्माधिकारेति । ‘न राज्ञां राजकर्माणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्माणि’ इति प्रतिनियतकर्मण्याशौचाभावप्रतिपादकविष्णुवचनादित्यर्थः ।

+ आपाद्येति । स्वोत्पादितदाहनिर्हारादिनिमित्तकाशौच इत्यर्थः ।

× तदधिकारस्येति । कर्माधिकारस्येत्यर्थः ।

= तद्विषय एवेति । अनापाद्यसपिण्डसमानोदकदौहित्रभागिनेयत्वादिनिमित्तकाशौचविषय एवेत्यर्थः । एवकारेण दाहनिर्हरणाद्यापाद्यनिमित्तकाशौचस्य व्यावृत्तिः । तेन निर्हरणादिप्रयुक्तमाशौचं यत्यादीनामपि भवत्येवेति । अत एवानुगमननिर्हरणनिमित्तकं त्वाशौचं ब्रह्मचारिणोऽप्यस्त्येवेति धर्मसिन्धावुक्तम् ।

= अत एवेति । सपिण्डसोदकदौहित्रत्वाद्यनापाद्यनिमित्तकस्यैवाऽऽशौचस्य निषेधादेवेत्यर्थः । पित्रादेर्दाहादिकर्तुर्ब्रह्मचारिणः ‘आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती’ ( या० ३।१५ ) इति याज्ञवल्क्यवचनाद्व्रतभ्रंशाभावेऽपि दाहप्रयुक्ताशौचं भवत्येवेत्याद्युक्तमित्यर्थः ।

+ नन्वत्र यत्यादीनामाशौचाभावप्रतिपादनमयुक्तमिव भाति । यतः ‘ऋत्विजां दीक्षितानां च०’ ( या. ३।२८ ) इति याज्ञवल्क्यवचनेन दीक्षितानां ‘वैतानोपासनाः कार्याः’ ( या. ३।१७ ) इति वचनेन च यज्ञियकर्माधिकारस्य सिद्धत्वात्पुनर्दीक्षितग्रहणस्य वैयर्थ्यमाशङ्क्य याजमानेषु कर्तव्येषु स्वयंकर्तृत्वाभावार्थं सद्यःस्नानेन विशुद्धयर्थं चेत्युत्तरितं मिताक्षरायां विज्ञानेश्वरैः । तथा च यद्यपि ‘वैतानोपासनाः कार्याः’ इति सामान्येन (णिजन्तकृधातोर्यति प्रत्यये केवलकृधातो-

श्रुतिचोदनात् ' ( या० ३।१७) इत्यनेनैव दीक्षितानां याज्ञियकर्माधिकारस्य सिद्धत्वादृत्विजां दीक्षितानां चेत्यादियोगीश्वरवचने प्राप्तं दीक्षितानुवचनमानर्थक्यं याजयानेषु स्वयंकर्तृकत्वसद्यःस्नानाविधित्वाभिधानेन परिहरन्तो विज्ञानेश्वरस्य प्राङ्नामकरणात्सद्यःशौचमितिवदेतद्वचनान्तर्गतस्यापि सद्यःशौचपदस्य स्नानाभिधायित्वाभिप्रायावगमाद्दीक्षितसमभिव्याहृतेषु चेत्यादिष्वपि सपिण्डजननादौ स्नानकालावच्छिन्नमाशौचं प्रतीयते तथाऽपि ' प्राप्नोत्याशौचं दशरात्रमनृत्विग्दीक्षितब्रह्मचारिणां सपिण्डानां जननेऽप्येवम् ' ।

नैष्ठिकानां व्रतस्थानां यतीनां ब्रह्मचारिणाम् ।
नाऽऽशौचं सूतके प्रोक्तं शावे चापि तथैव च ॥

इत्यादिनिर्णीतमबृहस्पत्यादिवचनेषु तेषामाशौचाभावस्यैवोक्तत्वादेतत्प्रकरणगतस्य सद्यःशौचपदस्याऽऽशौचाभावपरत्वमेव हरदत्तधराधरोक्तं युक्तमुत्पश्यामः । *अत एव यतीनां सपिण्डमरणादौ स्नानानुष्ठानं न दृश्यते । +ब्रह्मचारिणां तु तदनुष्ठानं शवस्पर्शानुगमनादिनिमित्तकत्वेनान्यथा×सिद्धम् । ऋत्विग्दीक्षितानां तु 'श्रौते कर्मणि तत्काळं स्नाताः

र्थेति प्रत्यये च कार्येति रूपस्य समानत्वेन ) उक्तावपि 'कारयितव्याः ' इत्यर्थकं तद्बोध्यम् । णिजन्तादेव कृधातोर्यति तद्रूपं बोध्यमिति यावत् । ' अन्य एतानि कुर्युः ' इति पैठीनसिनैकवाक्यत्वादिति भावः । एवं च ' ऋत्विजां दीक्षितानां च' इत्यादिवचने सद्यःशौचपदं प्राङ्नामकरणात्सद्यःशौचमितिवत्स्नानपर्यन्ताशौचप्रतिपादकं न तु सर्वथाऽऽशौचाभावपरमिति प्रतीयते । तथाऽपि ' नैष्ठिकानां व्रतस्थानाम् ' इत्यादिबृहस्पत्याद्येकवाक्यतयाऽऽशौचाभावपरत्वमेव तस्य युक्तमित्यभिप्रायेणाऽऽह—अत्र च यद्यपीत्यादि युक्तमुत्पश्याम इत्यन्तमिति ।

* अत एवेति । सपिण्डसोदकत्वाद्यनापाद्यनिमित्तकस्यैवाऽऽशौचस्य प्रतिषेधविषयत्वादित्यर्थः ।

+ सपिण्डत्वादिनिमित्तकाशौचस्य निषेधाद्यदि सपिण्डमरणादौ यतीनां स्नानानुष्ठानं न दृश्यते चेद्ब्रह्मचारिणां सपिण्डमरणादौ स्नानानुष्ठानं यल्लोके दृश्यते तस्य का गतिरित्याशङ्क्याऽऽह—ब्रह्मचारिणां त्विति । तदनुष्ठानं स्नानानुष्ठानम् ।

× अन्यथासिद्धमिति । शवस्पर्शानुगमनादिनिमित्तकाशौचप्रयुक्तं तत्स्नानानुष्ठानं ब्रह्मचारिणां न तु सपिण्डमरणनिमित्तकाशौचप्रयुक्तमित्यर्थः । धर्मसिन्धौ तु मातापितृमरणे यतीनां ब्रह्मचारिणां च स्नानमात्रं भवत्येवेत्युक्तम् ।

शुद्धिमवाप्नुयात्' इति वचनाद्भवत्येव स्नानम्। गौतमसूत्रे च ब्रह्मचारिग्रहणं गृहस्थभिन्नाश्रम्युपलक्षणमिति व्याख्यातं हरदत्तेन। ब्रह्मचारिणश्च ब्रह्म*चर्यकालमृतानामाशौ+चाभावः। सोऽभावः समावर्तनपर्यन्तमेव। तदनन्तरं तु तेषामुदकदानं त्रिरात्राशौचं च कुर्यात्। तदाह मनुः—

आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात्।
समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत्॥ इति।

आदिष्टं व्रतादेशः। सोऽस्यास्तीत्यादिष्टी ब्रह्मचारी॥ १७॥

×तत्तत्कार्येषु सत्रिव्रतिनृपनृपवद्दीक्षितर्त्विक्स्वदेश-
भ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशिल्प्यातुराणाम्।

---

* ब्रह्मचर्यकालमृतानामिति। 'आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात्' (मनु० स्मृ० ५।८८) इति मनुवचन आदिष्टीशब्देन व्रतादेशनसंबन्धाद्रूढिरूपेण ब्रह्मचार्युच्यते। स ब्रह्मचारी प्रत्यासत्त्या ब्रह्मचर्यदशायां मृतानां सपिण्डानां नोदकं कुर्यादित्यर्थः। अत एव मेधातिथिना 'तस्य' ब्रह्मचर्याश्रमस्थस्य सतो ये सपिण्डाः प्रमीयन्ते तेषामयमुदकदानप्रतिषेधः। प्राक्प्रमीतानां तु विहितमन्वाहिकं कुर्याद्दे( दे )वपितृतर्पणमिति' इति व्याख्यातम्।

+ आशौचाभाव इति। ननु 'आदिष्टी नोदकं कुर्यात्' इति मनुवचन उदकमित्यस्य पूरकपिण्डषोडशश्राद्धादिसकलप्रेतकृत्योपलक्षणतया कुल्लूकभट्टादिभिर्व्याख्यानान्निर्हरणादिसकलप्रेतकृत्यनिषेधप्रतीतावप्यशौचनिषेधाप्रतीतेः कथमयमाशौचाभावः संगच्छतामिति चेन्न। 'समाप्ते तूदकं दत्त्वा त्रिरात्रमशुचिर्भवेत्' इति तदुत्तरार्धे ब्रह्मचर्यसमाप्त्यनन्तरं त्रिरात्राशौचविधानेन तत्पूर्वं ब्रह्मचर्यदशायामाशौचाभावस्य सूचनात्। तदेतदभिप्रेत्योक्तम्—सोऽभावः समावर्तनपर्यन्तमेवेति। स चाऽऽशौचाभावो ब्रह्मचर्यदशायां मृतानामेवेत्यन्यदेतत्। अत्रेदं बोध्यम्—ब्रह्मचर्यदशायां मातापितृमरणे समावर्तनोत्तरं त्रिरात्रमाशौचम्। तद्व्यतिरिक्ते तु सपिण्डे समावर्तनात्प्राक्समावर्तनान्तवत्सरान्तर्मृते ( यस्मिन्वर्षे समावर्तनं विवक्ष्यते तस्मिन्वर्षे सपिण्डमृतावित्यर्थः )। त्रिदिनमाशौचम्। तत्प्राङ्मरणे तु स्नानमात्रम्। अत्र ब्रह्मचर्यावस्थायां मातापितृमरणनिमित्ताशौचाभावप्रतिपादनेनार्थाद्ब्रह्मचर्यावस्थातः प्राङ् मातापितृमरणे संपूर्णमेवाऽऽशौचं बोधितम्। अत एव धर्मसिन्धौ 'मातापितृमरणेऽनुपनीतस्यापि पुत्रस्यानूढकन्यायाश्च दशाहमाशौ च मुक्त्वा मातापित्रन्यसपिण्डमरणे न किमपि इत्युक्तं संगच्छत इति।

× अथ येषु येषु कार्येषु येषां येषां सूतकिनां तात्कालिकी शुद्धिस्तेषां ताम-

संप्रारब्धेषु दानोपनयनयजनश्राद्धयुद्धप्रतिष्ठा-
चूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष्वेतदर्थे ॥ १८ ॥

सत्रशब्देनात्र सततानुष्ठानसाम्यादन्नसत्रमुच्यते । मुख्यसत्र आशौचाभावस्य दीक्षितग्रहणेनैव सिद्धत्वात् । तत्कारिणः सत्रिणः । व्रतशब्देन द्वादशाब्दवनवासादिप्रायश्चित्ततयाऽन्यथा वाऽनुष्ठीयमानकृच्छ्रचान्द्रायणादिस्नातकव्रतानि भोजनव्यतिरेकेण जलपानादिविषयाः सत्यवसंकल्पाश्चोच्यन्ते । तत्र प्रवृत्ता व्रतिनः । नृपः प्रजापालनाधिकृतो यः *कश्चित् । नृपवानमात्यादिः । दीक्षिता ऋत्विजश्चावभृथस्नानात्

द्वादशेन वृत्तेनाऽऽह—तत्तत्कार्येष्विति । येषां यानि यानि कार्याणि जीवितार्थे विहितानि तेषां तेषु तेषु कर्तव्येष्वनन्यसाध्येषु सत्र्यादीनां सर्वाशौचं सदा नो भवतीति पूर्वश्लोकगतेनान्वयः । अत्र सत्रिणोऽन्नसत्रप्रवृत्ताः । व्रतिनः प्रारब्धप्रायश्चित्तलक्षणव्रताः । नृपो राज्येऽभिषिक्तः । नृपवान्राजसेवकः । दीक्षितो यागकर्ता । ऋत्विगाध्वर्यवादिकर्मकर्ता । अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् । यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥ इत्यृत्विग्लक्षणं मनुराह । अनेकश्रुतिपठनो बहुवेदशाखाध्ययनशीलः । आतुरो रोगी । अन्ये तु प्रसिद्धाः । एषां सर्वाशौचं नैव भवतीत्यर्थः । दानादय उत्सवान्ताः प्रसिद्धाः । एतेषु संप्रारब्धेषु निष्पाद्यमानेषु । एतदर्थ एतन्निमित्ते कार्ये । एतैः सत्र्यादिभिः संसाध्यमानकार्य इति यावत् । एतेषां सर्वाशौचं नो भवतीत्येतेनैव संबन्ध इति संक्षिप्तोऽर्थः ।

* यः कश्चिदिति । ब्राह्मणो वैश्यः शूद्रोऽपि नतु क्षत्रियजातिरेवेत्यर्थः । अत्र प्रमाणं मनुः—राज्ञो माहात्मिके स्थाने सद्यःशौचं विधीयते । प्रजानां परिरक्षार्थमासनं चात्र कारणम् ॥ अस्यार्थः—माहात्मिके स्थाने ( विद्यमानस्य ) राज्ञः सद्यःशौचं विधीयते । प्रजानां परिरक्षार्थमासनमत्र कारणमित्यन्वयः । महात्मन इदं स्थानं माहात्मिकं राज्यपदाख्यं सर्वाधिपत्यलक्षणं ( महात्मैव प्राचीनपुण्येन राज्यमासादयति ) तस्मिन्वर्तमानस्य राज्ञः ( प्रजापालनसामर्थ्यवतो विप्रादेः ) सद्यःशौचमुपदिश्यते । नतु राज्यप्रच्युतस्य क्षत्रियजातेरपि । अत्र जातिरविवक्षिता । यतो युक्तन्यायनिरूपणेन, दुर्भिक्षे स्वकोशादन्नदानेनोपसर्गेषु दिव्यभौमान्तरिक्षेषु शान्तिहोमदानजपादिना प्रजासंरक्षणार्थं राज्यासनेष्ववस्थानमाशौचाभावे कारणम् । तच्चाक्षत्रियाणामपि तत्कार्यकारिणां विप्रवैश्यशूद्राणामविशिष्टम् । अत एव सोमकार्यकारिणि फलचमसे सोमधर्माः, अत एव व्रीहिधर्मान्विततया श्रुतमप्यवघातादि तत्कार्यकारित्वस्य विवक्षणात्प्रकृतौ यवे विकृतौ च नीवारादिषु संबध्यत इति

प्राक्, यश्चेदं कर्म कुर्वन्नधिकृतस्तस्मात् । *एकाऽपि सप्तमी विषय-
भेदाद्भिद्यते । तेन सत्रयागादिषु ऋत्विग्मन्त्रेषु सत्रव्रतव्यथा स्वदेशभ्रंशनादिमन्त्रादि-

---

कर्मानधिकाराशौचं तत्तदधिकरणेषु निरणायीति कुल्लूकभट्टाः । तथा च यथा व्रीहिद्र-व्यस्य व्रीहित्वजातिप्रयुक्तत्वेऽपि तदविवक्षणेन व्रीहिकार्यकारित्वमात्रविवक्षया " व्रीहीनवहन्ति ' इत्येवमादयो व्रीहिधर्मा अवहननादयो नीवारेष्वप्यनुष्ठीयन्ते व्रीहिकार्यकारित्वात्तेषां तद्वत्प्रकृतेऽपि राजशब्दस्य क्षत्रियत्वजातिसंबन्धनिमित्त-त्वेऽपि तदविवक्षणेन व्यवहारदर्शनाद्यसाधारणराजकार्यकारित्वमात्रस्य विवक्षयाऽऽ-शौचकृताधिकारित्वाभावरूपो राजधर्मो व्यवहारावेक्षणादिना प्रजापालनरूपराज-कार्यकारिणि ब्राह्मणवैश्यशूद्रात्मकेऽपि राजनि विधीयत इति तात्पर्यम् । एवं च मूले नृपशब्दो न नृपत्वजातिसंबन्धपरः किंतु नॄन्पातीति व्युत्पत्त्या मनुजपरिपाल-नरूपयोगनिमित्त एवेति ध्येयम् । अत एवैतच्छ्लोकव्याख्यावसरे मेधातिथिनाऽपि ' नात्र जातिमात्रं किंतु प्रजापालनाधिकारः । आसनशब्दोऽपीह नाऽऽसनशय्या-दिवचनः, अपि तु तत्पदं प्राप्तवतो यत्कर्तव्यं तदाह । अतश्चाक्षत्रियोऽपि यदि प्रजा-पालने समर्थस्तस्याप्याशौचाभाव एव पूर्वव्याख्यातः ' इत्युक्तं संगच्छते । एतत्सर्वं मनस्यनुसंधाय भट्टरघुनाथटीकाकृदाह—नृपः प्रजापालनाधिकृतो यः कश्चिदिति ।

* एकाऽपि सप्तमीति । अयं भावः—' सत्रिव्रतिनृपनृपवद्दीक्षितर्त्विक्स्वदेशभ्रं-शापत्सु ' इत्यत्र सत्र्याद्यापदन्तानामष्टानामितरेतरयोगद्वन्द्वे ततः सप्तमीबहुवचनम् । तथा च ' द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते ' इति न्यायेन द्वन्द्वोत्तरसप्तम्याः सत्र्याद्यापदन्तेष्वष्टसु द्वन्द्वघटकेष्वौपश्लेषिकत्वादिनैकरूपेणैवान्वयो युक्तः । न तु क्वचिदौपश्लेषिकत्वेन क्वचिदंशे तु वैषयिकत्वेनेत्येवं भेदेनेति । तथाऽपि विषयभे-दाद्विषयस्य प्रतिपाद्यार्थस्य सत्र्याद्यृत्विगन्तषट्कस्य तथा स्वदेशभ्रंशापदित्यस्य च भिन्नत्वाद्द्वन्द्वोत्तरं पठितायाः सप्तम्या अपि भेदः । यथा ह्युक्तं भट्टोजिदीक्षितैः-' आदेशप्रत्यययोः ' (पा०सू०८।३।५९) इति सूत्रे मनोरमायाम्—' एकाऽपि षष्ठी विषयभेदाद्भिद्यते ' इति तद्वत्प्रकृतेऽपि । तथा च सप्तमीद्वयोच्चारणं कर्तव्यं तच्च समुदायान्न संभवतीति श्लोके तन्त्रेण सुब्रूपस्य सप्तमीबहुवचनस्य सकृदु-च्चारणेन निर्देशः कृतः । तत्तद्विषयस्यान्वयबोधकाले तु ' सत्रिव्रतिनृपनृपवद्दीक्षि-तर्त्विक्षु ' ' स्वदेशभ्रंशापत्सु ' इत्येवं प्रत्येकं सप्तमीबहुवचनान्तोच्चारणेन व्याख्येय-वाक्यस्य कल्पना कार्या । तत्र पूर्वत्रौपश्लेषिकाधिकरणे सप्तमी परत्र तु वैषयि-काधिकरणे सा । इत्यभिप्रायवांस्तदनुगुणमेवाऽऽचष्टे—ते ( सत्र्यादयः षट् ) कर्मानधिकाररूपाशौचस्याधिकरणमिति, स्वदेशभ्रंशापत्सु देशभ्रंशापद्विषये इति तदर्थः ।

यज्ञरूपकार्यविषये सद्यःशौचं *न भवति । ते कर्माधिकाररूपाशौचा-

---

* न भवतीति । अत्र दीक्षितानामृत्विजां चावभृथस्नानात्प्रागपदाशौचाभाव-
चनं तन्मातापित्राशौचव्यतिरेकेणेति बोध्यम् । तदाह शङ्खः—ऋत्विजां दीक्षितानां
च यज्ञियं कर्म कुर्वताम् । नैवाऽऽशौचं भवेत्तेषां पित्रोस्तु मरणं विना ॥ इति । अयं
चाऽऽशौचाभावः किंविषयः इत्याकाङ्क्षायां पाचकादिवत्कर्मनिमित्तैः ( यौगिकै-
रवयवशक्त्याऽर्थप्रतिपादकैः ) शब्दैः सत्त्रादितत्तद्व्रतासाधारणस्य कर्मणो बुद्ध्यनु-
पस्थितत्वेन प्रत्यासत्त्योपस्थितं परित्यज्यानुपस्थितकल्पने प्रमाणाभावेन च सत्त्रा-
दिव्यवहारप्रयोजक उपस्थितसत्त्रादितत्तत्कर्मविशेष एवायमाशौचाभावो न कर्ममात्रे
नापि व्यवहारदशायामिति बोध्यम् । अत एव विष्णुना ' न राज्ञां राजकर्मणि
न सत्त्रिणां सत्त्रे न व्रतिनां व्रते ' इत्यादिना प्रतिनियतविषय एवाऽऽशौचाभावः
प्रदर्शितः । तदेतदभिसंधायोक्तं मूले—तत्तत्कार्येष्विति । एतदेव विवृणोति—
सत्त्रव्रतव्यवहारदर्शनादिमन्त्रादियज्ञरूपकार्येत्यादि । स्मृत्यन्तरेऽपि ' निमन्त्रण-
दस्याग्नि कृच्छ्रचान्द्रायणादिषु । निवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥ इति ।
अस्यार्थः—निमन्त्रणदाने कृच्छ्रचान्द्रायणादिव्रतेषु कृच्छ्रेषु कष्टेषु ज्वरादिषु
विहिते होमादौ होमदानजपादौ निवृत्ते समाप्ते तदङ्गतया विहिते ब्राह्मणभोजनद-
क्षिणादानाभिषेकादिषु च नाऽऽशौचमिति । व्यवहारदर्शनादीत्यादिपदेन संग्राम-
संनहनप्रास्थानिकशान्तिकदेशोपप्लवप्रजाविप्लवोत्पातशान्तिकादीनि गृह्यन्ते । तेष्वपि
राज्ञां नाऽऽशौचमित्यर्थः । तदाह हारीतः—संग्रामस्थश्च राजन्यो वैश्यो मध्ये
गवां स्थितः । श्रोत्रियब्राह्मणो नित्यं ब्रह्मचारी च वै शुचिः ॥ इति । आश्वला-
यनोऽपि—' संग्रामे समुपोढ्ळे राजानं संनाहयेत् ' इति । ब्रह्मपुराणम्—'प्रया-
स्यतश्च संग्रामे होमे प्रास्थानिके सति ' इति । पराशरः—' दुर्भिक्षे राष्ट्रसंपाते
आपदां च समुद्भवे । उपसर्गमृते चैव सद्यःशौचं विधीयते ' इति । ब्राह्मम्—
मन्त्रादितर्पणे चापि प्रजानां शान्तिकर्मणि । राज्यनाशस्तु येन स्याद्विना राज्ञा
स्वमण्डले । आशौचं न भवेल्लोके सर्वमानत्र विद्यते' । इति । राज्ञः पुरोहितामा-
त्यादेस्तदीयमन्त्रस्वस्त्ययनादौ नाऽऽशौचम् । तदाहतुः शङ्खलिखितौ—' राज्ञः पुरो-
हितोऽमात्यः शुद्धिस्तस्य तदाश्रयात् ' इति । अत्र तदाश्रयादिति हेतुं वदता
राजकार्येष्वनन्यनिष्पाद्येषु शुद्धिरिति सूचितम् । तथा राजाज्ञाकारिणां राजभृ-
त्यानां राजापेक्षितानां च नाऽऽशौचम् । दृष्टा शङ्खप्रचेतसौ—'नाऽऽशौचमभ्य-
कथिता राजाज्ञाकारिणश्च ये । राजानो राजभृत्याश्च सद्यःशौचाः प्रकी-
र्तिताः ' इति । राजभृत्या हस्त्यश्वदमनकारिणः । तथा च ब्राह्मम्— यज्ञकर्म

धिकरणं न भवन्तीत्यर्थः । स्वदेशस्य विस्फोटादिभिरुपसर्गे राजभयाद्वा भ्रंश उपस्थिते विद्यमाने वा सति तदभावार्थे शान्तिकर्मणि, आपदि वाऽन्नाभावेन कुटुम्बपीडाया सत्यां तदुपशमार्थे प्रतिग्रहादावाशौचं *न भवति । अपिश्चार्थे । अनेकाः श्रुतीः शाखा वेदान्वा पठतीत्यनेकश्रुतिपठनः । नन्द्यादित्वाल्लयुः । इदं चो+पलक्षणमङ्गाध्ययनमधीतार्थज्ञानं तदर्थानुष्ठानं च द्रष्टव्यम् । तस्य प्रत्यहाध्ययने विस्मरणसंभावनायामध्ययने, ×भिषजो वैद्यस्य नाडीस्पर्शादौ, कारूणां स्वशरीरेण कर्मकराणां सूपकारनिर्णेजकादीनां, शिल्पिनां

---

राजभृत्यानां हस्त्यश्वदमनादिकम् । तन्नास्ति यस्मादन्यस्य तस्मात्ते शुचयः स्मृताः ' इति । तथा यस्य कारुशिल्पिसूपकारवैद्यादेराशौचाभावं स्वकार्यसिद्धये राजा वाञ्छति तस्यापि नाऽऽशौचम् । तदाह ब्रह्मपुराणम्—शिल्पिनश्चित्रकाराद्याः कर्म यत्साधयन्त्यलम् । तत्कर्म नान्यो जानाति तस्माच्छुद्धाः स्वकर्मणि ॥ सूपकारेण यत्कर्म करणीयं नृपस्य हि । तदन्यो नैव जानाति तस्माच्छुद्धस्तु सूपकृत् ॥ चिकित्सको यत्कुरुते तदन्येन न शक्यते । तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः ' इति । अत्रेदं बोध्यम्—यद्यप्येषां कारुशिल्प्यादीनां ' कारवः शिल्पिनो वैद्या दासीदासास्तथैव च ' इत्यनेन स्वभावतोऽपि शुद्धिरस्ति तथाऽपि राज्ञाऽपेक्षितानां सुतरां भवतीयमिति । तथा दीक्षितानामृत्विजां च नाशौचम् । तदुक्तं ब्रह्मपुराणे—' गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः । पश्चाद्दशाहे पतिते न भवेदिति निश्चयः ' ॥ इति । इदं तु बोध्यम्—यद्यपि मधुपर्कग्रहणानन्तरं न भवेदित्युक्तं तथाऽपि ' ऋत्विजो वृत्वा मधुपर्कमाहरेत् ' इत्यनेनाव्यवधानबोधनान्मधुपर्कशब्दो वरणं लक्षयति । ' तथा गृहीतदीक्षस्य त्रैविद्यस्य महामखे । स्नानं त्ववभृथे यावत्तावत्तस्य न विद्यते ' । इति च । एवं सत्रादिऋत्विगन्तानां षण्णामाशौचाभावे प्रमाणं निर्दिष्टमिति ज्ञेयम् ।

* न भवतीति । दाने विवाहे यज्ञे च संग्रामे देशविप्लवे । आपद्यपि च कष्टायां सद्यःशौचं विधीयते ' ॥ इति याज्ञवल्क्योक्तिरत्र प्रमाणम् ।

+ इदं चोपेति । ग्रन्थार्थतो विजानाति वेदमङ्गैः समन्वितम् । सकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम् ' ॥ इति दक्षवचनप्रामाण्यादित्यर्थः ।

× भिषज इति । कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । अत्र सद्यः शौचाः प्रकीर्तिताः इति चतुर्थचरणः । एतत्प्रचेतोवचनमत्र प्रमाणम् ।

च *वासीवर्तिकादिव्यवधानेन कर्मकराणां तक्षचित्रकरादीनां, त+त्त्कर्मणि, आ×तुराणां च व्याध्याद्यभिभवेन मुमूर्षूणां तदुपशमार्थे दानादौ नाऽऽशौचम् । दाने च सं=प्रारब्धे तदर्थे नाऽऽशौचम् । दानस्य च प्रारम्भो द्विविधः । तुलादौ नान्दीश्राद्धं क्वचिच्च पूर्वसंक÷ल्पः । उपनयने यजने वृषोत्सर्गादौ श्राद्धे च संप्रारब्धे तदर्थे नाऽऽशौचम् । युद्धे च संप्रारब्ध उपस्थिते तदुपयोगिनि 'संग्रामे समुपोढ्ळे राजानं संनाहयेत्' इत्याद्याश्वलायनोक्तविधया क्रियमाणे संनहनादौ प्रास्थानिके शान्तिहोमादौ च नाऽऽशौचम् । प्रतिष्ठा देवप्रतिष्ठा । चूडा चौलकर्म । तीर्थयात्रा । अर्थयात्रा च । जपः पुरश्चरणादिः । परिणयनं विवाहः । तदादय उत्सवा अनुक्ताः संस्कारास्तडागोत्सवादयश्च । =एतेषु च प्रारब्धेष्वेतदर्थे नाऽऽशौचम् । तथा च याज्ञवल्क्यः—

> ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
> सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
> दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
> आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥ इति ।

विष्णुः—' आशौचं न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां

---

* वासीति । काष्ठतक्षणसाधनं शस्त्रं वासी । 'वाकस' इति लोके प्रसिद्धम् । आलेख्यनिर्माणशलाका वर्तिका । 'चित्रे काढण्याचें कलम' इति लोके प्रसिद्धम् ।

+ तत्तत्कर्मणीति । सूपकरणनिर्णेजनालेख्यकरणादिकर्मणीत्यर्थः ।

× आतुराणामिति । 'उद्यतो निधने दान आर्तो विप्रो निमन्त्रितः । तदैव ऋषिभिर्दृष्टं यथाकालेन शुध्यति ॥ इति पराशरस्मरणात् । निधन उद्यतः—मुमूर्षुः । आर्तो व्याधिपीडितः । दाने तदुपशामके कर्मविपाके निमन्त्रितो विप्रः । एतेषां तत्तदसाधारणकार्ये नाऽऽशौचमित्यर्थः ।

= संप्रारब्ध इति । व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे । प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥ इति विष्णुवचनादित्यर्थः ।

÷ पूर्वसंकल्प इति । 'पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति' इति ऋतुस्मरणात् ।

= एतेष्विति । 'विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि । न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत्' ॥ 'न देवप्रतिष्ठोत्सवयज्ञेषु' इति पैठीनसिविष्ण्वोर्वचनप्रामाण्यात् ।

सत्रे न कारूणां कारुकर्मणि न राजाज्ञाकारिणां तदिच्छायां न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतयोः ' इति ।

दक्षः--ग्रन्थार्थतो विजानाति वेदमङ्गैः समन्वितम् ।
सकल्पं सरहस्यं च क्रियावांश्चेन्न *सूतकम् ॥ इति ।

प्रचेताः--कारवः शिल्पिनो वैद्या दासीदासास्तथैव च ।
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः ॥ इति ।

लघुविष्णुः—*व्रतयज्ञविवाहेषु श्राद्धे होमार्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

प्रारम्भश्च तेनैवोक्तः—

+प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ इति ।

---

* सूतकोत्पत्तिदिनात्प्राग्भवेषु दिनेष्वारब्धं यदनेकदिनसाध्यं कृच्छ्रचान्द्रायणादि व्रतं यच्चान्यद्यज्ञविवाहोत्सवश्राद्धहोमार्चनजपादिकं तावन्मात्रमाशौचदिनेष्वपि कुर्यादित्याह—व्रतयज्ञेति ।

+ प्रारम्भ इति । यज्ञे ज्योतिष्टोमादौ ऋत्विग्वरणं प्रारम्भस्तस्मिन्कृत आशौचपातेऽपि याज्ययाजकयोर्न दोषः । आशौचकृतं कर्मानधिकारित्वं नास्तीत्यर्थः । व्रतेऽनन्तव्रतादौ । सत्रे गवामयनादौ । ' प्रारम्भो वरणं यज्ञे ' इत्येवं यज्ञग्रहणेन गतार्थेऽपि सत्रग्रहणे, तत्र यजमानानामेवर्त्विक्कार्यकरत्वेन वरणाभावेनोक्तारम्भासंभवात्पृथक्सत्रग्रहणं क्रियते । तथा विवाहोपनयनचौलादिषु संस्कारेषु तडागोत्सर्गगृहादानादिषु च नान्दीमुखपितृगणश्राद्धमारम्भः । तस्मिन्कृते नाऽऽशौचदोषः । तथा श्राद्धे—एकोद्दिष्टे पार्वणे च पाकपरिक्रिया, परेः साकल्यार्थकत्वात्सकलपाकनिष्पत्तिः प्रारम्भः । पाके निष्पन्ने नाऽऽशौचदोष इत्यर्थः । यत्तु—निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि । निमन्त्रितस्य विप्रस्य स्वाध्यायादिरतस्य च ॥ देहे पितृषु तिष्ठत्सु नाऽऽशौचं विद्यते क्वचित् । इत्युक्तं तन्निमन्त्रणस्यापि प्रारम्भमभिप्रेत्येति बोध्यम् । तदुक्तं संग्रहे—' निमन्त्रणं तु वा श्राद्धे प्रारम्भः स्यादिति श्रुतिः ' इति । अथवा पूर्वेद्युर्निमन्त्रणे तस्यैव प्रारम्भत्वं सद्योनिमन्त्रणे तु पाकपरिक्रियेति व्यवस्था बोद्धव्या । कथंचिन्नान्दीमुखाकरणेऽपि बलवदनुपपत्तावाशौचमध्येऽपि विवाहाद्यर्थं शुद्ध्युपायमाह विष्णुः—अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद्घृतम् । गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतकी ॥ इति । कूष्माण्डैः—' यद्देवा देवहेडनम् ' इत्यादिमन्त्रैः ।

अत्र सत्रपदेन मुख्यमेव *सत्रम् । तत्र +वरणाभावात् । × आदिपदेन नान्दीश्राद्धवत्कर्ममात्रग्रहणम् । एतदभिप्रायेणैवोपनयनादिग्रहणं मूले ।

गृहीतमधुपर्कस्य यजमानात्तु ऋत्विजः ।
पश्चादशौचे पतिते न भवेदिति निश्चयः ॥

---

* सत्रमिति । सीदन्ति येषु बहवो यजमानाः कर्तृत्वेनेति सत्रशब्दव्युत्पत्तेर्बहुकर्तृकाः सोमयागाः सत्राण्युच्यन्ते । श्रूयते हि–' चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन् ' इति । तानि च 'त्रयोदशरात्रप्रभृतीनि विश्वसृजामयनान्तानि' इत्यथर्ववेदभाष्ये सत्रलक्षणं प्रदर्शितम् । जैमिनीयन्यायमालाविस्तरे माधवाचार्यैः– ' आसीरन्, उपेयुः ' इति चोदनाद्वयं यजमानबहुत्वं च सत्रलक्षणमित्युक्तम् । निरुक्तलक्षणद्वयान्यतरलक्षितं मुख्यं सत्रमत्र विवक्षितमित्यर्थः ।

+ वरणाभावादिति । तदुक्तं पूर्वमीमांसायां जैमिनिमुनिना दशमाध्याये द्वितीयपादे-वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ' ( पू. मी. अ. १० । पा. २ सू. ३४ ) इति । अस्यार्थो माधवाचार्यैर्जैमिनीयन्यायमालाविस्तर इत्थं वर्णितः–सत्कारपुरःसरं ' अग्निर्होता ' इत्यादिमन्त्रैः प्रार्थनारूपमृत्विजां वरणं सोमे समाम्नातम् । सोमवत्सत्रेऽपि तत्कार्यम् । अन्यथा वरणरहितानामृत्विक्त्वाभावात्सत्रं न सिध्येत् । अत एव तत्सिद्ध्यै सत्रप्रकरणे 'ये यजमानास्त ऋत्विजः' इति स्वतःप्रवृत्तानपि यजमानाननूद्य वरणसाध्यमृत्विक्त्वं तेष्वाधातव्यमिति विदधाति । तस्मादृत्विग्वरणं सत्रे कार्यमिति प्राप्ते ब्रूमः । नैवम् । सत्रं ह्यनुष्ठातृणां सर्वेषां स्वकर्म । नहि स्वकर्मणि क्रयार्थं वरणमपेक्ष्यते । क्रयार्थं हि प्रकृतौ वरणम् । दानमेव क्रयार्थं वरणं त्वदृष्टार्थमिति चेत् । नैवम् । वरणस्य भविष्यद्दानसूचनेनोत्साहजननार्थत्वात् । अन्यथा वरणकाले ' कच्चित्कल्याण्यो दक्षिणाः ' इत्यृत्विजां प्रश्नः कथं संगच्छेत । न चर्त्विक्त्वासिद्धिः शङ्कनीया । तत्र वक्तव्यम्–किं नामर्त्विक्त्वं कर्मकरत्वं वा यागकर्तृत्वं वा । आद्ये कर्मकराणां स्वामित्वाभावेन ' ये यजमानास्त ऋत्विजः, इति वचनं विरुध्येत । द्वितीये तु स्वत एव यागं कर्तुं प्रवृत्तत्वाद्वरणमन्तरेणाप्यृत्विक्त्वं सिध्यति । ईदृशमेवाऽऽर्त्विज्यं वचनेन विधीयते । तस्माद्दानवद्वरणं सत्रे लुप्यत इति ।

× आदिपदेनेति । ' नान्दीमुखं विवाहादौ ' इत्यत्रत्यादिपदेनेत्यर्थः । नान्दीश्राद्धयुक्तं यत्कर्म तस्य सर्वस्य ग्रहणमित्यभिप्रायेणाऽऽह–उपनयनादिग्रहणमिति । सीमन्तव्रतचौलनामकरणान्नप्राशनोद्यापनस्नानाधानविवाहग्ज्ञतनयोत्पत्तिप्रतिष्ठासु च । पुंसूत्यावसथप्रवेशनसुनाद्यास्यावलोकाक्षरस्वीकारक्षितिपाभिषेकदयिताद्यनौ तु नान्दीमुखम् ॥ इत्युक्तेरिति भावः ।

तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे ।
स्नानं त्ववभृथे यावत्तावत्तस्य न विद्यते ॥
नित्यमन्नप्रदस्यापि कृच्छ्रचान्द्रायणादिषु ।
निर्वृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥
गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित् ।
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ॥
निमन्त्रितस्य विप्रस्य स्वाध्यायादिरतस्य च ॥
देहे पितृषु तिष्ठत्सु नाऽऽशौचं विद्यते क्वचित् ।
प्रायश्चित्तप्रवृत्तानां दातृब्रह्मविदां तथा ॥ इति ।

ब्रह्मपुराणवचनेऽपि निमन्त्रणाद्विप्रः श्राद्धकर्मारम्भः पाकरूप एव विवक्षितः। इदं च श्राद्धकर्तुः। भोक्तुस्तु निमन्त्र*णादेवाऽऽशौचाभावः। पैठीनसिः—

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत् ॥ इति ।

वैरिवेष्टितदुर्गसंरक्षणार्था यज्ञा दुर्गयज्ञाः शान्तिकोच्चाटनादयः । क्रतुः—पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यतीति । अत्र च नृपवैद्यादावाशौचाभावप्रतिपादनमाशौचसंकोचस्य तत्कार्यावश्यकत्वादनन्यगतिकत्वनिबन्धनत्वादध्ययनापदादौ चाऽऽर्तिनिबन्धनत्वाद्यदा सद्यःशौचं विना गत्यभाव आर्तिश्च तदा + द्रष्टव्यम् । × अन्यदा त्वेकाहत्र्यहादिकमपि । एवं च यस्य यावत्कालं गत्यन्तरसद्भाव आर्त्यभावश्च तस्य तावत्कालमाशौचं = भवति । तथा च—

---

* निमन्त्रणादेवेति । 'निमन्त्रणं तु वा श्राद्धे प्रारम्भः स्यादिति श्रुतिः' इति संग्रहवचनादित्यर्थः ।

\+ द्रष्टव्यमिति । अत एव 'ऋत्विजां दीक्षितानां च........सद्यःशौचं विधीयते' (या० स्मृ० ३ । २८-२९) इत्येतद्व्याख्यानावसरे मिताक्षरायां विज्ञानेश्वराचार्यैः 'इयं च शुद्धिर्यस्य सद्यः शौचं विना गत्यभावस्तद्विषया' इत्युक्तम् ।

× अन्यदेति । गत्यन्तरसद्भाव इत्यर्थः । आदिपदेन पक्षिणी सद्यःशौचं च विवक्षितम् ।

= भवतीति । आपदुपाधिकत्वादाशौचसंकोचस्येत्यर्थः ।

अर्वाक्संचयनादस्थ्नां त्र्यहमेकाहमेव वा ।
* एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः ॥
त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥

इत्यादिमनुदक्षादिवचनानां दशाहादिन्यूनोच्चावचाशौचकल्पप्रतिपादकानामप्येतादृ+ शविषयत्वमेव । × सगतिकस्य राजादेः = कुसूलधान्यकादेश्च * पूर्णमेवेति बहुसंमतः पक्षः । अत = एव सामान्येनान्यद्दक्षवचनम्—

स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्तितम् ।

---

* एकाहादिति । नन्वेतद्वचनपर्यालोचनयाऽध्ययनज्ञानानुष्ठानयोगिनां त्र्येकाहादिभिः सर्वात्मना नित्यनैमित्तिकादिसर्वस्मिन्कर्मणि संव्यवहारे च शुद्धिः कस्मान्नेष्यत इति चेदुच्यते । 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' (मनु० ५ । ५९) इति सामान्यप्राप्तदशाहबाधपुरःसरमेव 'ह्येकाहाद्ब्राह्मणः शुध्येत्' इति विधायकं भवति । बाधस्य चानुपपत्तिनिबन्धनत्वाद्यावत्यबाधितेऽनुपपत्तिप्रशमो न भवति तावद्बाधनीयम् । अतः किंचिदनेन बाध्यमित्यपेक्षायामपेक्षितविशेषसमर्पणक्षमस्याग्निवेदसमन्वित इति वाक्यविशेषस्य दर्शनादग्निवेदविषयेऽग्निहोत्रकर्मणि स्वाध्याये च व्यवतिष्ठते न पुनर्दानादावपि । एवं चाग्निवेदपदयोः कार्यान्वयित्वं भवति । इतरथा येनाग्निवेदसाध्यं कर्म कृतं तस्यैकाहाच्छुद्धिरिति पुरुषविशेषोपलक्षणत्वमेव स्यात् । न चैतद्युक्तम् । विशेषणत्वे संभवति जघन्यस्योपलक्षणत्वस्यान्याय्यत्वादिति बोध्यम् ।

+ एतादृशविषयत्वमिति । यावत्कालपर्यन्तं गत्यन्तरसद्भाव आर्त्यभावश्च तादृशकालविषयत्वमित्यर्थः ।

× सगतिकस्येति । गत्यन्तरसद्भाववत आर्त्यभाववतश्च । राजादेरादिपदेन तत्सदृशस्यान्यस्य धनिकस्य ग्रहणम् ।

= कुशूलधान्यकादेरिति । वर्षत्रयनिर्वाहोचितधान्यादिधनकः कुसूलधान्यकः । आदिपदेन कुम्भीधान्यकस्य ग्रहणम् । एकसंवत्सरपर्यन्तनिर्वाहोचितधान्यादिधनकः कुम्भीधान्यक इति (म० स्मृ० ४ । ७) इत्यत्र कुल्लूकभट्टः । कुशूलधान्यकादेरित्यत्रापि सगतिकस्येति संबन्धनीयम् ।

* पूर्णमेवेति । राजादेः कुशूलधान्यकादेश्च गत्यन्तरसद्भावादार्त्यभावाच्च ब्राह्मणादिक्रमेण दशाहद्वादशाहादि पूर्णमेव । सर्वस्याऽऽशौचसंकोचस्यानन्यगतिकत्वनिबन्धनत्वादार्तिनिबन्धनत्वाच्चेत्यस्यार्थस्य बहुसंमतत्वादित्यर्थः ।

= अत एवेति । गत्यन्तरसद्भाववत आशौचस्य संपूर्णत्वादेवेत्यर्थः ।

आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकम् ॥

इदं दशद्वादशाहादि पूर्णम्। आपद्गतस्येदं सूतकं न किंतु यदाऽऽपदुपस्थितिस्तावदेवेत्यर्थः। यमवचनम्–'स्वस्थकृत्स्वायं धर्म आपदि त्वन्यथा स्मृतः' इति। हर*दत्तस्त्वध्ययनादिगुणनिमित्त आशौचस्यायं संकोचो न त्वनधिकारस्य कार्यविशेषे। दशाहाद्याशौचं तु + निर्गुणविषयमित्याह। सग्निप्रविदीक्षितस्त्वि-

---

* हरदत्तस्त्विति। अयं भावः—'एकाहाद्ब्राह्मणः शुध्येत्' इति दक्षवचन एकाहस्त्र्यहो दशाहश्चेति त्रय आशौचविकल्पाः प्रदर्शिताः। तत्रामुकस्मिन्नित्येवं कार्यविशेषस्याश्रवणादविशेषेण (नित्यनैमित्तिकादौ संव्यवहारे चेति सर्वस्मिन्) एकाहाच्छुद्धिरित्यादिराशौचसंकोचः। योऽग्निवेदसमन्वित इति श्रवणादध्ययनादिगुणयोगनिमित्तोऽयं विकल्पः। तथा चाग्निवेदैतदुभयगुणसंबन्धवतो विप्रस्य सर्वात्मनैकाहाच्छुद्धिः। अग्निसंबन्धविरहपूर्वकमन्त्रब्राह्मणात्मकवेदसंबन्धवतो ब्राह्मणस्य त्र्यहाच्छुद्धिः। अग्निवेदैतदुभयविधगुणसंबन्धरहितस्य तु दशभिर्दिनैः शुद्धिरित्यर्थं हरदत्तोऽभिप्रैति। तदाह—अध्ययनादिगुणनिमित्त आशौचस्यायं संकोचः। न तु स्वाध्यायाध्ययनाग्निहोत्ररूपकार्यविशेषेऽनधिकारस्य संकोचः, कर्तव्यविशेषेऽधिकारप्रतिपादनं न त्विति यावदिति। परंत्वेतन्न युक्तमिति * एतच्चिह्नित 'एकाहात्' इति प्रतीकगतटिप्पण्यां प्रतिपादितं तत्तत्रैव द्रष्टव्यम्। किंच यदि त्रेताग्निवेदैतदुभयगुणसंबन्धवतो विप्रस्य सर्वस्मिन्कर्तव्य एकाहाच्छुद्धिरस्मिन्वचनेऽभीष्टा स्यात्तर्हि 'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते। दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते'॥ उभयत्र सूतके मृतके च। दशाहानीत्याशौचकालोपलक्षणम्। दशाहग्रहणं ब्राह्मणस्य प्राधान्यात्। कुलस्य सूतकमृतकवत्कुलस्यान्नं न भुज्यतेऽन्यैः। दानप्रतिग्रहस्मार्तहोमाश्चाऽऽशौचिभिः क्रियमाणा निवर्तन्त इत्युभयत्र दशाहपर्यन्तमन्नभोजनदानप्रतिग्रहादिनिवृत्तिप्रतिपादकयमवचनं विरुध्येत। अस्मन्मते त्वग्निवेदसमन्वित इत्येतद्घटकाग्निवेदपदोपस्थितयोरग्निहोत्रस्वाध्यायाध्ययनयोरेवाऽऽशौचप्रयुक्तानधिकारित्वस्य निवृत्तिप्रतिपादनेन तद्व्यतिरिक्ते कर्तव्यविशेषेऽनधिकारित्वस्य सद्भावादुभयत्र दशाहपर्यन्तं भोजनदानस्मार्तहोमादिनिवृत्तिकथनं संगच्छत इत्यविरोधो द्रष्टव्यः।

+ निर्गुणेति। एकाहाच्छुध्यते विप्रो यस्तु ब्रह्माग्निसंयुतः। त्र्यहात्केवलवेदस्तु निर्गुणो दशभिर्दिनैः॥ इति स्मृत्यन्तरप्रामाण्यादित्यर्थः। शुध्यत इत्यत्र शुद्धीकरणार्थकाद्दीवादिकाच्छुन्धधातोर्मियते कार्ष्मिमितिवत्कर्मकर्तरि लकारो बोध्यः।

स्वदारब्धदानोत्सवादीनां तु नियत एव तत्त * त्कार्ये सद्योऽधिकारः । + तस्यालौकिक×त्वात्स्वरूपत = आरम्भतश्चाऽऽवश्यकत्वाच्च । ⊙ अनाशौचिद्वारा कर्तृत्वे च प्रमाणाभावात् । अत ◡ एव वैताना-

---

* तत्तत्कार्य इति । दानोत्सवादिकार्ये इत्यर्थः ।

+ तस्य । दानोत्सवादेः कार्यस्य ।

× अलौकिकेति । विहितत्वादपूर्वलक्षणातिशयाधायकत्वेनालौकिकत्वं बोध्यम् ।

= आरम्भत इति । 'आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्' इति विष्णुवचनादारब्धस्यान्तगमनस्याऽऽवश्यकत्वमवगम्यत इति भावः । अयं भावः—सत्रव्रतयज्ञानामपूर्वलक्षणातिशयजनकत्वात्स्वरूपत आवश्यकत्वं तथा 'आरब्धे सूतकं न स्यात्' इत्युक्तत्वादारम्भतश्चापि तेषामावश्यकत्वं भवति । अतः सत्त्यादीनां तत्तत्कर्मण्यनन्यगतिकत्वाभाव आर्त्यभावेऽपि च सद्यःशौचेनाधिकारो भवति यथा तथा दानोत्सवादेः कार्यस्याप्यतिशयाधायकत्वेन स्वरूपत आरम्भतश्चाप्यावश्यकत्वेनानन्यगतिकत्वाद्यभावेऽपि सद्यःशौचं भवति । नाडीस्पर्शयुक्तन्यायप्रदानचैलनिर्णेजनादेः कार्यस्य दृष्टफलजनकत्वेनालौकिकत्वाभावात्स्वरूपतोऽनावश्यकत्वाच्च पथ्याद्यादेरार्तिभावेऽनन्यगतिकत्वेऽपि नैव सद्यःशौचेनाधिकारः । न तु सत्त्यादिवत्तदभाव इति केचित् ।

⊙ ननु 'सद्यःशौचं विधीयते' इत्येवं सद्यःशौचविधानं नाऽऽशौचिकर्तृकताप्रतिपादनपरं किंत्वनाशौचिद्वारा कर्तव्यमित्येवंतात्पर्यकमिति चेदाह—अनाशौचिद्वारेति । 'वैतानोपासनाः कार्याः' ( या. स्मृ. ३।१७ ) त्रेताग्निसाध्या अग्निहोत्रदर्शपूर्णमासादयस्तथा गृह्याग्निसाध्याः सायंप्रातर्होमाश्चेति वैदिक्यः क्रियाः कार्याः । ( आशौचसत्त्वेऽपीति शेषः ) । इत्येवं यद्यपि सामान्येनोक्तं तथाऽप्यन्येन ( प्रतिनिध्यादिना ) कारयितव्यम् । कुतः । 'अन्य एतानि कुर्युः' इति पैठीनसिस्मरणादिति मिताक्षरायां विज्ञानेश्वराचार्यैः प्रतिपादितम् । तथा च कार्या इत्यस्य 'कारयितव्याः' इत्यर्थकल्पने प्रमाणभूतं पैठीनसिवाक्यं दृश्यते । तद्वत्प्रकृतेऽप्यन्येन कारयितव्य( अनाशौचिद्वारा कर्तव्य )मित्यर्थकल्पने प्रमाणं नोपलभ्यत इत्यर्थः ।

◡ अत एवेति । 'वैतानोपासनाः कार्याः' इत्येवं प्रतिपादितस्य शुद्धिविधानस्यानाशौचिद्वारा कर्तृत्वपरत्वकल्पनस्येव 'ऋत्विजां दीक्षितानां च' (या० स्मृ ३ २८) इत्येवं प्रतिपादितस्य सद्यःशौचविधानस्यानाशौचिद्वारा कर्तृत्वप्रतिपादकत्वस्य कल्पने प्रमाणाभावादेवेत्यर्थः ।

पासना इत्यनेनैव* दीक्षितकर्मण्यप्यधिकारे सिद्धेऽपि वचना= न्तरबलेन त⊙स्य स्वत्वत्यागातिरिक्ते हेतु+कर्तृत्वपरत्वात्तत्रापि त=था प्राप्तौ ⊙याजमानमात्रे स्वयंकर्तृकत्वसिद्धिर्दीक्षितग्रहणप्रयोजन-

---

* अनेनैवेति । दीक्षितकर्मणस्त्रेताग्निसाध्यत्वादिति भावः ।

+ दीक्षितकर्मणीति । गृहीतदीक्षैकनिष्पाद्ये कर्मणीत्यर्थः ।

× अधिकार इति । स्वयंकर्मकर्तृत्वयोग्यत्वलक्षणोऽधिकार इत्यर्थः ।

= वचनान्तरबलेनेति । 'अन्य एतानि कुर्युः' इति पारस्करगृह्यवचनप्रामाण्येनेत्यर्थः ।

⊙ तस्येति । स्वयंकर्मकर्तृत्वस्येत्यर्थः ।

स्वत्वत्यागातिरिक्त इति । 'इदं हवनीयद्रव्यं या या यक्ष्यमाणा देवतास्ताभ्यस्ताभ्यः परित्यक्तं न मम' इत्येवंलक्षणं स्वद्रव्यत्यागात्मकं यत्प्रधानं कर्म तद्व्यतिरिक्ते तदङ्गभूते कर्मणीत्यर्थः । त्यागस्त्वनन्यनिष्पाद्यत्वात्स्वयंकर्तृक एवेति बोध्यम् ।

+ हेतुकर्तृत्वेति । प्रयोजककर्तृत्वपरत्वादित्यर्थः । साक्षात्कर्तृत्वं तु प्रतिनिहितस्यैव नतु प्रतिनिधातुरिति यावत् । यथा सैनिकानां जये राज्ञः प्रेरकतया प्रयोजककर्तृत्वम् । साक्षाज्जयकर्तृत्वं तु सैनिकानामेव तद्वत् । तथा चानन्यनिष्पाद्यस्वद्रव्यत्यागात्मकप्रधानकर्मणोऽतिरिक्ते कर्मण्याशौचवतो दीक्षितस्य प्रवर्तकतया राजवत्प्रयोजककर्तृत्वं ग्राह्यं भवति । 'अन्य एतानि कुर्युः' इति वचनान्तरबलादिति तात्पर्यम् ।

× तत्रापीति । दीक्षितैकनिष्पाद्ये कर्मण्यपीत्यर्थः । अपिशब्दात्स्वद्रव्यत्यागात्मकप्रधानकर्मातिरिक्तस्याध्वर्य्वादिसाध्यस्य कर्मणो ग्रहणम् ।

= तथा प्राप्ताविति । दीक्षितस्य प्रवर्तकतया प्रयोजककर्तृत्वप्राप्तौ सत्यामित्यर्थः ।

⊙ याजमानमात्र इति । मात्रशब्दः कार्त्स्न्ये । 'मात्रं कार्त्स्न्येऽवधारणे' इति कोशात् । यजमानसाध्यं कर्म याजमानम् । सर्वं याजमानं याजमानमात्रमिति विग्रहः । मयूरव्यंसकादिसमासः । सर्वे घटा घटमात्रमितिवत् । यजमानसाध्यं कर्म च द्विविधम् । ( अध्वर्युत्वाद्यभावसमानाधिकरणयजमानत्वावच्छिन्ननिष्ठोद्देश्यतानिरूपितविधेयताविशिष्टम् ) । यजमानमुद्दिश्य तत्कर्तव्यतया विहितमेकम् । तादृशं च यजमानकर्म दर्शपूर्णमासादौ प्रसिद्धम् । द्वितीयं तु ( अध्वर्युत्वादिसमानाधिकरणयजमानत्वावच्छिन्ननिष्ठकर्तृतानिरूपितकर्तव्यताविशिष्टम् ), यजमानेनानुष्ठेयं यज-

मुक्तं मिताक्षरायाम् । इ*ममेव च विशेषं द्योतयितुं दीक्षितग्रहणं कृतं मूले । नतु तदेव विवक्षितम् । अग्नि+मन्मात्रस्य तत्सा×ध्यानन्यगतिक-नित्य=नैमित्तिककर्मस्वधिकारस्य स्मृतिषु प्रतिपादितत्वात् । तथा च याज्ञवल्क्यः—वै+तानौपासनाः कार्याः क्रियाश्च श्रुतिचोदनादिति ।

---

मानकर्तृकमाध्वर्यवादिकमपीत्यर्थः । तादृशं च यजमानकर्म सत्रेषु प्रसिद्धम् । तदेतद्द्विविधं यजमानकर्मात्र याजमानशब्देन विवक्षितम् । यजमानकर्तृकत्वविशिष्ट आध्वर्यवादौ सर्वस्मिन्कर्मणीत्यर्थः । 'ये यजमानास्त ऋत्विजः' इति वचनबला-दध्वर्य्वादिसाध्यमपि कर्म द्वादशाहादिसत्रेषु यजमाननिष्पाद्यं भवति तादृशे सर्वस्मि-न्यजमानकर्मणि न केवलं यजमानमुद्दिश्य तत्कर्तव्यतया विहिते कर्मणीति यावत् ।

॰स्वयंकर्तृत्वसिद्धिरिति । पूर्वोक्तं द्विविधमपि यजमानकर्माऽऽशौचसद्भावेऽपि दीक्षितेन स्वयमेव कर्तव्यं न तु प्रतिनिधिनाऽनाशौचिना करणीयमित्ययमर्थः पुन-र्दीक्षितग्रहणात्सिध्यतीति दीक्षितग्रहणस्य प्रयोजनं प्रतिपादितमित्यर्थः ।

* इममेव च विशेषमिति । आशौचसद्भावेऽपि पूर्वोक्तद्विविधयजमानकर्मणि दीक्षितस्य स्वयंकर्तृत्वसिद्धिरूपं विशेषमित्यर्थः ।

+ अग्निमन्मात्रस्येति । श्रौताग्निमतः स्मार्ताग्निमतश्चेत्यर्थः ।

× तत्साध्येति । श्रौतस्मार्ताग्निसाध्येत्यर्थः ।

= नित्यनैमित्तिककर्मस्विति । नित्यनैमित्तिककाम्यभेदेन कर्मणस्त्रैविध्यं धर्मशास्त्रे प्रसिद्धम् । तत्र नित्यकर्मत्वं नाम—तदनुष्ठाने चित्तशुद्ध्यतिरिक्तफलविशेषाजनकत्वे सति तदननुष्ठाने प्रत्यवायसाधकत्वम् । यथा 'यावज्जीवमग्निहोत्रं जुहुयात्' 'अहरहः संध्यामुपासीत' इत्यादौ । नैमित्तिककर्मत्वं च—निमित्तसंयोगेन विहितत्वमिति व्युत्पत्त्या तदनुष्ठाने फलविशेषजनकत्वे सति तदननुष्ठाने प्रत्यवा-यजनकत्वम् । यथा—'यस्याऽऽहिताग्नेरग्निर्गृहान्दहेत्सोऽग्नये क्षामवते पुरोडाश-मष्टाकपालं निर्वपेत्' 'राहूपरागे स्नायात्' इत्यादौ । काम्यकर्मत्वं तु—तदनुष्ठाने फलविशेषजनकत्वे सति तदननुष्ठाने प्रत्यवायाजनकत्वम् । यथा—'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' 'उद्भिदा यजेत पशुकामः' इत्यादौ । अत्र काम्यकर्म-स्वरूपनिर्वचनं प्रासङ्गिकं बोध्यम् ।

+ वैतानौपासना इति । 'वैतानौपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्' (या. स्मृ. ३।१७) इति मिताक्षराकृद्विज्ञानेश्वराचार्याङ्गीकृतः पाठः । अस्यार्थः—वितानोऽग्नीनां विस्तारोऽग्नित्रयमित्यर्थः । तत्र भवा वैतानाः । त्रेताग्निसाध्या अग्निहोत्रदर्शपूर्णमासाद्याः क्रियाः । प्रतिदिनमुपास्यत इत्युपासनो गृह्याग्निः । तत्र

भवा औपासनाः सायंप्रातर्होमक्रियाः । ता वैतानौपासना वैदिक्यः क्रियाः कार्याः। कथं वैदिकत्वमिति चेच्छ्रुतिचोदनात् । तथा हि—'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिश्रुतिभिरग्निहोत्रादीनां चोदना स्पष्टैव । तथा 'अहरहः स्वाहा कुर्याद-न्नाभावे केनचिदाकाष्ठात्' इति श्रुत्यौपासनहोमोऽपि चोद्यते । अत्र श्रुतिचोदना-दिति श्रौतत्वविशेषणोपादानात्स्मार्तक्रियाणां दानादीनामननुष्ठानं गम्यते । अत एव वैयाघ्रपादेनोक्तम्—'स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके । श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्' इति । राहोः सूतकादन्यत्र सूतके स्मृत्युक्तस्य कर्मणः ( स्मृत्युक्तं कर्म च गृह्याग्निसाध्यं त्रेताग्निसाध्यं वाऽस्तु ) परि-त्यागो भवति । श्रोते श्रुतिविहिते कर्मणि तु ( त्रेताग्निसाध्यं गृह्याग्निसाध्यं च कर्म श्रुतिचोदितं चेत् ) तत्कालं स्नातः संस्ताद्दशकर्मानुष्ठानार्थं शुद्धो भवतीति तदर्थः। पञ्चमहायज्ञादीनां निवृत्तिरेवाऽऽशौचे । तदाह संवर्तः—'पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः' इति । तथा स्मृतिविहितत्वेऽपि पिण्डपितृयज्ञश्रवणाकर्मा-श्वयुज्यादिकश्च नित्यो होमः कार्य एव । 'सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् । पिण्डयज्ञं चरुहोममसगोत्रेण कारयेत्' ॥ इति जातूकर्ण्यस्मरणात् । यत्पुनः 'दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते' इति होमप्रतिषेधः श्रूयते, स काम्यहोमाभिप्रायो वेदितव्यः । तथा सूतकान्नभोजनमपि न कार्यम् । 'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते' इति यमस्मरणात् । सकुल्यानां पुनर्न दोषः । 'सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत्' इत्युक्तत्वात् । अयं च निषेधो दातृभो-क्त्रोरन्यतरेण जनने मरणे वा ज्ञाते सति वेदितव्यः । 'उभाभ्यामपरिज्ञाने सूतकं नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत् ।' इति षट्त्रिंशन्मतात् । तथा विवाहादिषु सूतकोत्पत्तेः प्राग् ब्राह्मणार्थं पृथक्कृतमन्नं भोक्तव्यमेव । 'विवा-होत्सवयज्ञेषु त्वन्तरा मृतसूतके । पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तितः' । इति बृहस्पतिमतात् । तथाऽपरोऽपि विशेषः षट्त्रिंशन्मते प्रदर्शितः—'विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः' । भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके । अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः' । इति । विवाहाद्युत्सवेषु प्रक्रान्तेषु मध्य एव यदा कदाचित्सूतकं पतति चेत्तदा परैरनाशौ-चिभिरन्नं परिवेषितव्यं द्विजैश्च भोक्तव्यं न तत्र काचिदपि दोषशङ्का करणीयेति तदर्थः । 'वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदिताः' इत्यपरार्कधृतपाठः । अस्यार्थं स एव व्याचख्यौ । वितानस्त्रेता गार्हपत्याद्यग्नित्रयम् । 'अग्नित्रयमिदं त्रेता' इत्यमरकोशात् । तत्संबन्धिन्यो वैतान्यः । ताश्च ता उपासनाश्च वैता-

पैठीनसिरपि--नि*त्यानि विनिवर्तेरन्वैतानवर्जं शालाग्नौ चैक इति ।

नोपासना: । पुंवद्भावाद्वैतानशब्दे स्त्रीप्रत्ययलोपः । उपासनाश्च 'उपास्य पश्चिमां संध्यां हुत्वाऽग्नींस्तानुपास्य च' इति स्मृतिविहिताः। उपासना इति बहुवचनं व्यक्त्यभिप्रायम् । क्रियाश्च श्रुतिचोदिताः, क्रिया कर्माण्यग्निहोत्रादीनि । चकारो वैतानिकत्वविशेषणानुकर्षणार्थः । तेनात्र वैतान्य एव क्रिया विवक्षिताः । तासामेव विशेषणार्थं श्रुतिचोदिता इत्युक्तम् । संभवे व्यभिचारे च विशेषणमर्थवत् । न चोक्तानां क्रियाणां श्रुतिचोदितत्वं व्यभिचरतीति विशेषणदोषपरिहाराय श्रुतिपदार्थविशेषणाय प्रत्यक्षत्वमध्याह्रियते । तेनैतत्सिद्धम्— या वैतानान्युपासनाः, याश्च प्रत्यक्षश्रुतिविहिता वैतान्यः क्रियास्ता आशौचेऽपि कार्याः । ब्रह्मयज्ञाद्या आशौचे हेया एव । न हि ता वैतान्यः । तथा वैतान्योऽपि या न प्रत्यक्षश्रुतिविहितास्ता अप्याशौचे हेया एवेति पूर्वेणान्वयः । यथा—'एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विजः' इत्यादिस्मृतिविहिताः । अत्र केचिद्व्याचक्षते—विताने वेदे भवा वैतानाः । तथा— उपासने गृह्ये भवा औपासनाः । वैतानाश्चौपासनाश्च वैतानौपासनाः क्रिया इति । तदेतद्व्याख्यानमनुपपन्नम् । वैतान्यौपासन्य इति हि तदा शब्दः स्यान्न पुनर्वैतानौपासना इति । पूर्वव्याख्यायां तु कर्मधारयोऽयं समासः । तत्र पुंवद्भावविधानेन वैतानोपासना इति शब्दसाधुतासिद्धिः । तथोपासनाशब्दो नाण्प्रत्ययान्तः । येन स्त्रियां ङीबन्तः स्यात् । यच्च तैः श्रुतिचोदनादिति पाठं कृत्वा हेतुपरत्वेन व्याख्यातं तदपि न युक्तम् । एवं हि ते मन्यन्ते, यस्माच्छ्रुत्या 'यावज्जीवमग्निहोत्रं जुहुयात्' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यादिकयाऽवश्यकर्तव्यतया विहितत्वान्न स्मृत्या शक्यमाशौचेऽपि तन्निवर्तनं विधातुमिति । तदनैकान्तिकम् । श्रुतिविहितमप्यावश्यकमग्निहोत्रादिकं स्मृत्या पातित्यदशायां निवर्तत एव । तस्माद्धेतुत्वेन श्रुतिविहितत्वस्य व्याख्यानमयुक्तम् । वैतानशब्दश्च वेदविहितत्वेनादृष्टप्रयोगत्वान्न तत्परत्वेन व्याख्येयः । तस्मात्पूर्वैव व्याख्या श्रेयसीति ।

* नित्यानीति । 'वैतानौपासनाः' इति वचनेन श्रुतिचोदितानां कर्मणां यत्कार्यत्वाभिधानं तदावश्यकाभिप्रायेण यदनुष्ठाने फलविशेषो भवत्वथवा मा वा भवतु परंतु तदननुष्ठाने प्रत्यवाय आपतति तदावश्यकमित्युच्यते । तादृशं कर्म नित्यं निमित्तिकं च । तयोर्द्वयोरप्यननुष्ठाने प्रत्यवायापादकत्वात् । काम्यस्य त्वननुष्ठाने न प्रत्यवायापादकत्वम् । इति मनसि निधायाऽऽह—नित्यानि विनिवर्तेरन्नित्यनेनाविशेषेणाऽऽवश्यकानां नित्यनैमित्तिकानां निवृत्तौ प्रसक्तायां वैतानवर्जमित्यग्नित्रयसाध्यावश्यकानां पर्युदासः कृतः । शालाग्नौ चैक इति गृह्याग्नौ भवानामप्यावश्यकानां पाक्षिकः पर्युदास उक्तः । अतस्तेष्वप्याशौचं नास्त्येव ।

* तत्रापि त्यागात्मके प्रधान एव स्वयं कर्तृत्वं तद्विषयमेव च श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयादिति स्नानविधानम् । +अत्र च श्रौतपदेनौपासनमपि गृह्यते । तस्यापि याज्ञवल्क्येन ×श्रुतिचोदितत्वाभिधानात् । =त्यागातिरिक्ते त्वनाशौ+चिप्रयुक्तया कर्तृत्वम् । अन्य एतानि कुर्युरिति पैठीनसिवाक्यात्—अत्र वैता⊙नान्यपि प्रकृतानीति

---

काम्यानां पुनः शौचाभावादननुष्ठानमिति तस्यार्थः ।

*यद्यपि श्रौतस्मार्ताग्निसाध्येषु नित्यनैमित्तिककर्मस्वाशौचाभावः प्रतिपादितस्तथाऽपि तादृशकर्मस्वपि नाग्निमतः स्वयंकर्तृत्वं किंतु प्रतिनिधिद्वारा कर्तृत्वम् । 'अन्य एतानि कुर्युः' इति पैठीनसिवचनात् । स्वयंकर्तृत्वं त्वनन्यसाध्ये स्वत्वत्यागात्मके प्रधानकर्मण्येवेति श्रौते कर्मणि स्नानेन शुद्धिप्रतिपादनमपि प्रधानत्यागमनुलक्ष्यैव प्रवृत्तमित्यभिप्रायेणाऽऽह— तत्रापीत्यादि । स्नानविधानमित्यन्तम् ।

+ अत्र चेति । 'श्रौते कर्मणि तत्कालम्' इत्यत्र चेत्यर्थः ।

× श्रुतिचोदितत्वेति । 'अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठात्' इति श्रुत्यौपासनस्य चोदितत्वमित्यर्थः ।

= त्यागातिरिक्त इति । द्रव्यत्यागरूपात्प्रधानकर्मणोऽतिरिक्ते तदङ्गभूते कर्मणीत्यर्थः ।

+ अनाशौचीति । आशौचाभाववतस्तदनुष्ठानसमर्थस्य कस्यचिन्नियोजनेन तद्द्वारा कर्तृत्वं बोध्यं न तु स्वयंकर्तृत्वमित्यर्थः ।

⊙ 'नित्यानि विनिवर्तेरन्वैतानवर्जं शालाग्नौ चैके, अन्य एतानि कुर्युः' इति पैठीनसिवचनक्रमः । तत्रैतानीत्येतच्छब्देन संनिहितत्वाद्गार्ह्याण्येव परामृश्येरन्न तु वैतानानीत्याशङ्कामपाकर्तुमाह–वैतानान्यपि प्रकृतानीति । तत्र प्रमाणमुपढौकति—मिताक्षरात इति । ( याज्ञ. अ. ३ श्लो. १७ ) याज्ञवल्क्यस्मृतीयतृतीयप्रायश्चित्ताध्यायस्थसप्तदशश्लोकव्याख्यानावसर इत्थं हि तदीयो ग्रन्थः—'यद्यपि 'वैतानौपसनाः कार्याः' इति सामान्येनोक्तं तथाऽप्यन्येन कारयितव्यम् । 'अन्य एतानि कुर्युः' इति पैठीनसिस्मरणात्' इति । तथा चोपक्रमोपसंहाराभ्यां मिताक्षराकारैर्विज्ञानेश्वराचार्यैरेतच्छब्देन वैतानान्यौपासनानि चेत्युभयान्यपि परामृष्टानीति स्पष्टमेव प्रतीयते तदाह–अवगम्यत इति । एवं च साङ्गे कर्मण्यन्यकर्तृकत्वेऽपि स्वद्रव्यत्यागात्मकं प्रधानं स्वयं कुर्यात् । तस्यानन्यनिष्पाद्यत्वात् । अत एव 'श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्' इत्युक्तमिति मिताक्षरातो ज्ञायत इत्यर्थः ।

तदपरे न क्षमन्ते । 'कर्म वैतानिकं कार्यं स्नानोपस्पर्शनात्तदम्' इति वचनेन

मिताक्षरातोऽवगम्यते । *बृहस्पतिनाऽपि सामान्येनैवोक्तम्—

सूतके मृतके चैव अशक्तौ श्राद्धभोजने ।
प्रवासादिनिमित्तेषु +हावयेन्नतु हापयेत् ॥ इति ।

दीक्षि×तस्य तु 'ऋ=त्विजां दीक्षितानां चेति' दीक्षितग्रहणबलाद्या◡-

---

स्वस्यैव (आशौचिन एव) साङ्गे कर्मण्यधिकाराभिधानात् । नचैतदपि 'श्रौते कर्मणि' इतिवत्त्यागात्मकप्रधानाभिप्रायेणैवेति वाच्यम् । अनन्यनिष्पाद्यस्य त्यागस्य न्यायबलेनैव स्वयंकर्तव्यत्वावगमात्कर्म वैतानिकं कार्यमिति वचनारम्भोऽपार्थकः स्यात् । स्वत्वत्यागस्य श्रौतस्मार्तसाधारणत्वाविशेषात् 'कर्म वैतानिकम्' इति विशेषोपादानं चानर्थकं स्यात् । किंच 'अग्निहोत्रस्य होमार्थं शुद्धिस्तात्कालिकी भवेत्' इत्यनेनाग्निहोत्रहोमार्थं शुद्धिरभिधीयते । होमश्च स्वत्वत्यागपूर्वको द्रव्यप्रक्षेपान्तो व्यापारः । ततश्च त्यागमात्रस्य स्वकर्तृकत्वे परिगृहीते सत्यन्यकर्तृके प्रक्षेपे स्वस्य शुद्ध्यभिधानं नोपपद्येत । तस्मात्साङ्गे वैतानिके होमे स्वस्याधिकार इति प्राहुः ।

* वैतानानीवौपासनान्यप्यशुचिदशायामन्येन करणीयानीत्यत्र बृहस्पतिसंमतिं प्रदर्शयन्नाऽऽह—बृहस्पतिनाऽपीत्यादि । सामान्येनैव । वैतानिकत्वौपासनत्वकृतविशेषस्वरूपमनुल्लिख्य तदुभयसंग्राहकाग्निहोमत्वरूपसामान्यधर्मपुरस्कारेणैवेत्यर्थः ।

+ हावयेदिति । हुधातोर्हेतुमण्णिजन्तस्येदं विधौ लिङि रूपम् । सूतकमृतकादिष्वनाशौचिना स्वान्येन होमं कुर्यान्नतु स्वयमिति तदर्थः । तथा चाऽऽशौचे सति होमो आशौचिनो न स्वयंकर्तृत्वं किंतु हेतुकर्तृत्वमिति सूचितम । नतु हापयेत्—अग्निहोमानाशौचे सर्वथा न परित्यजेन्नोच्छिन्द्यादित्यर्थः । अशुचित्वात्स्वतोऽकरणवत्स्वान्यशुचिद्वाराऽप्यकरणेन होमं न लोपयेदिति यावत् ।

× दीक्षितस्येति । दीक्षा संजाता यस्य तस्य गृहीतदीक्षस्य यजमानस्येत्यर्थः । यागफलभोक्तुरिति यावत् ।

= ऋत्विजामिति । यागनिष्पादकत्वमृत्विक्त्वम् । तच्च यजमानत्वाभावसमानाधिकरणमिति यागफलाभोक्तृणामध्वर्य्वादीनामित्यर्थः । सत्रेषु तु 'सर्वे यजमानाः सत्रिणः' 'ये यजमानास्त ऋत्विजः' इति वचनात्फलभोक्तृत्वसमानाधिकरणयागनिष्पादकत्वं तदित्यन्यत् ।

◡ याजमानमात्र इति । यजमानत्वावच्छिन्नकर्तृकेऽध्वर्य्वादिसाध्येऽपि कर्मणीत्यर्थः । प्रतिपादितं चैतत्सविस्तरं (१४४) पृष्ठे टिप्पण्यामिति तत्रैव द्रष्टव्यम् ।

जमानमात्रेऽधिकारः। *अन्यथा तदा×नर्थक्यापत्तेः। +स्नानस्य श्रौते कर्मणीत्यनेनैव सिद्धत्वात्। एवं= च—

सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत्।
पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत्॥

इति जातूकर्ण्यवचनेऽपि स्मार्तग्रहणमुप⊙लक्षणम्। वैतानोपासना इत्यनेन सामान्यतोऽधिकारेऽवगतेऽस्य विशेष❀मात्रप्रतिपादकत्वात्। तस्मा✵द्वैतानिकेऽपि त्याग=मात्रे स्वयंकर्तृत्वमन्यत्र त्वन्यस्यैव स्मार्तव-

---

* अन्यथेति। अध्वर्युत्वाद्यन्यतमत्वाभावसमानाधिकरणयजमानत्वावच्छिन्ननिष्ठोद्देश्यतानिरूपितविधेयताविशिष्टे कर्मण्येवाधिकाराङ्गीकारे। यजमानोद्देश्यक एव कर्मण्यधिकारस्वीकार इति यावत्।

× तदानर्थक्यापत्तेरिति। दीक्षितग्रहणनैष्फल्यापातादित्यर्थः। 'ऋत्विजां दीक्षितानां च' इति याज्ञवल्क्यवचसीत्यस्याऽऽदिः।

+ ननु 'वैतानौपासनाः' इत्यनेनाशुचव्यवस्थायामपि श्रौतकर्मण्यधिकारे सिद्धेऽपि यत्पुनः 'ऋत्विजां दीक्षितानां च' इति वचने दीक्षतग्रहणं करोति तस्यायमाशयो यच्छ्रौते कर्मणि सद्यःस्नानेन शुध्यतीत्येवमर्थं पुनर्दीक्षितग्रहणं किं न स्यादिति तत्राऽऽह—स्नानस्य श्रौते कर्मणीति। श्रौते कर्मणि तत्काळं स्नातः शुद्धिमवाप्नुयात्' इति वचनेनेत्यर्थः।

= एवं चेति। पुनर्दीक्षितग्रहणेन यजमानकर्तृके कर्मण्यधिकारसिद्धौ च। 'वैतानौपासनाः कार्याः' इत्यनेन श्रौते कर्मणि सामान्यतोऽधिकारेऽवगते दीक्षितग्रहणस्य यजमानकर्तृककर्माधिकाररूपविशेषार्थप्रतिपादकत्वसिद्धौ चेति यावत्।

⊙ उपलक्षणमिति। उपलक्ष्यते ज्ञातयेऽनेनेत्युपलक्षणम्। उप स्वसमीपस्थस्य स्वसंबन्धिनश्च लक्षणं ज्ञानं यस्मादिति वा विग्रहः। स्वस्य स्वान्यस्य चाजहत्स्वार्थया लक्षणया बोधकम्। यथा काकेभ्यो दधि रक्ष्यतामिति। स्मार्तग्रहणं श्रौतकर्मणोऽपि ज्ञापकमित्यर्थः।

❀ विशेषमात्रेति। 'वैतानौपासनाः कार्याः' इत्यनेन त्रेताग्निसाध्ये गृह्याग्निसाध्ये च कर्मणि सामान्यतोऽधिकारेऽवगतेऽस्य जातूकर्ण्यवचनस्य 'असगोत्रेण कारयेत्' इत्येवंरूपविशेषार्थप्रतिपादनपरत्वादित्यर्थः। तथा च पिण्डपितृयज्ञश्रवणाकर्माश्वयुज्यादिकश्च नित्यो होम आशौचेऽप्यन्यद्वारा करणीय एवेति भावः।

✵ तस्मादिति। जातूकर्ण्यवचने स्मार्तग्रहणस्याजहल्लक्षणया वैतानिककर्मोपलक्षकत्वादित्यर्थः।

= वैतानिकेऽपीति। वितानमग्नीनां विस्तारः। त्रेताग्निरित्यर्थः। तत्र भवे कर्मणि।

दिति विज्ञानेश्वरः । *कल्पे तु कल्पसूत्रभाष्यकारादयो निबन्धारः +सर्वजनीनश्रौतस्मार्तविभागवन्नाऽयथा×श्रुतसमस्तवचनानुसारेण वैतानिके सर्वत्रापि स्वयंकर्तृत्वं वदन्ति ।

---

अपिशब्दादौपासनाग्निभवस्य कर्मणो ग्रहणम् ।

= त्यागमात्र इति । मात्रशब्दोऽवधारणे । त्याग एवेत्यर्थः । वैतानिक औपासने चेत्युभयत्रापि स्वस्वत्यागात्मके प्रधानकर्मण्येव स्वयंकर्तृत्वम् । स्वस्वत्यागस्यानन्यनिष्पाद्यत्वात् । स्वद्रव्यत्यागातिरिक्ते तदङ्गभूते हविर्द्रव्यप्रक्षेपादिव्यापारात्मके कर्मणि यजमानातिरिक्तस्यानाशौचिनः प्रतिनिधेः कर्तृत्वम् । यथा स्मार्ते पिण्डपितृयज्ञादौ स्मार्ताग्निमतो यजमानस्याशुचित्वे स्वद्रव्यत्यागात्मकं प्रधानं कर्माशुचिनैव यजमानेन क्रियते तदन्यत्त्वन्येनेति तद्वदित्यर्थः । एतच्च मिताक्षराकारविज्ञानेश्वराचार्यमतेन । स्पष्टं चैतत् 'वैतानौपासनाः कार्याः' ( याज्ञ. ३ । १७) इतिवचनव्याख्यानावसरे मिताक्षरायामिति तत्रैव द्रष्टव्यम् ।

* त्रेताग्निसाध्यत्वे सति श्रुतिचोदितत्वं श्रौतत्वं, औपासनाग्निसाध्यत्वे सति श्रुतिचोदितत्वं च स्मार्तत्वमित्यभिमन्यमानानां विज्ञानेश्वराचार्याणां मतेन निरुक्तलक्षणलक्षिते श्रौते स्मार्ते च कर्मण्याशौचे सत्यपि स्वद्रव्यत्यागमात्रं प्रधानं स्वयं कार्यम् । तदन्यत्तु तदङ्गमन्यद्वारा करणीयमित्युपपाद्येदानीं त्रेताग्निसाध्यत्वं श्रौतत्वं गृह्याग्निसाध्यत्वं च स्मार्तत्वमित्येव श्रौतस्मार्तत्वलक्षणं न तु श्रुतिचोदितत्वविशेषणविशिष्टमित्यवगच्छतां कल्पसूत्रभाष्यकारादीनां निबन्धप्रणेतॄणां मतं स्वस्वत्यागात्मकं प्रधानं तदङ्गभूतहविर्द्रव्यप्रक्षेपरूपहोमात्मकं चाप्रधानमित्येतत्सर्वं वैतानिकं कर्माऽऽशौचसद्भावेऽपि स्वयमेवानुष्ठेयं स्मार्ते तु कर्म त्यागमात्रात्मकमेव स्वयमनुष्ठेयं तदन्यत्त्वन्यगोत्रजैरित्येवमात्मकमुपपादयितुमाह—कल्पे त्विति ।

+ सर्वजनीनेत्यादि । श्रौताग्निसाध्यत्वं श्रौतत्वं स्मार्ताग्निसाध्यत्वं च स्मार्तत्वमित्येवमात्मकस्य सकलयाज्ञिकसंमतस्य श्रौतस्मार्तकर्मविभागस्यानुरोधादित्यर्थः ।

× यथाश्रुतेति । यस्मिन्वचने श्रौतकर्मबोधकः स्मार्तकर्मबोधको वा यः शब्दः श्रुतस्तदनुसारेण श्रौतकर्मणि स्मार्तकर्मणि वा यथायथं स्वयंकर्तृत्वमन्यकर्तृत्वं वा वर्णयन्ति । न तु स्मार्तग्रहणं वैतानिकोपलक्षणं वैतानिकग्रहणं वा स्मार्तोपलक्षणं मन्वते । तथा च वैतानिके कर्मणि प्रधानाप्रधानलक्षणं त्यागहोमात्मकं कर्माऽऽशौचसद्भावेऽपि स्वयमेव कर्तव्यम् । स्मार्ते तु प्रधानं त्यागमात्रं स्वयं करणीयमन्यद्धोमादिकं त्वन्यद्वारा करणीयम् । तदेतत्प्रदर्शयन्नाह—'कर्म' वैतानिकमित्यादिना शालाग्नौ केवलो होम इत्यन्तेन ।

कर्म वैतानिकं कार्यं स्नानोपस्पर्शनात्स्वयम् ।
जन्महान्योर्वितानस्य कर्मत्यागो न विद्यते ॥
' शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः ' ॥

इत्यादीनि च हारीतजाबालादिवचनानि स्पष्टार्थानि लिखन्ति । छन्दोगपरिशिष्टेऽन्योऽपि विशेषः—

होमः श्रौते तु कर्तव्यः शुष्कान्नेन फलेन वा ।
अकृतं हावयेत्स्मार्ते तदभावे कृताकृतम् ॥
कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥ इति ।

एवं चाग्निसाध्यनित्यनैमित्तिककर्मव्यतिरिक्तकर्मस्वनधिकारस्य शौचाभावादेव सिद्धत्वात्प्रति*प्रसवाभावाच्च पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोरित्यादिवचनकदम्बकमनुवाद+एव । संध्यावन्दनं त्वनग्निसाध्यत्वेऽपि

' संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वाऽपि त्यजन्गच्छेदधो द्विजः ॥ '

इति पुलस्त्यवचनात्कार्यमेव । तच्च—

' सूतके मृतके चैव संध्याकर्मसमाचरेत् ।
मनसोच्चारयेन्मन्त्रान्प्राणायाममृते द्विजः ' ॥ इति ।

तदु×क्तप्रकारेणैव कार्यम् । प्राणायाममृत इति न मानसत्वे पर्युदासः । मुखनासिकासंचारिवायुनिरोधेन =तन्मन्त्रे तस्य सिद्धत्वात् ।

---

* प्रतिप्रसवाभावादिति । निषेधपूर्वको हि विधिः प्रतिप्रसव इत्युच्यते । निषेधस्य निषेध इत्यर्थः । यदा ब्राह्मणमधिकारिणमुद्दिश्य श्रौतस्मार्तक्रियाकलापो विहितः । तस्य च ' आशौचे कर्मणां त्यागः संध्यादीनां विधीयते ' इत्यशुचिदशायां निषेधः कृतः । ' वैतानोपासनाः कार्याः ' इत्यनेन पुनर्विधानादयं प्रतिप्रसवविधिर्भवति । तादृशप्रतिप्रसवविधेरदर्शनादित्यर्थः ।

+ अनुवाद इति । उक्तस्यैवार्थस्य स्पष्टप्रतिपत्त्यर्थं पुनः कथनमनुवाद इत्यर्थः ।

× तदुक्तप्रकारेणेति । पुलस्त्योक्तरीत्येत्यर्थः ।

= तन्मन्त्रे तस्य सिद्धत्वादिति । अयं भावः—प्राणः प्राणवायुरायम्यते संयम्यते येन व्यापारेण स प्राणवायोर्निरोधसाधनीभूतो व्यापारः प्राणायामशब्दार्थः । बहिःस्थितप्राणवायोरन्तःकर्षणरूपपूरणेन, देहस्थस्य तस्य कुम्भवन्निश्चलतया रोधेन,

किंतु मन्त्रेष्वेव । तथा चामन्त्रकः प्राणायामः कार्य इत्युक्तं भवति । अत्र च यद्यपि प्राणायामव्यतिरिक्तं सर्वं मानसमन्त्रैः कर्तव्यमित्युक्तं तथाऽर्घ्यदाने मन्त्रोच्चारस्तदुत्तरकर्मलोपश्च द्रष्टव्यः । 'सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यात्' इति पैठीनसिस्मरणात् । *सावित्र्याः प्राप्तत्वात्पुलस्त्योक्तमानसत्वनिवृत्त्यर्थमेवात्र +सावित्रीग्रहणम् । भरद्वाजेनायमेवार्थः स्पष्टीकृतः—

सूतके मृतके कुर्यात्प्राणायाममन्त्रकम् ।
तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ॥
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।
मार्जनं तु न वा कार्यमुपस्थानं न चैव हि ॥ इति ।

'सूतके कर्मणां त्यागः संध्यादीनां विधीयते' इति तु समन्त्रोच्चारसंपूर्णसंध्याभिप्रायम् । वैश्वदेवस्य त्वग्निसाध्यत्वेन 'प्रत्यूहे×न्नाग्निषु

---

विरुद्धस्य तस्य क्रमेण बहिर्निःसारणरूपरेचनेन च प्राणवायोर्यथेष्टविनियोगरूपवश्यतासंपादनमित्यसौ व्यापारसमुदायः प्राणायाम इति यावत् । तथा च प्राणायामस्य मुखनासिकासंचारिवायुनिरोधनरूपत्वेन तदवस्थायां स्पष्टोच्चारणस्य कर्तुमशक्यत्वेन प्राणायामाङ्गभूते गायत्र्यादिमन्त्रे मनसोच्चारणरूपस्य मानसत्वस्यानायत्यैव सिद्धत्वान्न 'प्राणायाममृते' इति पर्युदासस्तमन्त्रे मानसत्वं विधातुमुत्सहते । किंतु मानसिकं वाचिकं चेति द्विविधमप्युच्चारणं निषेधति । तदाह—अमन्त्रकः प्राणायामः कार्य इत्युक्तं भवतीति ।

* संध्योपासनेऽर्घ्यदानस्य सावित्र्या चार्घ्यदानमिति सावित्रीमन्त्रेणैव विहितत्वादञ्जलिप्रक्षेपे सावित्र्याः प्राप्तत्वेनाञ्जलिं प्रक्षिप्येत्येतावतैवाञ्जलिप्रक्षेपस्य सावित्रीपूर्वकत्वे सिद्धे पैठीनसिस्मृतौ 'सावित्र्या चाञ्जलिं प्रक्षिप्य' इति यत्पुनरञ्जलिप्रक्षेपे करणत्वेन सावित्रीग्रहणं क्रियते तस्य ह्येतदेव प्रयोजनं 'मनसोच्चारयेन्मन्त्रान्' इति पुलस्त्योक्तरीत्याऽञ्जलिप्रक्षेपसाधनीभूते सावित्रीमन्त्रे यन्मानसिकत्वं प्राप्तं तन्निवृत्तिरेवेत्याशयेनाऽऽह— सावित्र्याः प्राप्तत्वादिति ।

+ सावित्रीग्रहणमिति । पुनः सावित्रीग्रहणं कुर्वतः पैठीनसेराचार्यस्य ह्ययमाशयो लक्ष्यते यन्मनसोच्चारविषयीभूतसावित्रीनिवृत्तिपूर्वकं साक्षादुच्चारणविषयीभूतसावित्रीमन्त्रेणैव सूतकेऽप्यञ्जलिप्रक्षेपोऽनुष्ठेय इति । एवं चाञ्जलिप्रक्षेपसाधनीभूते सावित्रीमन्त्रे साक्षादुच्चारणविषयत्वस्य प्रतिप्रसवोऽयं कृत इति मन्तव्यम् ।

× प्रत्यूहेदिति । अग्निषु क्रिया न प्रत्यूहेन्न विघातयेत् । अशुचित्वे सत्यप्यग्निसाध्यकर्माणि कुर्यादेवेत्यर्थः ।

क्रिया: ' इति मनुवचनात्कर्तव्यत्वप्राप्तावपि ' विप्रो दशाहमासीत वैश्व-देवविवर्जितः ' इति संवर्तवचनान्निवृत्तिः । यद्यपि ' पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः ' इति संवर्तवचनेनैव वैश्वदेवस्यापि निषेधः सिद्धस्तथाऽपि येषां तैत्तिरीयादीनां पञ्चयज्ञभिन्नो वैश्वदेवस्तदर्थः पृथङ्निषेधः । कन्याया *अधार्यत्वे मुहूर्तान्तराभावे च कूष्माण्डहोमा-दिपूर्वकं विवाहप्रारम्भोऽप्युक्तो विष्णुना—

अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद्घृतम् ।
गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतकी ॥ इति ॥

इदं वचनमेता+दृशविषय एव सार्थकमिति न सर्वविषयम् । अत्र च सर्वत्र केवलसूतकग्रहणमाशौ=चमात्रपरम् ॥ १८ ॥

×नाशौचा ज्ञातयः स्युः पतितपतिसुतब्रह्मविद्घातिनीषु
दोषात्पाखण्डिचौराश्रमरहितसुरापेयहीनोपगासु ।
संदर्पात्सर्पविप्रक्षितिपपशुदिवाकीर्तिकार्यैर्हतेषु
स्वेच्छापूर्वं च शस्त्रज्वलनजलविषानाशकाद्यैर्मृतेषु ॥ १९ ॥

---

* अधार्यत्व इति । धारयितुमशक्यत्व इत्यर्थः । अतिप्रौढत्वाद्विवाहं विनाऽव-स्थापयितुमयोग्यत्व इति यावत् ।

+ एतादृशेति । विवाहमुहूर्तान्तरात्यन्ताभावः कन्यायाश्च सद्य एव बलवा-न्रजोदर्शनसंभव इत्युभयतस्पाशायां रज्ज्वामिव बलवदनुपपत्तौ सत्यां विवाहादिवि-षय इत्यर्थः । एतेन रजोदर्शनात्प्रागेव कन्याविवाहे स्मृतीनां दृढमाग्रहोऽपि लक्ष्यते ।

= आशौचमात्रेति । मात्रशब्दः कार्त्स्न्ये । जननाशौचमरणाशौचेतिकृत्स्नाशौच-परम् । नतु केवलमृत्याशौचपरमेवेत्यर्थः ।

× एवमष्टादशश्लोकेन केषुचित्कार्यविशेषेषु तत्कर्तृणां स्नानादिना तात्कालि-कीमाशौचशुद्धिमभिधायेदानीं मृत्युविशेषादप्याशौचापवादमेकोनविंशेन वृत्तेनाऽऽह— नाशौचा ज्ञातय इति । पतितासु महापातकातिपातकानुपातकवतीषु तथा पत्यादि-घातिनीषु च स्त्रीषु मृतासु प्रसूतासु वा सतीषु ज्ञातयः सपिण्डादयो न आशौचं येषां ते तथा स्युराशौचभाजो न स्युरित्यर्थः । तथा दोषाद्दोषेण हेतुना पाखण्डचा-

पतिता महापातकातिपातकानुपातकिनः । तद्भिन्ना अपि 'ब्रह्महसुरापगुरुतल्पगमातृपितृयोनिसंबन्धागस्तेननास्तिकनिन्दितकर्माभ्यासिपतितात्यागयपतितत्यागिनः पतिताः पातकसंयोजकाश्च' इति गौतमसूत्रोक्ताश्चेति केचित् । पतिसुतब्रह्मविड्घातिन्यः । पतिः परिणेताऽब्राह्मणोऽपि । सुतः पुत्र उत्पन्नो गर्भस्थितश्चाब्राह्मणोऽपि । ब्रह्म ब्राह्मणः । विट् दुहिता । दौहित्रं विट् चेति मनुवचने तद्वचनस्य विट्शब्दस्य दर्शनात् । नतु वैश्यः । तत्र *मूलाभावात् । सा चोत्पन्ना गर्भस्थिता च । एतेषां हन्त्र्यः । पाखण्डिनो नरशिरःकपालादिश्रुतिस्मृतिबाह्यलिङ्गधारिणः । चौराः सुवर्णतत्समहारिणः । आश्रमरहिता अधिकारसत्त्वेऽप्यकृताश्रमविशेषपरिग्रहाः । स्वस्य निषिद्धा सुरा पेया येषां ते सुरापेयाः । स्वापेक्षया हीनं जात्या उपगच्छन्ति ता हीनोपगाः प्रतिलोमाश्रिताः । इदं च शिष्यगुरुगानामुपलक्षणम् । सर्पः । विपः । क्षितिपः । पशवो गवादयः । दिवाकीर्तय एव दि+वाकीर्तिका अन्त्यजाः । आद्यग्रहणाद्व्याघ्रनक्रादयः सर्वे तिर्यञ्चश्चौरवैद्युतवृक्षाद्यारोहकूदिषु त्रिषु मृतेषु सुरापेयहीनोपगासु च मृतासु नाशौचा ज्ञातयः स्युरिति पूर्वेण संबन्धः । अत्र स्त्रीलिङ्गमतन्त्रं ज्ञेयम् । तथा संदर्पाद्गर्वान्नतु बुद्धिपूर्वं सर्पादीन्दिवाकीर्तिश्चण्डालो नतु नापितस्तानपकर्तुमाभिमुख्येन ये प्रवृत्ताः सन्तस्तैर्हतास्तेषु मृतेषु नाशौचा ज्ञातयः स्युः । तथा स्वेच्छापूर्वं शस्त्रज्वलनादिभिर्मृतेष्वपि ज्ञातयो नाशौचाः स्युरिति संक्षिप्तोऽर्थः ।

* मूलाभावादिति । वैश्यहन्तुर्मृतौ सपिण्डैस्तदशौचादिकं न कर्तव्यमित्यस्यार्थस्य स्मृतिष्वनुपलम्भादित्यर्थः ।

+ दिवाकीर्तिका इति । अत्र दिवाकीर्तिश्चाण्डालः । 'दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा' इति तन्मूलभूते मनुवचनेऽत्यन्ताशुच्युदक्यादिसाहचर्याद्दिवाकीर्तिशब्देन चाण्डालस्य ग्रहणात् । नतु नापितः । तस्य स्पृश्यत्वाद्भोज्यान्नत्वाच्च । यत्तु श्मश्रुकर्माणि कृते कृतश्मश्रोः पुरुषस्यानेन वचनेन स्नानं विधीयते तदर्थं चात्र दिवाकीर्तिशब्देन नापितस्य ग्रहणमित्यस्पृश्यो नापित इति वदन्ति । तदपि न । श्मश्रुकर्मणि स्नानस्यान्यथैव सिद्धत्वात् । तथा हि—'अवश्यं श्मश्रुकर्माणि कारयतो रोमाणि गात्राणि स्पृशन्ति तानि शरीरच्युतान्यशुचीनि' इति तत्प्रयुक्तं कृतश्मश्रोः स्नानं नतु नापितस्पर्शप्रयुक्तमिति तट्टीकायां मेधातिथिनोक्तत्वादित्यर्थः ।

पाद्यवरोहादयश्च *दर्पोपनतविपत्तिहेतवो गृह्यन्ते । संदर्पात्—एतद्ग्रहणहननादिसामर्थ्यगर्वेण । अयं मां मारयतिवति बुद्ध्यभावेऽपि पाक्षिकस्वानिष्टानादरणात्तद्ग्रहणादौ प्रवृत्ताः सन्तस्तैर्हताः । शस्त्रं खड्गासिपुत्र्यादि । ज्वलनो भौमाग्निः । जलम् । विषम् । अनाश्यकमभोजनम् । आ+द्यग्रहणादुद्बन्धनप्रपातादयोऽनेनाहमात्मानं व्यापादयामीतिबुद्धिपूर्वप्रवृत्तप्राणविपत्तिहेतवो गृह्यन्ते । एतैः कृत्वा । स्व×स्यैव नतु विधिप्रयोज्या या इच्छा जलतद्गाम्भीर्यादिज्ञानानन्तरं स्वव्यापादन इष्टसाधनताभ्रमवतस्तत्प्रवृत्तिकारणमनेनाहमात्मानं व्यापादयामीत्यभिलाषसा(स्ता)त्विकी भीषणमात्र(भावा)र्थं तद्विपरीतो वा तत्पूर्वमृता आत्मानं व्यापादितवन्तः। एतेषु सर्वेषु पतितादिषु प्रेतेषु सपिण्डादिष्वपि सत्सु ज्ञातयः सपिण्डसमानोदकाः । =इदं चोपलक्षणम् ।

---

* दर्पोपनतेति । दर्पेणोपनताः प्राप्ताः स्वसामर्थ्यगर्वहेतुकप्राप्तिका ये विपत्तिहेतवः प्राणनाशकारणीभूता व्याघ्रादयश्चौरादयश्च ते प्रथमाद्यशब्देन गृह्यन्त इत्यर्थः ।

+ आद्यग्रहणादिति । अनेनोद्बन्धनादिनाऽहमात्मानं घातयामीति बुद्ध्या प्रवृत्तानां ये प्राणनाशहेतुभूता उद्बन्धनादयस्त एतच्छ्लोकोत्तरार्धगतद्वितीयाद्यशब्दग्रहणात्संगृह्यन्त इत्यर्थः ।

× स्वस्यैवेति । स्वस्यैवाऽऽत्मन एव । न तु 'प्रयागवटशाखायां देहत्यागं करोति यः । उत्तमानाप्नुयाल्लोकान्नाऽऽत्मघाती भवेत्क्वचित् ॥' इत्यादिशास्त्रीयविधिजन्या, याऽनेनोदकादिनाऽहं स्वात्मानं घातयामीत्याकारिकेच्छा नामाभिलाषः । स च कथंभूतः । जलतद्गाम्भीर्यादिज्ञानोत्तरं जायमान इति शेषः । पुनः कथंभूतः । तत्प्रवृत्तिकारणम् । तस्मिन्स्वव्यापादने या प्रवृत्तिस्तस्याः कारणमित्यर्थः । स चाभिलाषः कस्य । स्वव्यापादनेष्टसाधनताभ्रमवतः । स्वव्यापादनरूपं यदिष्टं तस्य या साधनता उदकादिनिष्ठा तस्या यो भ्रमो विपरीतज्ञानं तद्वतः पुरुषस्येत्यर्थः । तादृशाभिलाषपूर्वकं ये मृता आत्मानं घातितवन्त इत्यर्थः ।

= इदमिति । नाशौचा ज्ञातयः स्युरित्यत्रत्यं ज्ञातिपदमित्यर्थः । उपलक्षणं नामोपलक्ष्यते ज्ञायते तात्पर्यार्थोऽनेनेति व्युत्पत्त्या लक्षणया स्वशक्यसंबन्ध्येतदुभयार्थप्रतिपादकः शब्दः । यथा 'काकेभ्यो दधि रक्ष्यताम्' इति वाक्ये काकपदं स्वशक्यार्थान्काकान्दध्युपघातकत्वेन संबन्धेन स्वशक्यकाकसंबन्धिनो मार्जारादींश्चार्थानभिधत्त इति भवत्युपलक्षणपदवाच्यम् । अयमेव चात्र काकपदस्य तात्पर्यार्थः । न केवलं काक एव तस्य तात्पर्यम् । लोके दधिसंरक्षणस्य सर्वतः क्रियमाणस्य

शिष्यदौहित्राद्यनाद्यसंबन्धिनोऽपि न *विद्यते शौचं कर्माधिकारो येषां ते तथा । तत्प्रतिबन्धकातिशयविशेषवन्त इति यावत् । ताहशा न स्युः । +पतितादिमरणे तत्सपिण्डादीनामाशौचं न भवतीत्यर्थः । ◡उदकदानादिनिषेधमपि तेभ्यो वक्ष्यति । ×कस्मात्—=दोषात् । पतितादीनामनशनादिमृतान्तानां दोषवत्त्वात् । ∔पूर्वार्धोक्तानां तत्तन्निषेधातिक्रमाद्दोषवत्त्वं प्रसिद्धमेव । उत्तरार्धोपात्तानामपि ' न संशयमभ्यापद्येत तस्मादु ह न पुरायुषः (?)स्वः कामी प्रेयात् ' इत्यादिनिषेधशास्त्रातिक्रमाद्दोषवत्त्वम् । अत्र हि स्वमरणा⊙नुकूलव्यापारमात्रं निषिध्यते ।

---

दर्शनात् । एवं च वेदान्तिमते जहल्लक्षणया नैयायिकमतेऽजहल्लक्षणया काकपदं दध्युपघातकप्राणिपरं संपद्यते । तद्वत्प्रकृते ज्ञातिपदं न केवलं स्वशक्यार्थसपिण्डसमानोदकपरं किंतु स्वशक्यसंबन्धिशिष्यदौहित्रादिपरमपि भवतीति भवत्युपलक्षणम् । तथा च ज्ञातिपदं जहल्लक्षणयाऽजहल्लक्षणया वा शववाहदाहादिनाऽनुत्पाद्यसंबन्धवत्परं विद्यासंबन्धवत्परं योनिसंबन्धवत्परं चेति यावत् । तथा सति सपिण्डादेः शिष्यादेश्चेत्युभयेषां संग्रहो भवतीत्यर्थः ।

* नन्वशुचिशब्दप्रकृतिकभावप्रत्ययेन निष्पन्नस्याऽऽशौचशब्दस्य नपुंसकत्वदर्शनात्कथं ' नाशौचाः ' इति पुंस्त्वमित्यत आह—न विद्यत इति । अथवाऽशौचशब्दान्मत्वर्थीयोऽर्शआद्यच् । इदं च नशब्दस्य पृथक्पदत्वमभ्युपगम्य । नशब्दस्य समस्तत्वे तु न अशौचं येषां ते इत्यर्थे निषेधार्थकेन नशब्देन बहुव्रीहिर्बोध्यः ।

\+ एवं प्रतिपदं व्याख्याय निष्कृष्टार्थमाह—पतितादिमरण इति ।

◡ अयं चाशौचनिषेधः सकलप्रेतकृत्योपलक्षणमिति प्रदर्शयन्नाह—उदकदानादिनिषेधमपीति । 'नाशौचं नोदकं नाश्रु न दाहाद्यन्त्यकर्म च' इत्यादिनेति भावः ।

× नन्वेतच्छ्लोकोपात्तेषु पतिताद्यनाशकादिमृतान्तेष्वाशौचादिसकलौर्ध्वदेहिकाभावविधाने हेतुं पृच्छति—कस्मादिति

= उत्तरयति—दोषादिति । अस्य पतिताद्यनशनादिमृतान्तेषु सर्वेषु संबन्धः ।

∔ नन्वेषां कथं दोषवत्त्वमित्याशङ्क्याऽऽह—पूर्वार्धोक्तानामित्यादिना । तत्तन्निषेधातिक्रमात् । तस्य तस्य निषेधस्यातिक्रमादुल्लङ्घनात् । महापातकादिदोषप्रयोजकतत्तद्दुष्कर्माचरणनिषेधकवचनोल्लङ्घनाद्दोषवत्त्वमेतेषामित्यर्थः ।

⊙ स्वमरणेति । स्वस्याऽऽत्मनो यन्मरणं प्राणनाशस्तस्यानुकूलो हेतुभूतो यो व्यापारः प्रयत्नः स प्रतिषिध्यते । अर्थात्तत्र प्रवृत्ताः सन्तो ये मृतास्तेषामाशौचादिसकलौर्ध्वदेहिकक्रियाकलापः प्रतिषिध्यत इत्यर्थः । तदुक्तमापस्तम्बेन—व्यापादयेदिहाऽऽत्मानं स्वयं योऽग्न्युदकादिभिः । विहितं तस्य नाऽऽशौचं नाग्निर्नाप्युदकं

भवति च सर्पादीनां ग्रहणादिप्रयत्नः। राजादीनां शक्यार्थाज्ञातिक्रमादि-

क्रिया ॥ इति। नन्वयं स्वमरणानुकूलव्यापारो ' ये बुद्धिपूर्वं विषोद्बन्धनादिभिरात्मानं घातयन्ति ' तत्र संभवतीत्यात्मघातिनामेवेदमाशौचौर्ध्वदेहिकाकरणमस्तु। चण्डालसर्पराजादिभिर्विग्रहाविप्रियचौर्यपारदार्यादिदोषेण हतानां त्वात्मघातिता न संभवति। स्वमरणानुकूलव्यापाराभावात्। नहि ते बुद्धिपूर्वं चण्डालादिभिरात्मानं घातितवन्तः। तथा चोत्तरार्धे सर्पादिदिवाकीर्तिव्याघ्रान्तग्रहणमनुपपन्नम्। यदि च सर्पादिभिर्हतानां मरणानुकूलव्यापारवत्त्वाभावेऽप्याशौचाद्यभाव इष्येत तर्हि '.मरणानुकूलव्यापारमात्रं निषिध्यते ' इति विरुद्धं भवति। किंच ' अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः। तस्याऽऽशौचं विधातव्यं कर्तव्या चोदकक्रिया ॥ इत्यङ्गिर उक्तिरपि विरुध्येत। अत आह—भवति च सर्पादीनामिति। अयं भावः—यद्यपि चण्डालादिभिर्हतेषु स्वमरणानुकूलव्यापारो विषोद्बन्धनादिनाऽऽत्मघातवन्निश्चितमरणकोटिको नास्ति तथाऽपि संभावितमरणकोटिकोऽस्ति। तथा हि—दर्पावष्टम्भेन तन्निग्रहादिषु प्रवृत्तानां तैश्च हतानां बुद्धिपूर्वं संभावितोत्कटकोटिकमरणहेतुग्रहणशक्यार्थाज्ञातिक्रमादिषु प्रवृत्तत्वात्स्वमरणानुकूलव्यापारवत्त्वादात्मघातिताऽस्तीत्यर्थः। ' सर्वत एवाऽऽत्मानं गोपायेत् ' इति विध्यतिक्रमात्। ' न संशयमभ्यापद्येत ' इति निषेधातिक्रमाच्च। एवं यो बाहुभ्यां नदीं तरति संदिग्धां नावमधिरोहत्यकुशलकर्णधाराधिष्ठितां तस्य म्रियमाणस्य बलक्षयेण नौपरिवर्तनादिना वा भवत्येवाऽऽत्मघातिता। एवं च व्यापारश्च विषशस्त्रोद्बन्धनादिवत्साक्षान्मरणानुकूलस्तत्समर्थाचरणरूपश्चेति द्विविधोऽपि विवक्षितः। एतदेव सूचयितुं व्यापारमात्रमिति मात्रशब्दः प्रयुक्तः। मात्रशब्दः कार्त्स्न्ये। मरणानुकूल. साक्षात्पारम्परिकश्चेति सर्वोऽपि व्यापारो निषिध्यते। तेन यश्चाण्डालदस्युभूयिष्ठेऽरण्ये रात्रावेकाकी गच्छति तस्य तैर्हतस्य च यद्यपि साक्षान्मरणानुकूलव्यापारवत्त्वं नास्ति तथाऽपि तत्समर्थाचरणेन स्वमरणस्यापरिहृतत्वाद्भवत्येवाऽऽत्मघातितेति बोध्यम्। एतेन यस्य निरुक्तस्वमरणानुकूलव्यापारवत्त्वं नास्ति किंतु प्रमादात्पूर्वोक्तैर्निमित्तैर्मृतस्तस्याऽऽशौचादिकं कर्तव्यमेवेति सूचितम्। तथा चोक्तं ब्राह्मे—प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः। शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः ॥ चण्डालैरथवा चौरैर्निहतो यत्र कुत्रचित्। तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः ॥ इति। एतदेव ध्वनयितुं दर्पादित्युक्तं मूले। यस्तु विहितेनोद्बन्धनाद्युपायेन मृतो न तस्याऽऽत्मघातितादोषः। तदुक्तं ब्राह्मे-दुश्चिकित्स्यैर्महारोगैः पीडितोऽस्ति नरो यदि। प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा। अगाधं तोयराशिं वा भृगोः पतनमेव च। गच्छेन्महापथे वाऽपि तुषारगिरिमादरात्। प्रयागवटशाखायां देहत्यागं करोति यः। स्वयं देहविनाशस्य प्राप्ते काले महामतिः। उत्तमान्प्राप्नुयाल्लोकान्नाऽऽत्मघाती भवेत्क्वचित् ॥ इति।

कान्तारसंशीर्णनौकाधिष्ठानादि च *तथा ।

' राज+भिर्निहतानां च शृङ्गिदंष्ट्रिसरीसृपैः ।
आत्मनस्त्यागिनां चैव श्राद्धमेषां न कल्पयेत् ॥

इति वचन आत्मत्यागिनां पृथगुपा×दानात् ।

चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥
उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥ '

---

* तथेति । ग्रहणादिप्रयत्न इत्येवमादिकं संशीर्णनौकाधिष्ठानादीत्यन्तं तथा-नाम संभावितमरणहेतुत्वात्परम्परया स्वमरणानुकूलव्यापाररूपं भवतीत्यर्थः ।

+ यश्चाण्डालादिभिर्बुद्धिपूर्वमात्मानं घातयति तस्याऽऽत्मघातिनोऽयं संदर्पात्स-र्पविप्रक्षितिपेत्याद्यभिहित आशौचाद्यौर्ध्वदेहिकप्रतिषेध इत्युक्तम् । तदेव स्थूणानि-खननन्यायेन द्रढयितुं शङ्कते—राजभिर्निहतानामिति ।

× आत्मत्यागिनां पृथगुपादानादिति । आत्मानं त्यजन्तीत्यात्मत्यागिनः । त्यजधातोः ' संपृचानुरुधा० ' (पा० सू० ३।२।१४२) इति सूत्रेण घिनुण्प्रत्ययः कर्तरि । त्यजधात्वर्थस्त्यागानुकूलो व्यापारः । त्यागश्चाऽऽत्मन इति स्वमरणानुकू-लव्यापारवतामित्यर्थः । आत्मत्याग्यात्मघातिशब्दौ समानार्थकौ । तथा च राजशृ-ङ्गिदंष्ट्र्यादिभिर्हतानामपेक्षयाऽऽत्मत्यागिनां पार्थक्येन ग्रहणाद्राजादिहेतुकमरणं प्राप्तवतां स्वमरणानुकूलव्यापारवत्त्वाभावेऽप्यर्थात्प्रमादमृतानामप्याशौचादिप्रतिषे-धोऽवगम्यत इत्यर्थः । यदि च राजादिहेतुकमरणवतां स्वमरणानुकूलव्यापारवतामेव सतां तत्सपिण्डादीनां तन्मरणनिमित्त आशौचादिप्रतिषेध इष्येत तर्हि राजादिह-तापेक्षया पृथगात्मत्यागिग्रहणं न कुर्यात् । इदानीं राजादिहतात्मत्यागिनोर्भेदस्य वक्तुमशक्यत्वात् । शङ्ककमते तु ये राजादिहेतुकमरणं प्राप्तवन्तः सन्तः स्वमर-णानुकूलव्यापारवन्तस्त आत्मत्यागिनो ये च न तथा ते प्रमादहता इत्येवं भेदस्य सुवचत्वाद्युज्यते पार्थक्येनाऽऽत्मत्यागिग्रहणमिति भावः । यद्वाऽऽत्मत्यागिनां ग्रहणं न कुर्यादित्यस्याऽऽत्मत्यागिनामेव ग्रहणं कृत्वा राजादेरुपादानं परित्यज्यताम् । आत्मत्यागिग्रहणपार्थक्यनिरासाय पार्थक्यनिरूपकराजादिग्रहणमेव परित्यजेदित्यर्थः । ये स्वयमेव शस्त्रादिनाऽऽत्मानं नाशयन्ति ये च राजादिभिरात्मानं नाशयन्ति तादृशामुभयेषामात्मघातिनामात्मत्यागिग्रहणेनैकेनैव संग्रहसिद्धेः । सत्येवं यदात्म-त्याग्यपेक्षया पृथद्राजादिग्रहणं क्रियते तेन राजादिहतानां स्वमरणानुकूलव्यापारा-भाववता(प्रमादहतानामनिच्छता)मेवाऽऽशौचादिप्रतिषेधोऽवगम्यत इति व्याख्येयम् ।

इत्याद्य*विशेषस्मरणाच्च पशुजलवैद्युतादिभिः प्रमादहतानामप्य-शौचाद्यभावो यद्यपि प्रतीयते तथाऽपि 'प्रायोऽनाशकशस्त्राग्निविषोदको-द्बन्धनप्रपतनैश्चेच्छताम्' इति गौतमसूत्रे तावदिच्छतामिति विशेषणा द्बुद्धिपूर्वशस्त्रादिमृतविषयत्वमेव +तस्य प्रतीयते। ×तदेकवाक्यतया चण्डालादुदकादित्यत्राप्युदक इच्छासंबन्धावश्यकत्वेन तत्साहचर्याच्चण्डा-दिष्वपि =इत्प्रतीतिः। चण्डा⊙लादिभिर्येषां मरणं तेषां पापकर्मणा-

* अविशेषेति। आत्मघातितावगमकं 'बुद्धिपूर्वं' 'मरणं संपादितम्' इत्यादिविशेषणरूपविशेषमनुपादाय चाण्डालहेतुकं येषां मरणमित्येवं सामान्येनाभिधानाच्चेत्यर्थः।

+ तस्येति। 'प्रायोनाशकशस्त्राग्नि०' इतिनिरुक्तगौतमवचनस्य बुद्धिपुरःसरं ये शस्त्राग्न्यादिभिरात्मानं घातितवन्तस्तद्विषयत्वमवगम्यत इत्यर्थः।

× तदेकवाक्यतयेति। एकं समानं समानार्थकं यद्वाक्यं तस्य भाव एकवाक्यता। तेन प्रायोनाशकेत्यादिगौतमवचनेन सह यैकवाक्यता समानार्थप्रतिपादकता तयेत्यर्थः। चाण्डालादुदकादित्यादिवचनस्य गौतमवचनप्रतिपादितार्थाभिधायकत्वसंपत्त्यर्थमिति यावत्।

= तत्प्रतीतिरिति। स्मृत्यन्तरैकवाक्यत्वलाभार्थं चण्डालादुदकादिति स्मृतिस्थोदकपद इच्छतामित्यन्वयस्याऽऽवश्यकत्वेन तत्साहचर्याच्चण्डालादिष्वपीच्छतामित्यस्यान्वयः प्रतीयते। सदृशयोरेव सहचरणनियमादिति भावः। तथा चेच्छापूर्वं चण्डालोदकादिभिरात्मानं ये हतवन्तस्तद्विषयमेवेदं वचनम्। चण्डालादिभिर्हतेष्वपि स्वमरणानुकूलव्यापारवत्स्वेवेदं वचनं प्रवर्तत इति यावत्। न तु प्रमादहतविषयम्। चण्डालादिहतेषु स्वमरणानुकूलव्यापाराभाववत्सु नेदमिति यावत्।

⊙ किंच चण्डालादुदकादित्यत्र पापकर्मणामित्युक्तत्वादपि चण्डालादिभिर्हतानां स्वमरणानुकूलव्यापारवतामेवोद्दिश्येदं वचनं प्रवृत्तमित्युपपादयन्नाह–चण्डालादिभिर्येषां मरणं तेषामित्यादि। तेषां तादृशाम्। पापकर्मणां पापकर्मवताम्। तादृशां नाम कीदृशाम्? इत्यपेक्षायां यादृशेन पापेन तेषां चण्डालादिहेतुकं मरणं संप्राप्तं तादृशामित्यर्थः। तादृशपापकर्मवतामिति यावत्। तथा च चण्डालादुदकादित्यत्र चण्डालादिभिर्येषां मरणं तेषां पापकर्मणामित्यन्वये सति चण्डालादिहेतुकमरणप्रयोजकपापकर्मवतामित्यर्थस्य बुद्ध्यारोहाच्चण्डालादिहेतुकमरणस्य पापहेतुकत्वं प्रतीयते। पापस्य च निषेधातिक्रमो हेतुः। पापं च कर्म प्रतिषिद्धम्। अत्र प्रतिषिद्धं योऽनुतिष्ठति स पापकर्मेत्युच्यते। तथा च निषेधमुल्लङ्घ्य क्रियमाणं कर्म पापजनकत्वात्पापं भवतीति पापस्य निषेधातिक्रमहेतुकत्वं प्रतीयते। निषेधातिक्रमश्च पुरुषनिष्ठ-

मिति वचनव्यवस्था चण्डालादिहेतुकमरणस्य पापहेतु(क)त्वप्रतीतेः पापस्य च निषेधातिक्रमहेतुकत्वान्निषेधातिक्रमस्य च पुरुषव्यापारगोचरत्वात्प्र+मादमृते च मरणानुकूलतदभावात्पापकर्मणामिति विशेषणादपि *तथा। ×अन्यथा पूर्वजन्मनि पापकर्मणां येषां चण्डालादिभिर्मरणमिति व्याख्याने तस्याऽनर्थक्यात्। =श्वादिदंशवज्जन्मान्तरीयपापानुमानेऽपि

---

व्यापारान्वक्त इति चण्डालादिहेतुकमरणहेतुपापहेतुनिषेधातिक्रमहेतुव्यापारवत्त्वेन चण्डालादिहेतुकमरणं प्राप्तानां स्वमरणानुकूलव्यापारवतामेव सतां तादृशमरणनिमित्तकः श्राद्धादिप्रतिनिषेधः प्रतीयते न तु प्रमादहतानां स्वमरणानुकूलव्यापाराननाविष्टानामिति तात्पर्यम्।

+ प्रमादमृते चेति। यत्र ग्राहमकरादिसंबन्धं दस्युचण्डालादिसंयोगं च यो नैव श्रुतवांस्तादृशे जले स्थले वा स्वच्छन्दं स्नातुं संचरितुं वा प्रवृत्तः सन्दैवदुर्विलासादकस्मात्तैर्मृतः स प्रमादमृत इति विज्ञेयम्। तादृशे प्रमादमृतस्थले। तदभावात्—स्वमरणानुकूलव्यापाराभावादित्यर्थः।

* तथेति। तेन प्रकारेण प्रतीतिः। चण्डालादिहेतुकमरणं प्राप्तवत्स्वपि स्वमरणानुकूलव्यापारवत्स्वेव श्राद्धादिनिषेधप्रवृत्तिप्रतीतिरित्यर्थः।

× ननु चण्डालादुदकादित्यस्य चण्डालादिहेतुकमरणप्रयोजकपापकर्मवतामिति निरुक्तव्याख्यानापेक्षया विधान्तरेणापि व्याख्यानं संभवतीत्याह—अन्यथेति। अन्यथोक्तवैपरीत्ये। वैपरीत्यमेव विवृणोति—पूर्वजन्मनीत्यादि। अयं भावः—चण्डालादुदकादित्यस्य पूर्वजन्मनि पापकर्मणां कृतपापानां येषां चण्डालादिभिर्मरणमिति व्याख्याने पापकर्मणामित्यनेन किमप्यधिकं नोक्तं भवेत्। पूर्वजन्मनि किंचित्पातकं कृतं तेन चण्डालादिहेतुकं मरणं संपन्नं तादृशमरणनिमित्तकः श्राद्धादिनिषेधविधिरिति हि तदर्थः। अत्र श्राद्धादिनिषेधो विधेयः। तत्र प्रयोजकत्वेन चण्डालादिहेतुकं मरणमुपादीयत इति तत्कथनं सप्रयोजनं भवति। किंतु तादृशमरणप्रयोजकत्वेन यत्प्राक्तनजन्मगतपापमुपादीयते तत्किमर्थम्। नहि दुर्मरणं जन्मान्तरं अपुण्यपुञ्जप्रयुक्तमिति कोऽप्यभ्युपैति। येन तद्व्यावृत्त्यर्थं तदुपादानं सार्थकं स्यात्। निषेधविधौ हि तादृशमरणस्यैव प्रयोजकत्वेन प्रतीतेश्च तदनर्थकमिति भावः।

= ननु यस्येदृशं (चण्डालादिहेतुकमशास्त्रीयं) मरणमुपनतं स पूर्वस्मिञ्जन्मनि कृतपातक इत्येवं प्राक्तनजन्मीयपापकर्तृत्वसूचनार्थं तत्सार्थकमित्याशङ्क्याऽऽह—श्वादिदंशवदिति। यथा श्वादिकृतदंशेन यथावा पुत्रकलत्रादिमरणेन जन्मान्तरकृतपातकमनुमीयते तद्वद्दुर्मरणेन प्राग्भवीयपापानुमानेऽपि विधित्सिते निषेधे विशेषानाधायकत्वान्निषेधस्वरूपोपपादकातिशयजनकत्वाभावान्निषेधे प्रयोजकत्वाभावादिति

निषेधे विशेषाबाधायकत्वात् । उद्दे*श्यविशेषणविवक्षाप्रयुक्तवाक्यभे-

यावत् । पापकर्मणामित्यस्याऽऽनर्थक्यमिति शेषः । यथा हि घटे कुलालस्य घटत्वरूपविशेषाधायकत्वं दृश्यते न तथा कुलालपितुः । प्रकृतस्थलेऽपि चण्डालादिहेतुकमरणस्यैव निषेधे विशेषाधायकत्वं ( प्रयोजकत्वं ) प्रतीयते न जन्मान्तरीयपापसंबन्धित्वस्येति कुलालेनैव घटोत्पत्तिसिद्धौ तत्र कुलालपितुरिव चण्डालादिहेतुकमरणेनैव निषेधविधिसिद्धौ तत्र पूर्वजन्मीयपापस्याजागरूकतनायमानत्वादानर्थक्यमिति यावत् । वस्तुतस्त्वत्र जन्मान्तरीयपापानुमानं विफलमेव । श्वादिदंशादिस्थले तु मा पुनः श्वादिदंशो भून्मा वा पुनर्भार्यावियोगो भूदिति प्रायश्चित्तानुष्ठानार्थं तदनुमानमुपयुज्यते । तत्र प्रायश्चित्तं च कर्मविपाकग्रन्थेषु स्पष्टम् । इह तु मरणेन सर्वकर्माधिकारस्यापहृतत्वान्नार्थोऽनेन ज्ञापनेन । किंचेदृशस्थले जन्मान्तरीयपापानुमानेऽतिप्रसङ्गोऽपि । तथा हि—पूर्वजन्मनि कृतपातकोऽयमिति ज्ञायमाने तेन सह ये केचन केनचिद्यौनाः स्रौवा मौखाश्च संबन्धाः कृताः सोऽपि पापकारी स्यात् । नैवं शिष्टानामाचारः । नहि तादृशेन संबन्धं कृतवन्तः केनचिद्विचिकित्स्यन्ते । तस्मात्त्वदुक्तव्याख्याने पापकर्मणामित्यस्य सुतरां वैफल्यं प्रसज्यत इति भावः ।

* ननु यथा 'ग्रहं संमार्ष्टि' इत्यत्रोद्देश्यग्रहविशेषणस्यैकत्वस्य विवक्षायां क्रियमाणायां 'प्राजापत्या नव ग्रहाः' इति नवत्वसंख्यावरुद्धेषूद्देश्यभूतेषु ग्रहेषु तदन्वयासंभवेन विधिकोटौ प्रवेशे सति 'ग्रहं संमृज्यात्तं चैकम्, इति वाक्यभेदापत्तिरुक्ता मीमांसायाम् । तद्वच्चण्डालादित्यत्र त्वदुक्तव्याख्याने श्राद्धादिनिषेधो विधीयते । तत्र चोद्देश्यत्वेन चण्डालहेतुकमरणं प्राप्तवन्तो निर्दिश्यन्ते । तेषां च विशेषणं पापकर्मणामिति । तत्र यदि चण्डालादिहेतुकमरणवत्पुरुषरूपोद्देश्यविशेषणस्य पापकर्मणामित्यस्य विवक्षा क्रियते तदा चण्डालादिहेतुकमरणं प्राप्तवतां श्राद्धादि न कुर्यात्तेषां च पापकर्मणां ( तादृशमरणप्रयोजकपापकर्मवतां स्वमरणानुकूलव्यापारवतां नतु प्रमादहतानामिति यावत् ) इत्येवं वाक्यभेददोषः समापततीति तत्राऽऽह—उद्देश्यविशेषणविवक्षाप्रयुक्तेत्यादिनाऽङ्गी क्रियत एवेत्यन्तेन । अयं भावः—दर्शभ्रान्त्या चतुर्दश्यां केनचिद्धविर्निरुप्तम् । ततः प्रत्यूषे पूर्वस्यां दिशि चन्द्रमा अभ्युदेति तदा निरुप्तास्तण्डुलास्त्रेधा विभक्तव्याः । ईषत्खण्डिता अखण्डिता अतिसूक्ष्माश्चेति त्रिधा विभक्तास्ते दात्रादिगुणाविशिष्टेभ्योऽन्यादिदेवताभ्य इत्येवं 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेत् । ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् । ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम् । येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्' इति श्रुत्याऽभिधीयते सैषाऽभ्युदितेष्टिः । तत्रेदं श्रान्ताद्दर्शकर्मणोऽन्यत्कर्म विधीयत उत तस्मिन्नेव प्रकृते कर्मणि निरुप्त-

दस्त्वभ्युदितेष्टिवाक्ये भावनाया अप्यभे*दपक्षे श्रुतस्थोदिष्टाद्युद्देश्यद्वय-प्रयुक्तवाक्यभेदवदानर्थक्यभिया

गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥

इति न्यायेनाङ्गी क्रियत एव । गौत+मसूत्रे चाऽऽवश्यकः । पौरुषेय-

---

हविषः पूर्वदेवताभ्यो दर्शसंबन्धिनीभ्योऽपनयोऽत्राभिधीयत इति संशय्य यदि प्रक्रान्तं कर्म परित्यज्य कालापराधप्रायश्चित्तार्थं द्रव्यदेवतादिविशिष्टं कर्मान्तरमिद-मिति कल्प्येत तदा कॢप्तस्य कर्मणः परित्यागोऽकॢप्तस्य च कर्मान्तरस्य कल्पन-मिति कृतप्रणाशाकृताभ्यागमदोषवत्त्वेन नेदं कर्मान्तरम् । किंतु तण्डुलोपलक्षितं यद्धविर्दधिव्रीहिरूपं च पूर्वेद्युर्निरुप्तं तद्धविः पूर्वदेवतात्मनोरग्नेरिन्द्राच्च विभजेदिति देवताहविषोः परस्परविभागोऽत्र विधीयते, नतु तण्डुलानां स्थविष्ठमध्यमाणिष्ठरूप-त्रिविधो विभागो विधीयते । तस्य 'ये मध्यमाः स्युः' इत्यादिविनियोगभेदेना-र्थप्राप्तत्वात् । ततः पूर्वदेवतास्त्यक्त्वा दातृत्वादिगुणविशिष्टाभ्योऽन्यादिदेवताभ्यः पूर्वं निरुप्तं हविः प्रदातव्यमिति सिद्धान्तितं जैमिनीयन्यायमालायां षष्ठाध्यायस्य पञ्चमे पादे प्रथमाधिकरणे । तथा च तत्र श्रुतस्थविष्ठाद्युद्देश्यभेदप्रयुक्तो यथा वाक्यभे-दोऽङ्गीकृतस्तथा प्रकृतेऽपि चाण्डालादिहेतुकमरणवत्पुरुषरूपं यदुद्देश्यं तद्विशेषणी-भूतपापकर्मवत्त्वविवक्षाप्रयुक्तो वाक्यभेदोऽङ्गी क्रियत एव । अन्यथा पापकर्मणामि-त्यस्योद्देश्यविशेषणस्य वैयर्थ्यप्रसङ्गादिति भावः ।

* ननु 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति' इत्यभ्युदितेष्टिवाक्ये विभजेदिति विभागानुकूलभावनाया भेदादेव वाक्यभेदो ननूद्देश्यभेदप्रयुक्त इत्याश-ङ्क्याऽऽह - अप्यभेदपक्ष इति । अयं भावः—भावना नाम भवितुर्भवनानुकूलो भावकव्यापारविशेषः । सा चाऽऽख्यातवाच्या सती कर्तारं विनाऽनुपपन्ना ( अल-भ्यात्मा ) तमाक्षिपतीति मीमांसकमतम् । आख्यातं तिङ् । सैषा भावना भिन्नाऽ-भिन्ना चेति द्विविधा । तत्र भवतो भवन्तीत्यादौ विभिन्नकर्तृकानेकभावनानुभवात् 'हतशायिकाः शय्यन्ते' इति महाभाष्ये भावार्थकतिङन्ते बहुवचनदर्शनात्-'पाकौ पाकाः' इत्यत्र भावनागतद्वित्वादिप्रतीतेश्च भिन्ना । देवदत्तयज्ञदत्तविष्णुमित्रै-रास्यते इत्यत्र कर्तृभेदेऽपि बहुवचनादर्शनाच्छब्दशक्तिस्वाभाव्यादेका हि क्रिया ( भावना ) इति भाष्योक्तेश्चाभिन्नेति वदन्ति । एवं चाभ्युदितेष्टिवाक्ये न भावना-भेदप्रयुक्तो वाक्यभेदः किंतूद्देश्यविशेषणभेदप्रयुक्त एवेति भावः ।

+ गौतमसूत्र इति । प्रायोनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छतामिति गौतमसूत्र इच्छतामिति विशेषणादुद्देश्यविशेषणभेदप्रयुक्तोऽवश्यमेव वाक्यभेदोऽङ्गी-

त्वात्प्रायिकत्वाच्च नातीव दोषः । *पाखण्ड्यनाश्रितास्तेना भर्तृघ्न्यः कामगादिकाः । सुराप्य आत्मघातिन्य इत्यत्र सुराप्यादिषु स्त्रीलिङ्गस्य

कर्तव्यः । स चाप्यस्य वचनस्य पुरुषप्रणीतत्वादसार्वत्रिकत्वाच्च नातीव दोषावह इति तदनुरोधात्पापकर्मणामित्यस्याऽऽनर्थक्यमिया च चण्डालादुदकादित्यत्रापि वाक्यभेदाङ्गीकारे न काचित्क्षतिरिति भावः ।

* ननु सुराप्य इत्यादौ स्त्रीलिङ्गदर्शनात्सुरा पेया येषामिति पुंलिङ्गेन विग्रहो विरुद्धोऽत आह—पाखण्ड्यनाश्रिता इत्यादि । निरुक्तयाज्ञवल्क्यवचने सुराप्यादिशब्देषु स्त्रीलिङ्गबोधकप्रत्ययस्य दर्शनान्निषेध्याशौचादिप्रयोजकमरणाश्रयस्य सुरापानकर्तृत्वविशिष्टस्य स्त्रीलिङ्गेन निर्देशादुपात्तस्य च लिङ्गस्य विना कारणं त्यागे मानाभावेन विवक्षितत्वाच्च स्त्रिया एव मृतायाः सुरापानकर्त्र्या आशौचाद्विप्रतिषेधः प्रतीयते, नतु पुंसो मृतस्य सुरापानकर्तुरिति शङ्काशयः । सिद्धान्ताशयस्तु—भर्तृघ्नीकामगाशब्दयोः स्त्रीप्रत्ययोपादानेन तत्साहचर्यात्सुरापीत्यत्रापि स्त्रीप्रत्यय उपात्तः । नतु सुरापानकर्त्री रूपेयेवापेक्षितेत्याहत्य बोधयितुम् । तथा च न तत्र स्त्रीलिङ्गं विवक्षितमित्येवमाग्रहः कर्तव्यः । किंच सुरापीत्यत्रत्यं स्त्रीलिङ्गोपादानं 'न ब्राह्मणः सुरां पिबेत्' इत्यादिनिषेधेषु लिङ्गाविवक्षां द्योतयति । यदि च निरुक्तनिषेधे ब्राह्मणशब्द उपात्तं पुंलिङ्गं विवक्ष्येत तदा तत्र ब्राह्मणस्त्रिया असंग्रहेण सुरापाननिषेधाविषयीभूतायाः सुरापानकर्त्र्याः श्राद्धादिनिषेधः क्रियमाणो नोपपद्येत । अतो ब्राह्मणस्येव ब्राह्मणस्त्रिया अपि सुरापाननिषेधे संग्रहद्योतनद्वारा प्रकृतस्थले सुरापस्येव सुराप्या अपि संग्रहकरणेनास्य लिङ्गोपादानस्य साफल्यं वाच्यम् । स च संग्रहो ब्राह्मणपदोपात्तपुंलिङ्गाविवक्षयैव यथा सिध्यति तद्वत्सुरापीत्यत्र स्त्रीलिङ्गाविवक्षयैव पुंसः संग्रहोऽपि सिद्ध इति पुंलिङ्गेन विग्रहो न विरुद्ध इत्याह—ग्रहैकत्ववदविवक्षा युक्तेति । अयं भावः—'दशापवित्रेण ग्रहं संमार्ष्टि' इति सोमे श्रूयते । दशापवित्रं वासःखण्डः । संमार्जनं संक्षालनम् । ग्रहः सोमरसपानपात्रविशेषः । ग्रहमुद्दिश्य संमार्गोऽनेन विधीयते । तत्र ग्रहमिति ग्रहपदोत्तरमेकवचनस्य श्रुतत्वादुपात्तस्य च त्यागे कारणाभावाद्विवक्षितमेकत्वं प्रकृत्यर्थे ग्रहेऽन्वेतव्यम् । ततश्चैकत्वविशिष्टं ग्रहं संमृज्यान्न सर्वानिति वाक्यार्थपर्यवसानादुद्देश्यकोटावेकत्वस्य निवेश इति प्राप्ते ब्रूमः—'प्राजापत्या नव ग्रहाः' इति शाखान्तरविहितान्नव ग्रहानुद्दिश्य संस्कारः संमार्गो विधीयत इति तत्र श्रुतमप्येकत्वं नोद्देश्यकोटौ निवेशयितुं शक्यते । शाखान्तरे संख्यान्तरान्विततया ग्रहाणां विहितत्वात् । यदि च तत्र श्रुतमेकत्वं विवक्ष्येत तदा तदपि विधेयं स्यात् । ततश्च वाक्यभेदप्रसङ्गो वचनव्यक्तिभेदात् । यो ग्रहस्तं संमार्ष्टि तं चैकमिति । अतः

तु भर्तृघ्नीकामगासमभिव्याहारेण प्रयोगोपपत्तेर्ब्राह्मणः सुरां न पिबेदित्यादिनिषेधेषु च टीकोक्तलिङ्गाविवक्षाद्योतनेन ताहग्द्विजातिभार्याशूद्रोपसंग्रहद्योतनेन च सार्थक्यादग्रहैकत्ववदविवक्षा युक्ता । तस्मान्मरणाभिसंधिना दर्पेण तदनादरेण वा शास्त्राभ्यनुज्ञां विना चण्डालजलादिभिर्ये मृतास्तेषामेवायं सर्वत एवाऽऽत्मानं गोपायेदिति विधेः पूर्वोक्त*निषेधस्य वाऽतिक्रमजनितदोषनिमित्त आशौचोर्ध्वदैहिकप्रतिषेधः । +सकलविधिनिषेधातिक्रमजदोषस्य न तन्निमित्तत्वं किंतु कस्यचिदेवेति तु शास्त्रैकसमधिगम्यत्वाद्यथाशास्त्रमित्येवंतत्सर्वमभिसंधायोक्तं दोषादिति । तथा च ब्रह्मपुराणे—

शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रियाजलैः ।
सुदूरात्परिहर्तव्यः कुर्वन्क्रीडां मृतस्तु यः ॥
नागानां विप्रियं कुर्वन्दग्धश्चाप्यथ विद्युता ।
निगृहीतः स्वयं राज्ञा चौर्यदोषेण कुत्रचित् ॥
परदाररमन्तश्च द्वेषात्तत्पतिभिर्हताः ।

---

कारणाच्छ्रुतमप्येत्वमविवक्षितमित्युच्यते । तद्वत्प्रकृतेऽपि 'ब्राह्मणः सुरां न पिबेत्' इति निषेधविधिसिद्धां लिङ्गानन्वितब्राह्मणत्वावच्छिन्नसुरापानकर्तृव्यक्तिमुद्दिश्य तत्संबन्धि श्राद्धादिनिषेधात्सुरापानकर्तृव्यक्तेर्लिङ्गाभावावरुद्धत्वेन तत्र सुरापानकर्तृव्यक्तौ स्त्रीलिङ्गान्वयस्य बाधितत्वेन श्रुतमपि स्त्रीलिङ्गं नोद्देश्यकोटौ प्रवेष्टुमीष्टे । अतस्तदपि विधेयं स्यात् । ततश्च वाक्यभेदः प्रसज्येत । ब्राह्मणत्वावच्छिन्नसुरापानकर्तृव्यक्तेर्मृतायाः श्राद्धादि न कुर्यात्तस्याश्च स्त्रीलिङ्गविशिष्टाया इति । अतः श्रुतमपि सुरापीत्यत्र स्त्रीलिङ्गं न विवक्षितम् । तथा च 'पाखण्ड्यनाश्रिताः.... सुराप्य आत्मघातिन्यः.......' इति याज्ञवल्क्यस्मृतिमुपजीव्य प्रवृत्तत्रिंशच्छ्लोकीघटकैकोनविंशश्लोकगतसुरापेयशब्दे सुरा पेया येषामिति पुंलिङ्गेन विग्रहो न विरुद्ध इति तात्पर्यम् ।

* पूर्वोक्तेति । न संशयमभ्यापद्येत तस्मादु ह न पुरायुषः स्वःकामी प्रेयात्' इति पूर्वोक्तेत्यर्थः ।

+ नन्वाशौचोर्ध्वदैहिकप्रतिषेधस्य विधिनिषेधातिक्रमजनितदोषप्रयुक्तत्वमभिहितम् । तत्र दोषजनकातिक्रमणं च 'सर्वत एवाऽऽत्मानं गोपायेत्' 'न संशयमभ्यापद्येत' इत्येवं कस्यचिदेव विधेर्निषेधस्य वाऽपेक्षितं न 'अहरहः संध्यामुपासीत' 'न हिंस्यात्सर्वा भूतानि' इत्येवमादीनां सकलविधिनिषेधानामित्यत्र किं प्रमाणमिति तत्राऽऽह—सकलविधीत्यादि ।

असमानैश्च संकीर्णैश्चण्डालाद्यैश्च विग्रहम् ॥
कृत्वा तैर्निहतास्तांश्च चण्डालादीन्समाश्रिताः ।
शस्त्राग्निगरदाश्चैव पाखण्डाः क्रूरबुद्धयः ॥
क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् ।
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ॥
कुशिल्पजीविनो ये च सूनालंकारधारिणः ।
मुखेभगास्तु ये केचित्क्लीबप्राया नपुंसकाः ॥
ब्रह्मदण्डहता ये च ये चापि ब्राह्मणैर्हताः ।
महापातकिनो ये च पतिताः* स्ते प्रकीर्तिताः ॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसंचयः ।
नाश्रुपातश्च पिण्डो वा कार्यं श्राद्धादिकं क्वचित् ॥
एतानि पतितानां तु यः करोति विमोहितः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्नचान्यथा ॥ इति ।

व्यालो दुष्टगजः । नागाः सर्पाः । चौर्येति साहसादेरुपलक्षणम् । स्वमते स्वपक्षाः(?) । क्रोधादिति शोकादेरुपलक्षणम् । मरणाभिसंधभावे विधिर्विपर्ययं पूर्वमुक्तमधुना तत्सद्भाव उच्यत इति न पौनरुक्त्यम् । प्रायो महाप्रस्थानम् । कुशिल्पजीविनोऽनापद्यपि निषिद्धचर्मकारादिशिल्पोपजीविनः । सूना प्राणिवधस्थानं तदलंकारास्तदुपकरणानि शस्त्रादीनि धारयन्ति तदनर्हास्तत्राधिकृता इति यावत् । मुखेभगा इत्ययोनौ रेतःसेकनिषेधात् । क्लीबेषु पतितत्वोक्तिर्भूम्ना (?) । यद्वौर्ध्वदेहिक देवतात्वायोग्यत्वरूपं पातित्यं प्रकृते मरणोत्तरकालीनं विवक्षितं न तु द्विजातिकर्महान्यापादकपापवत्त्वरूपं पूर्वकालीनम् । ब्रह्मदण्डः शापः । अकृत्यादिनोत्पादितहन्तृक्रोधत्वेन हताः । ये च ब्राह्मणैः साक्षाद्धताः । महापातकिग्रहणं गौतमोक्तानामतिपातक्यादीनां—

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुंगि+तोपगता च या ॥

---

* पतितास्त इति । अत्र सर्वत्र बुद्धिपूर्वं संभावितमरणेषु दुष्टकार्येषु प्रवृत्तत्वेनाऽऽत्मघातित्वात्पतितत्वमिति तात्पर्यम् ।

+ जुंगितेति । आदौ जुंगिता पश्चादुपगतेति पूर्वकालैकेति समासः । जुङ्गिता त्यक्ता । 'युगि, जुगि, बुगि वर्जने' इति पाणिनिस्मृतेः । त्यक्ता सती स्वातन्त्र्येण कियन्तमपि कालं बहिरुषित्वा पुनः स्वयंप्राप्ता तावदीत्यर्थः ।

इत्युक्तानां च पतितानाम्*मनाश्रितानां चोपलक्षणम् । पूर्वोक्तसर्वार्थसंग्राहकं स्मृत्यन्तरवचनमपि—

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया । इति ।

मनुरपि—वृथासंकरजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रिया ।
+पाखण्डमाश्रितानां च चरन्तीनां च कामतः ।
गर्भभर्तृद्रुहां चैव सुरापीणां च योषिताम् ॥ इति ।

वृथाजाता अनाश्रमिणः । दंपतीसाध्यकर्मानधिकारात् । संकरजाता भिन्नवर्णस्त्री×पुरुषजाताः । ते च = प्रतिलोमजा एव । ÷ निन्दितवृथाजातैः सह द्वंद्वात् । ≈ प्रव्रज्यासु तिष्ठतां संन्यासिनाम् । यत्तु बाह्यप्रव्रज्यानां कापालिकदिगम्बरादिदर्शनभेदेन बहुत्वाद्बहुवचनोपपत्तेरत्र ग्रहणमित्युक्तं मेधातिथिना तत्पाखण्डमाश्रितानां चेत्यनेन पौनरुक्त्यापत्ते◡रुपेक्ष्यम् । बहु=वचनं तु दर्शनभेदाभावेऽपि हंसपरमहंसैक-

---

* अनाश्रितानामिति । सत्यप्यधिकारेऽनाश्रमिणाम् ।

+ ननु प्रव्रज्यास्विति श्रुतबहुत्वान्यथानुपपत्त्या वेदबाह्यरक्तपटधारणादयः प्रव्रज्या अत्र ग्राह्याः । तासां बहुत्वात् । इति मेधातिथिमतं दूषयितुमाह—पाखण्डमाश्रितानां चेति ।

× भिन्नवर्णेति । मिथोऽसमानजातीयस्त्रीपुंसोत्पन्ना इत्यर्थः ।

= प्रतिलोमजा इति । ब्राह्मण्यां क्षत्रियवैश्यशूद्रैरुत्पादिता यथाक्रमं सूतवैदेहिकचाण्डालाः । क्षत्रियायां वैश्यशूद्राभ्यां यथाक्रममुत्पादितौ मागधक्षत्तारौ । वैश्यायां शूद्रेणोत्पादित आयोगवश्चेत्येते षट्प्रतिलोमजाः । तत्र चाण्डालः सर्वधर्मबहिष्कृतः ।

÷ ननु संकरजातशब्देन प्रतिलोमजा इवानुलोमजा अपि कुतो न गृह्यन्ते, तेषामपि संकरजातत्वाविशेषादित्यत आह—निन्दितवृथेति । मूर्धावसिक्तादीनां षण्णामनुलोमजानां तु मातृजातीयत्वादधिकारित्वाच्च निन्दितत्वाभावः ।

≈ प्रव्रज्यास्विति । परमहंसत्रिदण्डैकदण्डादिभेदेन भिन्नासु वेदोदितप्रव्रज्यासु तिष्ठतां वर्तमानानां वेदोक्तसंन्यासिनामित्यर्थः ।

◡ उपेक्ष्यमिति । शास्त्रपरित्यागेन श्रुतिबाह्यदर्शनाश्रयं नरशिरःकपालरक्ताम्बरादिधारणं पाखण्डमिति हि तत्र तेनैवोक्तत्वादिति भावः ।

= ननु प्रव्रज्याशब्देन वेदबाह्यप्रव्रज्याग्रहणस्य पुनरुक्तिदोषग्रस्तत्वादयुक्तत्वेन

दण्डत्रिदण्डादिभेदाद्वैदिकीष्वप्युपपन्नम् । * अत एव 'त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते' इति त्रिदण्डग्रहणमुप+लक्षणम् । निन्दित×साहचर्य-

---

वेदोदितप्रव्रज्याग्रहणे तु बहुवचनं नाञ्जसोपपद्यत इत्याशङ्कां निराकरोति—बहुवचनं त्विति ।

* अत एवेति । वैदिकीनां प्रव्रज्यानां हंसपरमहंसत्रिदण्डैकदण्डादिभेदेन बहुत्वात्प्रव्रज्यास्विति बहुवचनेन तासां सर्वासां संग्रहादेव ।

+ उपलक्षणमिति । 'प्रव्रज्यासु च तिष्ठताम्' इति मनुवचनेन हंसपरमहंसादिसकलवेदविहितप्रव्रज्यावतामाशौचाद्यौर्ध्वदेहिकनिवृत्तिमभिधाय तत्र किं कारणमिति जिज्ञासायामाशौचादिप्रयोजकप्रेतत्वानुत्पत्तिरित्यभिधातुमिदं त्रिदण्डग्रहणादेवेति वचनं प्रवृत्तम् । प्रेतत्वानुत्पत्तौ च त्रिदण्डग्रहणं हेतुत्वेन निर्दिष्टम् । तत्र यदि प्रेतत्वानुत्पत्तौ त्रिदण्डग्रहणमेकमेव कारणं स्यात्तर्हि मनुवचने प्रव्रज्यास्विति बहुवचनेन हंसपरमहंसादिसकलप्रव्रज्याः संगृह्य वैदिकप्रव्रज्यावतां सर्वेषामुदकक्रियोपलक्षितौर्ध्वदेहिकनिवृत्त्यभिधानमनुपपन्नं स्यात् । अतस्त्रिदण्डग्रहणं वैदिकप्रव्रज्यात्वाविशेषाद्धंसादिसकलवैदिकप्रव्रज्योपलक्षणमित्यवश्यं मन्तव्यमित्यर्थः ।

× ननु निन्दितवृथासंकरजातसाहचर्यात्प्रव्रज्याशब्देन श्रुतिबाह्यत्वेन निन्दितानामेव रक्ताम्बरधारणादिप्रव्रज्यानां ग्रहणमुचितमित्याशङ्कां निराकरोति—निन्दितसाहचर्येति । पदान्तरार्थसाहचर्यं पदान्तरार्थनियमनप्रयोजकं तत्र भवति यत्र साहचर्येण पदान्तरार्थनियमने न किंचिद्बाधकं प्रत्यक्षादिकं परिदृश्येत । बाधकसत्त्वे तु केवलं साहचर्यं न किमपि कर्तुं शक्नोति । किंतु विफलमेवेति भावः । प्रकृते वैदिकप्रव्रज्याविशेषत्रिदण्डग्रहणहेतुकप्रेतत्वानुत्पत्तिश्रवणं निन्दितप्रव्रज्याग्रहणे प्रतिबन्धकम् । अनेन हि प्रेतत्वानुत्पत्तिकथनेन त्रिदण्डोपलक्षितवेदविहिता हंसपरमहंसादिप्रव्रज्याः प्रशस्यन्ते । इत्थं महाभागाः प्रव्रज्या वैदिक्यो यस्ता अनुभवन्मृतोऽपि नैव प्रेतत्वमनुभवतीति । तथा च निन्दितानिन्दितयोर्द्विविधयोः प्रव्रज्ययोर्मध्ये कीदृश्याः प्रव्रज्याया ग्रहणं कर्तव्यमिति विचारणायां प्रशंसिताया एव प्रव्रज्याया ग्रहणमुचितम्, नतु निन्दितायाः । तस्या निषिद्धत्वात् । प्रशंसिता च वैदिक्येव । तथा च निन्दितप्रव्रज्याग्रहणे वैदिकप्रव्रज्याप्रशंसकं वचनमेव प्रतिबन्धकं भवति । प्रशंसितायाः प्रव्रज्याया ग्रहणे सति तदवस्थाविशिष्टस्य मरणेऽपि तत्र प्रेतत्वानुत्पत्त्या प्रेतत्वप्रयुक्ताया उदकादिक्रियाया अप्यभावः सिध्यति नत्वाहत्य विधेय इत्यपरमनुकूलम् । एतेन वृथासंकरजातानामित्यत्रत्यस्य समासगतस्यापि वृथाशब्दस्य प्रव्रज्यास्वित्यत्र संबन्धं कृत्वा निष्फलासु प्रेतत्वामु-

मात्रं तु श्रुतिविरोधेऽकिंचित्करम् । अत एव वृथाशब्दान्वयेन तत्परत्वं वाचस्पत्याद्युक्तमप्ययुक्तम् । * आत्मत्यागस्य तु वाक्या+न्तरबलाद्-शास्त्रीयस्य ग्रहणं नतु वृथाशब्दान्वयात् । × व्यवायान्नानुषज्येतेति

त्पत्तिरूपफलानाधायिकासु प्रव्रज्यास्विति वाचस्पत्यादिभिः कैश्चित्पण्डितैर्व्याख्यातम् । रक्ताम्बरधारणादयः प्रव्रज्या वेदबाह्यत्वेन निन्दितत्वान्निष्फलाः प्रेतत्वानुत्पत्तिरूपफलानुपकारिण्यः । प्रेतत्वानुत्पत्तिरूपफलसंबन्धबोधके स्मृतिवचने त्रिदण्डोपलक्षितानां वैदिकीनामेव प्रव्रज्यानां संबन्धस्य श्रवणाच्च । अतस्ता एव गृह्यन्ते, नतु वैदिक्यो हंसपरमहंसादयः । तासां वेदोदितत्वादनिन्दितत्वान्मोक्षहेतुज्ञानोपयोगित्वात्प्रेतत्वानुत्पत्तिरूपफलसंबन्धश्रवणाच्च फलवत्त्वादिति तदपि निरस्तं वेदितव्यम् । प्रव्रज्यास्वित्यत्र वृथाशब्दस्यान्वये प्रमाणाभावात् ।:।:वृथाशब्दस्य समासगतत्वेनान्वेयस्य व्यवहितत्वेन च तादृशान्वयस्यातिदुर्वचत्वाच्चेति भावः । यद्वा यद्यत्र निन्दितप्रव्रज्या अभीष्टाः स्युश्चेदुत्तरश्लोकस्थेन पाखण्डग्रहणेनैव तासां संग्रहे सिद्धे यदत्र प्रव्रज्याशब्दश्रवणं तदनुपपन्नमिति तद्विरोधादेवात्र न वेदबाह्याः प्रवृज्या इष्टा दृश्यन्ते किंतु वैदिक्य एवेति भाव इति व्याख्येयम् ।

* ननु 'आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रिया' इत्यत्र शास्त्रविहितात्मत्यागिव्यावृत्तये वृथाशब्दान्वयस्याऽऽवश्यकत्वम् । अन्यथा शास्त्रीयाशास्त्रीययोरुभयोरात्मत्यागिनोर्ग्रहणापत्तिः । तथा च मध्येऽपि नाम प्रव्रज्यास्वित्यत्र तदन्वयस्यावर्जनीयतया बलान्निन्दितप्रव्रज्याया एव ग्रहणं प्राप्नोतीत्यत आह—आत्मत्यागस्यत्विति ।

+ वाक्यान्तरबलादिति । प्रयागवटशाखायां देहत्यागं करोति यः । उत्तमान्प्राप्नुयाल्लोकान्नाऽऽत्मघाती भवेत्क्वचित् ॥ इत्याद्यात्महत्यादोषनिषेधकवचनान्तरसामर्थ्यादित्यर्थः:।

× व्यवायादिति । 'व्यवायान्नानुषज्येत' (पू०मी०अ०२पा०१सू०४९) व्यवहितत्वान्न संबध्येतेति तदर्थः । अयं भावः—'सं ते प्राणो वातेन गच्छताम्, समङ्गानि यजत्रैः, संयज्ञपतिराशिषा' इत्येवं मन्त्रोऽग्नीषोमीयपशौ श्रूयते । तत्र 'यज्ञपतिः' इत्यस्मिंस्तृतीये मन्त्रे समित्युपसर्गस्य क्रियापदाकाङ्क्षायां प्रथममन्त्रगतस्य गच्छतामिति पदस्यैकवचनान्तस्य यज्ञपतिशब्देनान्वेतुं योग्यत्वात्पूर्ववद्बुद्धिस्थत्वेन संनिहितत्वात्क्रियापदं संबध्यत इति पूर्वपक्षं कृत्वा 'समङ्गानि' इति मध्यममन्त्रे बहुवचनान्तेन 'अङ्गानि' इत्यनेनान्वेतुमयोग्यत्वात्तद्व्यवायेन बुद्धिसंनिधयभावान्नास्ति संबन्ध इति सिद्धान्तितम् । तद्वत्प्रकृते 'प्रव्रज्यासु' इति मध्यमवाक्येऽन्वयस्य बाधितत्वात्तद्व्यवधाने नास्त्यन्वयो वृथाशब्दस्याऽऽत्मनस्त्यागिनां चैवेत्यत्रेति बोध्यम् ।

न्यायात् । अत्र च सर्वत्र दाहादिनिषेधेनाऽऽशौचानिषेधोऽप्युपलक्षितो द्रष्टव्यः ।

* नाऽऽशौचं नोदकं नाश्रु न दाहाद्यन्त्यकर्म च ।
ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् ॥

इति यमस्मरणात् । स्नेहादिनैषां दाहादिकरणे तन्निमित्तं पूर्वोक्तमाशौचं प्रायश्चित्तं च कर्तव्यम् । तत्र ब्रह्मपुराणोक्तं तप्तकृच्छ्रद्वयं बुद्धिपूर्वसमुदितकरणे । + एतानीति श्रवणात् । विमोहित इति तु स्नेहाद्यभिप्रायं नतु विषयाज्ञानाभिप्रायम् । × अत एव विमोहित इति = णिचः प्रयोगः । अबुद्धिपूर्वे तु तस्मिन्—

कृत्वाऽग्निमुदकं स्नानं स्पर्शनं वहनं कथाम् ।
रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुध्यति ॥

इति द्रष्टव्यम् । ÷ चशब्दादस्यापि समुदितविषयत्वम् । स्नानं शवस्नापनम् । रज्जुच्छेदश्च क्वाचित्कः । तप्तकृच्छ्रश्चात्र ∽ मनूक्तो द्वाद-

---

* दाहादिनिषेधेनाऽऽशौचनिषेधस्याप्युपलक्षणे प्रमाणं प्रदर्शयितुमाह—नाऽऽशौचमिति ।

+ एतानीति । 'एतानि पतितानां तु यः करोति विमोहितः' इति ब्रह्मपुराणस्थेन कृतैकशेषेणैतच्छब्देन बहुवचनान्तेन सहविवक्षावगमाद्युगपदेतानि यः कुर्यादित्यर्थप्रतीतौ समुच्चयस्य फलितत्वादित्यर्थः ।

× अत एवेति । विमोहित इत्यस्य विषयाज्ञानार्थकत्वाभावादेव ।

= णिच इति । यदि च विमोहित इत्यस्य विषयाज्ञानार्थकत्वमभीष्टं स्यात्तदा णिचः प्रयोगं न कुर्यात् । किंतु विमोहत इत्येव पठेत् । एवं सति विमोहित इति यण्णिचं प्रयुनक्ति ततो ज्ञायते पतितानामुदकदानादिक्रियाकरणे निषेधे सत्यपि यद्यहं पतितस्यास्याऽऽप्तस्य मृतस्योदकदानादिक्रिया न करिष्यामि तर्ह्यस्य परलोकगतिर्न भविष्यति किंतु नरक एव स्थितिः स्यादिति स्नेहादिवशो भूत्वा क्रियां करोति स आत्मनः शुद्धयर्थं तप्तकृच्छ्रद्वयं प्रायश्चित्तं कुर्यादिति । एवं च विमोहित इत्यस्य स्नेहाद्यभिप्रायकत्वं क्रियाकर्तुश्च बुद्धिपूर्वकत्वं फलतीत्यर्थः । तथा चैतानि [illegible]बहुवचनश्रवणविमोहित इति णिच्प्रयोगाभ्यां बुद्धिपूर्वकसमुदितक्रियाकरणे तप्तकृच्छ्रद्वयं विधीयत इति यावत् ।

÷ चशब्दादिति । चशब्दस्य समुच्चयार्थत्वं लोके प्रसिद्धमेवेति चशब्दघटितवाक्यान्तराणां दाहादिसमुदितक्रियाविषयत्वं सिध्यति ।

∽ मनूक्त इति । तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् । प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः ॥ ( म. स्मृ. ११ । २१४ ) इति मनूक्त इत्यर्थः ।

ग्राहसाध्यः । स्पर्शाश्रुपातव्यतिरिक्तदाहादिप्रत्येककरणे तु बुद्धिपूर्वे —

एषामन्यतमं प्रेतं यो वहेत दहेत वा ।
कटोदकक्रियां कृत्वा कृच्छ्रं सांतपनं चरेत् ॥

इति संवर्तोक्तं द्रष्टव्यम् । सांतपनं चात्र * जाबालोक्तं सप्ताहसाध्यम् । अबुद्धिपूर्वे तु बन्धने छेदने दहने वा मासं भैक्षाहारस्त्रिषवणं चेति सुमन्तूक्तम् । स्पर्शाश्रुपातयोस्तु प्रत्येककरणे—

तच्छवं केवलं स्पृष्ट्वाश्रु वा पातितं यदि ।
पूर्वोक्तानामकारी चेदेकरात्रमभोजनम् ॥

इति द्रष्टव्यम् । वचनत्रयस्यापि + वाशब्दश्रवणात्प्रत्येकविषयत्वम् । मिताक्षरोक्ता तु × व्यवस्था वचनाननुगुणत्वादुपेक्षिता । यद्यपि च—

* जाबालोक्तमिति । गोमूत्रं गोमयं क्षीरं दधिः सर्पिः कुशोदकम् । एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम् । कृच्छ्रं सांतपनं नाम सर्वपापप्रणाशनम् ॥ इति जाबालोक्तमित्यर्थः ।

+ वाशब्देति । 'वा स्याद्विकल्पोपमयोः' इत्यभिधानात्पाक्षिकत्वार्थकवाशब्दघटितवचनान्तराणां प्रत्येकविषयत्वमुचितमित्यर्थः ।

× व्यवस्थेति । इत्थं हि 'पाखण्डच्यनाश्रिताः स्तेनाः' इति श्लोकव्याख्यानवसरे मिताक्षरायामुक्तम्—'कृत्वाऽग्निमुदकम्' इति वचनं प्रत्येकं बुद्धिपूर्वके वेदितव्यम् । अबुद्धिपूर्वकरणे तु—'एषामन्यतम' इति संवर्तोक्तं द्रष्टव्यमिति व्यवस्थोक्तेत्यर्थः । तत्र 'कृत्वाऽग्निमुदकम्' इति वचनस्य चशब्दघटितत्वेन समुच्चयविषयत्वं सिध्यति । तथा बुद्धिपूर्वकसमुदितक्रियाकरणे तप्तकृच्छ्रद्वयस्याभिधानेन तदपेक्षया समुच्चयविषये लघुभूतैकतप्तकृच्छ्रविधायकयैतद्वचनस्याबुद्धिपूर्वकत्वकल्पनं विनाऽसंगत्यापत्तिरिति मिताक्षरायां वर्ण्यमानं प्रत्येकविषयत्वं बुद्धिपूर्वकत्वं चोक्तवचनाननुगुणमिति स्पष्टमेव । द्वितीये तु दहनवहनाद्येकैकक्रियाकरणे संवर्तेन सांतपनकृच्छ्रं गुरुप्रायश्चित्तमभिहितम् । सुमन्तुना त्वेकैकक्रियाकरण एव मासपर्यन्तं भैक्षाहारूपं लघु प्रायश्चित्तमुक्तम् । तत्र समान एव विषये गुरुलघुनोः प्रायश्चित्तयोर्विधानानुपपत्त्या प्रायश्चित्तगतगुरुलघुतानुसारेण तद्विषयस्यापि गुरुलघुताकल्पनस्याऽऽवश्यकत्वेन भैक्षाहारस्य प्रायश्चित्तस्य सुकरत्वात्सांतपनापेक्षया लघुत्वात्तद्विषयस्यैवैकैकक्रियाकरणस्याबुद्धिपूर्वकत्वानुसंधानेनागत्या लघुत्वकल्पनमुचितं भवतीति भैक्षाहारापेक्षया सांतपनस्य दुष्करत्वेन गुरुत्वात्तदनुसारेण तद्विषयस्यापि बुद्धिपूर्वकत्वानुसंधानेनैव गुरुत्वकल्पनस्यार्थायातत्वेन बुद्धिपूर्वकैकैकक्रियाकरणे सांतपनप्रवृत्तिः सिध्यति । तस्मादबुद्धिपूर्वकैकैकक्रियाकरणे सांतपनप्रवृत्तिं प्रतिपादयन्ती मिताक्षरोक्ता व्यवस्था वचनाननुरूपेति सोपेक्षणीयेत्यर्थः ।

शब्दवाशब्दाद्युक्तं सापेक्षत्वनिरपेक्षत्वमुद्देश्यविशेषणत्वादविवक्षितं तथाऽपि व्यवस्थापेक्षायां द्योतकं भवत्येव । प्रमादमृतानां त्वाशौचादिकं भवत्येव । तथा चाङ्गिराः—

अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः ।
तस्याऽऽशौचं विधातव्यं कर्तव्या चोदकक्रिया । इति ॥

तथाऽऽशौचं प्रत्यक्षशवदाहे पूर्णमेव । विशेषानुक्तेः । प्रतिकृतिदाहे तु पूर्वोक्तम् । उदकग्रहणं चोपलक्षणम् । तेषां च दाहादि, प्रमादमरणस्य दुर्मरणत्वात्तन्निमित्तप्रायश्चित्तपूर्वकं कर्तव्यम् । तानि च प्रायश्चित्तानि—

व्याघ्रेण निहते प्रेते परकन्यां विवाहयेदित्यादिना
एवं कृते विधाने च विदध्यादौर्ध्वदेहिकमित्यन्तेन

शातातपीये गृह्यकारिकायां चोक्तानि देवयाज्ञिकादिनिबन्धेषु द्रष्टव्यानि । बहुत्वान्नोच्यन्ते । तथा ये वातजरावेशादिनाऽऽशौचाचमनाद्यावश्यककर्मानुष्ठानासमर्था अचिकित्स्यकुष्ठक्षयादिमहाव्याधिगृहीताश्च भृग्वग्न्यादिभिर्बुद्धिपूर्वं म्रियन्ते तेषामपि विहितमरणत्वेन दोषाभावात्प्रायमाशौचादिनिषेधः । किंतु तेषां त्रिरात्राशौचमौर्ध्वदेहिकं च भवत्येव । तथा च वृद्धगार्ग्यः—

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः ।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥ इति ।

---

* ननु निरुक्तवचनयोश्चशब्देन वाशब्देन चोक्तं सापेक्षत्वं ( समुदितत्वं ) निरपेक्षत्वं ( प्रत्येकत्वं ) च व्यस्तसमस्तदहनवहनादिक्रियारूपोद्देश्यगतत्वेन ग्रहैकत्ववदविवक्षितं भवतीति कथं तद्द्योतकचवाशब्दघटितवचनयोः समुदितासमुदितविषयकत्वं व्यवस्थापयितुं शक्यमित्याशङ्कां निराकर्तुमाह—यद्यपि चेत्यादि द्योतकं भवत्येवेत्यन्तम् । अयं भावः—यद्यपि चवाशब्दद्योतितस्य सापेक्षनिरपेक्षत्वस्योद्देश्यविशेषणत्वेनाविवक्षितत्वादन्वयाभावेन वाक्यार्थबोधघटकत्वं नास्ति तथाऽपि स्थलविशेषाकाङ्क्षायां तत्प्रदर्शनेनैव तस्य सप्रयोजनत्वाद्वचनप्रवृत्तौ व्यवस्थापकं भवति । अन्यथा तदुपादानं सर्वथाऽपार्थकमेव स्यादित्यर्थः । ग्रहमित्यत्राप्येकवचनस्य ' अपदं न प्रयुञ्जीत ' इति विधेयाप्रवृत्तिद्वाराप्रयोगार्हत्वसंपादनेनापि चारितार्थ्यस्य सुवचत्वादन्वयाभावेऽप्येकग्रहविषयकमिदं संमार्जनमित्यत्रैकवचनं द्योतकं स्यादिति न शङ्कितव्यम् ।

ब्रह्मपुराणेऽपि--

दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि ।
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा ॥
अगाधतोयराशिं च भृगोः पतनमेव च ।
गच्छेन्महापथं वाऽपि तुषारगिरिमादरात् ॥
प्रयागवटशाखाग्राद्देहत्यागं करोति च ।
स्वयं देहविनाशस्य काले प्राप्ते महामतिः ॥
उत्तमान्प्राप्नुयाल्लोकान्नाऽऽत्मघाती भवेत्क्वचित् ।
महापापक्षयात्स्वर्गे दिव्यान्भोगान्समश्नुते ॥
एतेषामधिकारस्तु तपसां सर्वजन्तुषु ।
नराणामथ नारीणां सर्ववर्णेषु सर्वदा ॥
ईदृशं मृतकं येषां जीवतां कुत्र चिद्भवेत् ।
आशौचं स्यात्त्र्यहं तेषां वज्रानलहते तथा ॥ इति ।

वज्रानलहते तथेत्येतदपि वृद्धादीनामेव तादृशमरणप्रकारविधानपूर्वकं त्र्यहाशौचविधायकम् । ※ दर्पादिना प्रमादेन वा मृतानामाशौचाभाव-संपूर्णाशौचयोरुक्तत्वात् । अग्निजलप्रविष्टानां भृगुसंग्रामदेशान्तरमृतानां च त्रिरात्रेण शुद्धिरित्यादिकाश्यपादिवचनान्यपि वृद्धादिविषयाण्येव । +वृद्धगार्ग्यब्राह्माद्येकवाक्य(त्वा)त् । ये त्वप्राप्तमरणकाला अपि फल-कामनया प्रयागसर्वस्वा(स्वर्गद्वा) रादौ विहितोपायेन म्रियन्ते स्त्रियश्च भर्तृमरणे, तेषां संपूर्णमेवाऽऽशौचमौर्ध्वदेहिकं च । विहितमरणत्वेन निषेधाप्रवृत्तेस्त्रिरात्रस्य च ×प्राप्तमृत्युकालविषयत्वात् । अत एव मरणा-न्तिकप्रायश्चित्तमृतानामप्येवम् । यस्य तु प्राणान्तिकप्रायश्चित्तं स मृतः

---

※ दर्पादिनेति । 'चाण्डालादुदकात्सर्पात्०' 'प्रायोनाशकशस्त्राग्निविषोदको-द्बन्धनप्रपतनैश्चेच्छताम्' इत्यादिभिर्गौतमाङ्गिरोवचनैर्दर्पेण मृतानामाशौचाभावस्य तथा—'अथ कश्चित्प्रमादेन' इत्यादिना प्रमादमृतस्य संपूर्णाशौचस्य चोक्त-त्वादित्यर्थः ।

+ वृद्धगार्ग्येति । वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः' इत्याद्येकवा-क्यत्वादित्यर्थः । अन्यथा वाक्यभेदापत्तिर्मूलभूतश्रुतिद्वयकल्पनेन गौरवापत्ति-श्चेति भावः ।

× प्राप्तमृत्युकालेति । 'स्वयं देहविनाशस्य प्राप्ते काले महामतिः' इति तत्रोक्तत्वादिति भावः ।

शुध्येत्सवर्णेष्येव तस्मिन्नुदकादीनि प्रेतकर्माणि कुर्युरिति गौतमवचनाच्च । यश्च प्रक्रान्तप्रायश्चित्तोऽन्तरा म्रियते तस्याप्येवम् ।

प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते ।
पूतस्तदहरेवासाविह लोके परत्र च ॥

इति हारीतवचनाद्दोषाभावात् । युद्धमृतानां तु वच*नात्सद्यःशौचं तदहरेव च सर्वमौर्ध्वदेहिकम् । एक+ रात्रं तु युद्धक्षतेन कालान्तरमृतविषयमित्युक्तम् । अत × एव 'राजक्रोधाच्चायुद्धे' इति गौतमसूत्रे सद्यःशौचविधौ युद्धपर्युदासः कालान्तरमृतविषय = इत्युक्तं मिताक्षरायाम् । हर÷दत्तेन तु द्ध(ह)स्वपाठस्यैव सम्प्र(म्पक्)त्वाङ्गीकारेण दीर्घपाठेऽप्यायुद्धप्रायोधनमित्याङ्ःश्लेषाङ्गीकारेण चकारमनुषज्य ❁ योगविभागेन व्याख्यातम् । डिम्बाहवहतानां च विद्युता पार्थिवेन चेति ◡मनुस्मृत्यनुरोधात् । ≈काश्यपवचने संग्रामप्रमृतस्य त्रिरात्राभिधानं तु⊙ च्छलकातरत्वादिहतविषयम् । क्षत्रधर्महतस्येति सद्यःशौचे विशे+षणात् ।

---

* वचनादिति । शस्त्रेणाभिमुखो यस्तु वध्यते क्षत्रधर्मणा । सद्यः संतिष्ठते यज्ञः सद्यः शौचं विधीयते ॥ इत्यादिवचनादित्यर्थः ।

+ एकरात्रं त्विति । 'आहवेऽपि हतानां च एकरात्रमशौचकम्' इति पराशरोक्तमेकरात्रं त्वित्यर्थः ।

× अत एवेति । एकरात्राशौचविधानस्य युद्धकालक्षतेन कालान्तरमृतविषयत्वादेव ।

= इत्युक्तमिति । याज्ञवल्क्यस्मृतौ प्रायश्चित्ताध्याये 'हतानां नृपगोविप्रैः' इत्याद्येकविंशतितमश्लोकव्याख्यावसरे मिताक्षराकारेण विज्ञानेश्वरेणोक्तमित्यर्थः ।

÷ हरदत्तेनेति । गौतमप्रणीतधर्मसूत्राणां व्याख्या कृतेत्यर्थः ।

❁ योगविभागेनेति । तदिदं योगविभागेन व्याख्यानं गौतमप्रणीतधर्मसूत्रेषु द्वितीयप्रश्ने पञ्चमेऽध्याये नवमदशमसूत्रयोर्द्रष्टव्यम् । चकारमनुषज्य—युद्धे चेति चशब्दं संयोजयेत्यर्थः ।

◡ मनुस्मृतीति । ( अ० ५ श्लो० ९५ ) डिम्बाहवे नृपतिरहितयुद्धम् । तत्र हतानां सद्यःशौचमिति तदर्थानुसारेणेत्यर्थः ।

≈ काश्यपवचन इति । 'भृगुसंग्रामदेशान्तरगतानां गर्भाणां जातदन्तानां त्रिरात्रेण' इति काश्यपवचन इत्यर्थः ।

⊙ छलेति । छलं कपटम् । कातरोऽधीरो व्यसनाकुलो वा ।

+ विशेषणादिति । एवं च च्छलकातरत्वादेः क्षत्रधर्मत्वाभावान्न तादृशप्रकारेण हतस्य सद्यःशौचं, किंतु त्रिरात्रमित्यर्थः ।

*प्राप्तमृत्युकालविषयं वा । भृग्वादिसाहचर्यात् । सर्वं चैतद्दोषा+दित्य-नेन सूचितम् । ×यत्तु दोषादित्यस्य पाखण्डिमात्रान्वयेन कस्यचिद्व्र-स्य व्याख्यानं तदसमर्थसमासापत्तेर्दोषाहेतुकपाखण्डिनामाशौचनिषेधा-नापत्तेर्मूलाभावाच्चोपेक्ष्यम् । =अत एव यतिवनस्थयोः सत्यप्याशौचनिषे-धेऽत्रापाठः । ÷दोषहेतुकतदभावात् । पतितग्रहणं च गोबलीवर्दन्यायेन

---

* प्राप्तमृत्युकालेति । प्राप्तमृत्युकाले आसन्नमरणकालेऽतिवृद्धस्तद्विषयं वा काश्यपोक्तं त्रिरात्रमित्यर्थः । अयं भावः— भृगुपतनेन देशान्तरगमनेन च मृतस्य तस्य प्राप्तमरणकालस्यैव त्रिरात्रं प्रतिपाद्यते । 'स्वयं देहविनाशस्य प्राप्ते काले' इत्युक्तत्वात् । तथा च निरुक्तकाश्यपवचनेन संग्रामहतस्य यत्त्रिरात्रं प्रतिपाद्यते तदपि भृगुदेशान्तररूपपूर्वोत्तरसाहचर्येणाऽऽसन्नमरणकालस्यैव संग्रामहतस्येत्यवधा-र्यत इत्यर्थः ।

+ दोषादिति । यत्र मरणे शास्त्रातिक्रमरूपः कोऽपि दोषस्तादृशमरणस्य दोषापादकत्वात्तत्राऽऽशौचादेः प्रतिबन्धः । यत्र तु न कियानपि दोषः प्रत्युत शास्त्रानुसरणमेव तादृशमरणस्य दोषराहित्येन तत्र यथायथमाशौचं भवत्येव । अत एव प्रमादमृतानां विहितमरणेन मृतानां चाऽऽशौचाद्यस्त्येवेति दोषादिति पदोपादा-नेन सूचितमित्यर्थः ।

× ननु दोषादिति हेतुपञ्चम्यन्तस्य पाखण्डिचौरेत्यादिद्वंद्वघटकपाखण्डिष्वेवान्व-येन दोषहेतुकपाखण्डाश्रितानां मृतानां सतामाशौचादि प्रतिषिध्यते इति व्याख्यातं केनचिद्व्याख्यात्रा । तथा च कथं दोषादित्यस्य प्रमादमरणविहितोपायमरणयोरा-शौचादिसत्त्वसूचकत्वमिति चेत् । उच्यते । दोषादित्यस्य पाखण्डिन्यन्वये पाख-ण्डिनः सापेक्षत्वात्सापेक्षस्य च 'सापेक्षमसमर्थवत्' इति महाभाष्यकारोक्तेः समर्थ-त्वाभावाच्चौरादिभिः समासो न स्यात् । किंच ये केनचिद्दोषेण विनैव पाखण्ड-माश्रितास्ते दोषाहेतुकपाखण्डिनस्तेषामाशौचनिषेधो न स्यात् । एकदेशान्वयकरणे प्रमाणमपि नोपलभ्यते । अतस्तत्तादृशं व्याख्यानमसमञ्जसमित्यनादरणीयमिति प्रति-पादयन्नाह—यत्त्वित्यादि ।

= अत एवेति । दोषादित्यस्य [illegible] येनोक्तव्याख्यानस्योपेक्षणीयत्वेन दोषापादकमरणवतामेव [illegible] मृतान्तानामाशौचनिषेधे हेतुत्वेनात्राभिप्रेत-त्वादेव ।

÷ दोषहेत्विति । शास्त्रातिक्रमरूपदोषनिमित्तकमर[illegible]भावाद्यतिवनस्थयोरत्र श्लोके संग्रहाभाव इत्यर्थः । यदि त्वन्यकृतव्याख्यानादरेण मरणस्य दोषनिमित्तकत्वाभा

ब्रह्महादिव्यतिरिक्तपरम् । *यद्वा पतितेषु ब्रह्मपुराणादावौर्ध्वदेहिकदेवतात्वानर्हत्वेन प्रतिपादितेषु ज्ञातयो नाऽऽशौचाः स्युरित्युक्ते तत्प्रपञ्चः। पतितसुतेत्यादि ब्रह्महादिग्रहणं च गुरुतल्पगाद्युपलक्षणमिति व्याख्येयम् । अयं चाऽऽशौचस्य निषेधो दशाहत्र्यहादिकालावच्छिन्नस्य ।

डिम्बाहवहतानां च विद्युता पार्थिवेन च (म. स्मृ. ५ । ९५ ) ।

हतानां नृपगोविप्रैरन्वक्षं चाऽऽत्मघातिनाम्(या.स्मृ.३ ।२१ ) ।

'गोब्राह्मणहतानामन्वक्षम्' 'राजक्रोधाच्च' 'युद्धे' 'प्रायोनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम्' ( गौ. ध. सू. प्र. २ । ८, ९, १०, ११ )इत्यादिमनुयाज्ञवल्क्यगौतमादिवचनैः स्नानमात्रापनोद्यस्य तस्य प्रतिपादितत्वात् । पतितादीनां चाऽऽत्मघातिभिः सह पाखण्ड्यनाश्रिता इत्याद्येकयोगनिर्देशात् । एवं चाग्निजलगोब्राह्मणादिभिरात्मघाते स्मृतिष्वाशौचाभावसद्यःशौचत्रिरात्रैकरात्ररूपा ये पक्षाः प्रतिपादितास्तेषामेवं व्यवस्था संपन्ना—सद्यःशौचाशौचाभावयोरवैधात्मघातविषयत्वम्। त्रिरात्रस्य वैधवृद्धाद्यात्मघातविषयत्वम् । एकरात्रस्य गवादिजनितक्षतेन कालान्तरमृतविषयत्वमिति । या तु वाचस्पत्यादिभिर्व्यवस्थोक्ताऽप्राप्तमृत्युकालानां मरणान्तिके काम्यकर्मणि मरणे सद्यःशौचम्। तादृशानामेव प्रायश्चित्तरूपैरग्न्यादिभिर्मरणेऽहोरात्रम्। वज्रादि-

---

वेऽप्याशौचनिषेधः प्रतिपिपादयिषितः स्यात्तदाऽत्र यतिवनस्थयोरपि पाठः कर्तव्यः स्यात् । स च न कृत इति ग्रन्थे न्यूनतापत्तिदोषः प्रसज्येतेत्यर्थः ।

~ गोबलीवर्दन्यायेनेति । यथा गावश्च बध्यन्तां बलीवर्दाश्च बध्यन्तामित्युक्ते गोग्रहणेनैव बलीवर्दसंग्रहे सिद्धे पार्थक्येन बलीवर्दग्रहणसमभिव्याहाराद्बलीवर्दव्यतिरिक्तगोपरं गोग्रहणमिति कल्प्यते तद्वत्प्रकृतेऽपि ब्रह्महादिव्यतिरिक्तपरं पतितग्रहणं विज्ञायत इत्यर्थः ।

* ब्रह्मपुराणादावौर्ध्वदेहिककर्मोपयुक्तदेवतात्वानर्हत्वरूपं पातित्यमिति पातित्यलक्षणमुक्तम् । कथमन्यथा क्लीबेषु पतितव्यवहारः संगच्छताम् । तत्र देवतात्वानर्हाः के क इति विशेषजिज्ञासयाऽत्र श्लोके तेषामेव देवतात्वानर्हाणां विशेषरूपेण ( पतितस्वादिविशेषरूपेण ) प्रपञ्चो विस्तारः कथित इत्याह—यद्वेति । अत एव ब्रह्महादिग्रहणं गुरुतल्पगाद्युपलक्षणं बोध्यम् । गुरुतल्पगादीनामप्यौर्ध्वदेहिकदेवतात्वानर्हत्वाविशेषादिति ध्येयम् ।

× प्रतिपादितत्वादिति । एतेषु वचनेषु तत्तत्प्रकारेण मृतेषु सद्यःशौचं प्रतिपादितम् । तत्राकारणिकायाः शुद्धेरसंभवात्सद्यःपदं स्नानपरं वेदितव्यम् । तथा च तद्व-

भिर्मरणे सद्यःशौचम् । साहसेन त्वेभिर्मरण आशौचाद्यभाव इति । सा वचनतदनुग्राहकन्यायाभावादश्रुतवेदमीमांसागन्धानां च तच्छून्यस्याभ्यूहनमात्रस्य यदेव किंचनानूचानोऽभ्यूहत्यार्षमेव तद्भवतीत्येतद्विषयत्वेनाप्रमाणत्वादुपेक्ष्या । तथाऽयमाशौचादिनिषेधस्तदात्वे । संवत्सरादूर्ध्वं तु सर्वेषामौर्ध्वदेहिकादि सर्वं कार्यमेव ।

गोब्राह्मणहतानां च पतितानां तथैव च ।
ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम् ॥

इति षड्विं(त्रिं)शन्मतात् । तच्च नारायणबलिपूर्वकं कार्यम् । तथा च वृद्धयाज्ञवल्क्यच्छागलेयौ—

राजभिर्निहतानां च शृङ्गिदंष्ट्रिसरीसृपैः ।
आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत् ॥
नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ।
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥
तस्मात्तेभ्योऽपि दातव्यमन्नमेव सदक्षिणम् ॥ इति ।

व्यासोऽपि—नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते ।
तस्य शुद्धिकरं कर्म तद्भवेन्नैतदन्यथा ॥ इति ।

शिवं वेति वाशब्दश्चार्थे । द्वितीयादिने शिवोद्देशेनापि पिण्डदानसत्त्वात् । तच्च सकलवैष्णवोक्तप्रकारोपलक्षणं द्रष्टव्यम् । प्राच्यग्रन्थेषु तु—नारायणं समुद्दिश्य शवं यावदिति लिखितम् । तदा नारायणं शवं समुद्दिश्य विष्णुरूपं प्रेतं ध्यात्वेत्यर्थः । विष्णुं बुद्धौ समाकल्प्येत्युक्तत्वात् । नारायणबलिप्रकारश्च वैष्णवेऽभिहितः—

इन्द्रियैरपरित्यक्ता ये च मूढा विषादिनः ।
घातयन्ति स्वमात्मानं चाण्डालादिहताश्च ये ॥
तेषां पुत्राश्च पौत्राश्च दयया समभिप्लुताः ।
यथा श्राद्धं प्रतन्वन्ति विष्णुना वै प्रतिष्ठितम् ॥
तत्सर्वं संप्रवक्ष्यामि नमस्कृत्य स्वयंभुवे ।
एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिमित्यादिना

---

वनोक्ताशौचस्य स्नानमात्रापनोद्यत्वं सिध्यतीत्यर्थः । नहि तादृशस्याऽऽशौचस्यायं निषेधः संभवति । स्नानमात्रापनोद्यस्य तस्यासत्कल्पत्वात् । किंतु दशाहव्यहादिकालावच्छिन्नस्यैव तस्यायं निषेध इति भावः ।

एवं विष्णुमते स्थित्वाऽपो(यो) दद्यादात्मघातिने ।
समुद्धरति तं क्षिप्रं नात्र कार्या विचारणेत्यन्तेन ॥

सर्पहते तु भाद्रपदशुक्लपञ्चमीमारभ्य संवत्सरं यावत्प्रतिशुक्लपञ्चमि यथाक्रममनन्तादिद्वादशनामभिर्नागपूजां विधाय यथाशक्ति ब्राह्मणान्भोजयित्वा प्रतिपञ्चम्युपवासं चतुर्थ्यामेकभक्तपूर्वकं पञ्चम्यां नक्तभोजनं वा कृत्वाऽन्ते सौवर्णं नागं प्रत्यक्षां गां दद्यादिति विशेषो भविष्यपुराणेऽभिहितः—

नागदष्टः पिता यस्य भ्राता वा दुहिताऽपि वा ।
माता पुत्रोऽथवा भर्ता यत्कर्तव्यं तद्वद स्वयमित्यादिना
सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम् ॥
व्यासाय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयानित्यन्तेन ।

अत्र च यद्यपि वैष्णवादावात्मघातिनामेव नारायणबलिरुक्तस्तथाऽपि षट्त्रिंशन्मते पतितमात्रस्य संवत्सरादूर्ध्वमौर्ध्वदेहिकविधानात्तदर्हतासंपादनार्थं प्रायश्चित्तार्हाणां ब्रह्महादीनामपि द्रष्टव्यः । तथा च बौधायनसूत्रम्— अथातो नारायणबलिं व्याख्यास्यामोऽभिशस्तपतितसुरापात्मत्यागिनां ब्राह्मणहतानां चेत्यादि । तथा यद्यपि पूर्वोक्तवचनपर्यालोचनयौर्ध्वदेहिकयोग्यतासंपादने नारायणबलेरेव निरपेक्षसाधनता प्रतीयते तथाऽपि 'जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः' इत्यादियमवचने विषप्रपतनप्रायशस्त्रघातहताश्च य इति पाठानुसारादात्मघातिनां तावत्तेषु मृतेष्वपि तेषामात्मघातनिमित्तं तत्पुत्रादिभिः प्रायश्चित्तमपि कर्तव्यम् । तच्च मिताक्षरापर्यालोचनया यमवाक्ये चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन वेति पाठावगमाच्छक्त्याद्यपेक्षया चान्द्रायणं तप्तकृच्छ्रद्वयं वा । अत एव

कृत्वा चान्द्रायणं पूर्वं क्रिया कार्या यथाविधि ।
नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ॥
अन्नमिष्टं प्रियं चैव विप्रे दद्यात्सदक्षिणम् ।
पिण्डोदकक्रियाः पश्चाद्वृषोत्सर्गादिकं च यत् ॥
एकोद्दिष्टानि कुर्वीत सपिण्डीकरणं तथा ॥

इति हेमाद्र्युदाहृतषट्त्रिंशन्मतवाक्येऽपि केवलं चान्द्रायणमुक्तम् । स्मृतिसारादौ तु द्वयेन चेति पठित्वा समुच्चितमुक्तम् । ग्रन्थकारिकायां तु–

प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः ।
शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः ॥
चाण्डालैर्ब्राह्मणैश्चौरैर्निहतो यत्र कुत्रचित् ।
चान्द्रायणं तप्तकृच्छ्रद्वयं तस्य विशुद्धये ॥
यद्वा कृच्छ्रान्पञ्चदश कृत्वा तु विधिना दहेत् ॥

इत्याद्यभिधाय बुद्धिपूर्वमृतानां तु त्रिंशत्कृच्छ्रं समाचरेदित्युक्तम् । मृत्युविशेषाच्च प्रायश्चित्तविशेषोऽप्युक्तः । इदं चाऽऽत्मघातप्रायश्चित्तं तत्तज्जातिवधप्रायश्चित्तसमुच्चितं कर्तव्यम् । ब्रह्महादीनां प्रायश्चित्तार्हाणां तत्पापक्षयार्थं तद्योग्यं प्रायश्चित्तं कृत्वा नारायणबलिः कार्य इति मदनपारिजातस्मृत्यर्थसारादावुक्तम् । तत्र सर्वत्र प्रमाणं मृग्यम् । पुत्रादिकर्तृकप्रायश्चित्तेन तत्पापक्षयस्य वचनं विनाऽसंभवात् । सत्यपि च पापे नारायणबलिमात्रेण वचनादौर्ध्वदेहिकयोग्यताऽस्तु । अत एव माधवेन—जलाग्निपतने चैव प्रव्रज्यानाशकेषु चेत्यादिपराशरवचने मर्तुमुद्यम्य ततो निवृत्तानामेवेदं प्रायश्चित्तं नतु मृतानां तत्कर्तुरेवाभावादित्युक्तम् । तत्र शस्त्रघातहताश्च य इति वचनबलादात्मघातप्रायश्चित्तं मृतेष्वप्यस्तु । जातिवधपाषण्डित्वादिनिमित्तं तु वचनं विना कथं स्यादित्येषा दिक् । इदं च प्रायश्चित्तपूर्वकं तदपूर्वकं वा नारायणबलिं कृत्वौर्ध्वदेहिकानुष्ठानं प्रायश्चित्तार्हाणां द्रष्टव्यम् । तदनर्हाणां तु ब्रह्मपुराणे प्रकारान्तरमुक्तम्—

पतितस्य तु कारुण्याद्यस्तृप्तिं कर्तुमिच्छति ।
स हि दासीं समाहूय सर्वगां दत्तवेतनाम् ॥
अशुद्धघटहस्तां तां यथावृत्तं ब्रवीत्यपि ।
हे दासि गच्छ मूल्येन तिलानानय सत्वरम् ।
तोयपूर्णं घटं चेमं सतिलं दक्षिणामुखी ।
उपविष्टा तु वामेन चरणेन ततः क्षिप ।
कीर्तयेः पातकी संज्ञां त्वं पिबेति मुहुर्वदेः ।
निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत् ।
एवं कृते भवेत्तृप्तिः पतितानां न चान्यथा ॥ इति ।

येषामप्यौर्ध्वदेहिकं कर्तव्यं तेषामपि सपिण्डीकरणं न कर्तव्यम् ।

गोब्राह्मणहतानां च पतितानां तथैव च ।

व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डना ॥ इति वचनात् ।
ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥

इति श्राद्धप्रकारोपदेशाच्चेति विज्ञानेश्वरः । एवं च पतितादीनां नारायणबल्यादेर्नित्यत्वे श्राद्धप्रकारोपदेशकवचने पतितग्रहणस्य प्रायश्चित्तानर्हविषयत्वेन कथंचित्संभवेऽपि ब्राह्मणहतादिग्रहणस्यासंभवित्वापत्तेः । प्रेताभ्युदयकामनाप्रयुक्तत्वेन पाक्षिकत्वं तस्य यत्कैश्चिदुक्तम् । तदयुक्तम् । लोकगर्हाभयादिति च विशेषणानित्यत्वावगतेः । धीतायां फलेच्छायां प्राप्ते वा फले प्रारब्धसमाप्तेरावश्यकत्वं गर्हापरिहारार्थत्वेनैवोक्तं न्यायविद्भिः । अत एव च तावत्कालं पुत्रादेर्जीवनसंदेहे द्विगुणं प्रायश्चित्तं कृत्वा वत्सरादर्वागपि नारायणबल्यादिकरणमुक्तं स्मृतिरत्नावल्यादौ—

आत्मनो घातशुद्ध्यर्थं चरेच्चान्द्रायणद्वयम् ।
तप्तकृच्छ्रचतुष्कं च त्रिंशत्कृच्छ्राणि वा पुनः ।
अर्वाक्संवत्सरात्कुर्याद्दहनादि यथोदित(म्) ।
कृत्वा नारायणबलिमनित्यत्वात्तदायुषः ॥ इति ।

यैस्तु हेमाद्र्यादिभिः स्वलिखितपूर्वोक्तषट्त्रिंशन्मतादिवचनबलात्पतितादीनां सपिण्डीकरणमपि निषेधस्य च पित्रादिभिन्नविषयत्वमङ्गीक्रियते तैः श्राद्धप्रकारोपदेशकवचनबलात्तदौर्ध्वदेहिकानुष्ठानस्य पाक्षिकत्वं वत्सरात्तदर्वाक्क्रियमाणवृद्धिश्राद्धादिविषयत्वं तस्य वाऽऽश्रयणीयमित्यादिबहुवक्तव्येऽपि दिङ्मात्रम् । यत्त्वत्र हेमाद्रिणोक्तं गोब्राह्मणहतपतितानामेव संवत्सरादूर्ध्वं नारायणबल्यादि, इतरेषां त्वर्वागपीति । तदयुक्तम् । षट्त्रिंशन्मतस्य पतितग्रहणस्य ब्रह्मपुराणपरिभाषितपतितपरत्वात् । गोबलीवर्दन्यायेन गोब्राह्मणहतानां पृथङ्निर्देशोपपत्तेः । तदभावेऽपि व्याप्यव्यापकभावानिरपेक्षप्रसिद्धधर्महेतुकाप्रसिद्धधर्महेतुकाप्रसिद्धधर्मानुमानस्यानुमानवादेन्द्रियकामाधिकरणादौ निषेधेऽपि—

बहूनामेकधर्माणामेकस्यापि यदुच्यते ।
सर्वेषां तद्भवेत्कार्यमेकरूपा हि ते स्मृताः ॥

इति वचनाद्बाव( द्बाध )काभावे सर्वेषां तदेव युक्तम् ।

एतेषां च मरणानन्तरकर्तव्यमुक्तं मिताक्षरोदाहृतस्मृत्यन्तरे—

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गङ्गातोये संस्थापनं हितम् ॥ इति ।

गङ्गेति संभवाभिप्रायेण । आहिताग्नेर्विशेषस्तत्रैव—

वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे ।
पात्राणि तु दहेदग्नौ यजमाने वृथा मृते ॥ इति ।

एवं च संवत्सरान्तादौ पर्णशरदाहः । गृह्यपरिशिष्टे तु प्रकारान्तरमप्युक्तम् । चण्डालादित्याद्युक्त्वा

न संस्कारविधिस्तेषां नैव कार्योदकक्रिया ।
रोदनं नैव कर्तव्यं सूतकं च न बन्धुभिः ॥
दग्ध्वा शरीरं प्रेतस्य संस्थाप्यास्थीनि यत्नतः ।
प्रायश्चित्तं तु कर्तव्यं पुत्रैश्चान्द्रायणत्रयम् ॥ इति ॥ १९ ॥

*नाऽऽशौचं शाककाष्ठाजिनलवणतृणक्षीरनीरामिषेषु
पुष्पे मूले फले चौषधदधिमधुषु स्यात्तिलेक्ष्वामभोज्ये ॥
दद्याद्द्यादिमानि स्वयमनुमननात्स्वामिनो यातिजाता
शौचे वा कृत्रिमे वा पणितमपणितं चापि सर्वं शुचि स्यात् ॥ २० ॥

मधु क्षौद्रम् । आममपक्वं तण्डुलादि । भोज्यं भक्ष्यं शष्कुलीलड्डुकादि । द्वंद्वै+कवद्भावः । शेषाणि प्रसिद्धानि । क्षीरदधिभ्यां च घृतस्याप्युपलक्षणम् । तिलैश्च तैलस्य । आशौचिस्वामिकेष्वप्येतेष्वाशौचमप्रतिग्राह्यत्वलक्षणं न स्यात् । द्रव्येषु नाऽऽशौचमाशौचिस्वामिकत्व-

* इदानीमाशौचिना यदुपादेयं तद्विंशतितमश्लोकेनाऽऽह—नाऽऽशौचमिति । यातिर्गतिर्मरणमिति यावत् । जातं जन्म तन्निमित्तमाशौचं यातिजाताशौचं तस्मिन् । कृत्रिमे वा निमित्तान्तरकृते नाऽऽशौच एषु शाकादिष्वामभोज्यान्तेषु द्रव्येष्वाशौचमाशौचसंबन्धिदोषो न स्यात् । एतानि सर्वाशौचेष्वपि नाशुद्धानीत्यभिप्रायः । अत्र च सप्तम्यन्तपदानि नाऽऽशौचमित्यनेन प्रत्येकं योज्यानि । दद्याद्द्यादिमानि स्वयमिति । अनुमननात् । तत्स्वाम्यनुज्ञयेमानि शाकादीनि स्वयमाशौचरहितः पुमानन्येभ्यो दद्यात् । स्वयं चाद्यात् । एवं कृते दोषो न भवतीत्यभिसंधिः । तथा पणितमपणितं च सर्वं पण्यं शुचि स्यादिति स्पष्टम् । इति संक्षिप्तोऽर्थः ।

+ द्वंद्वैकवद्भाव इति । तिलेक्ष्वामभोज्येत्यस्य समाहारद्वंद्वत्वात्समाहारस्य चैकत्वात्ततः सप्तम्येकवचनमित्यर्थः ।

कृतोऽप्रतिग्राह्यत्वादिप्रयोजकोऽतिशयविशेषश्चेतन*नाशौचवत् । अन्येष्व-स्यौपाधिकाशुचिष्वेवमेवेति केचित् । +मम तु प्रतिभाति । आशौचि-स्वामिकत्वकृतं प्रतिग्रहाद्ययोग्यत्वमेव द्रव्येष्वाशौचं कृष्णाजिनवत् । न त्वतिशयविशेषः । प्रमाणाभावात् । चेतनेषु तु—

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च ।
प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्तते ॥

इति दानाद्यनधिकार आशौचस्य निमि×त्तत्वोक्तेः । कर्माधिकार-रूपब्राह्मण्यादिवन्न दानाद्यनधिकार एवाऽऽशौचं किंतु तन्निमित्तभूतो जननादिजन्योऽतिशयविशेषः स्वीं क्रियते ब्राह्मण्यादिजातिवत् । = अन्यथा निमित्तनैमित्तिकभावानुपपत्तेरुदकदानाद्यधिकारस्याप्या-शौचत्वापत्तेश्च । न तु द्रव्येषु तथा किंचिदिति प्रतिग्रहाद्ययोग्यत्वमेव तेष्वाशौचम् । ÷द्रव्यविशेषगतमेवाऽऽशौचिस्वामिकत्वं तत्र हेतुर्न द्रव्यमा-

---

* चेतनाशौचवदिति । यथा चेतनगतमाशौचं पिण्डोदकदानादिविधेरध्ययना-दिपर्युदासस्य च निमित्तभूतः कालस्नानाद्यपनोद्यः पुरुषगतः कश्चनातिशय उच्यत एवं द्रव्यगतमाशौचं नामाऽऽशौचिस्वामिकत्वप्रयुक्तोऽनुपादेयत्वादिप्रयोजको द्रव्य-गतः कश्चनातिशयविशेष इति केचिन्मन्यन्त इत्यर्थः ।

+ मम त्विति । स्वमते द्रव्याशौचं नामाऽऽशौचिस्वामिकत्वप्रयुक्तमुपादेयत्वा-द्यनर्हत्वमेव । यथा कृष्णाजिनमशुचीत्युच्यते । नतु तत्प्रयोजकः कश्चनातिशयः । तथाऽङ्गीकारे मानाभावादित्यर्थः ।

× निमित्तत्वोक्तेरिति । आशौच इति सप्तम्याऽऽशौचस्य स्वाध्यायादिनिवृत्तौ निमित्तत्वोक्त्या निमित्तनिमित्तिनोश्च भेदस्य लोकप्रसिद्धत्वेन न दानाद्यनधिकार एवाऽऽशौचं किंतु दानाद्यनधिकारप्रयोजकस्तदपेक्षयाऽभिन्न एवातिशयः कश्चनाऽऽ-शौचत्वेन कल्प्यते । सैषा निमित्तत्वोक्तिरेव तादृशार्थकल्पने प्रमाणमिति भावः । नैवं द्रव्येषु तादृशाशौचकल्पने प्रमाणं भवतीत्यर्थः ।

= अन्यथेति । उक्तवैपरीत्ये । दानाद्यनधिकारस्यैवाऽऽशौचत्वाङ्गीकारे । दानाद्यनधिकाराशौचयोस्तादात्म्ये सति भेदाभावेन भेदमूलकस्य निमित्तनिमित्ति-भावोच्छेदापत्तिः । किंच प्रेतपिण्डक्रियावर्जमित्युक्तेर्दानाद्यनधिकारवदुदकदानाद्य-धिकारस्याप्याशौचत्वापत्तिरित्यर्थः ।

÷ ननु प्रतिग्रहाद्ययोग्यत्वरूपद्रव्यगताशौचप्रयोजकतावच्छेदकं द्रव्यत्वं चेत्सर्व-द्रव्याणां सर्वदाऽशुचित्वप्रसङ्गः । द्रव्यगतमाशौचिस्वामिकत्वं तदिति चेदाशौचि-

त्रगतमिति * शास्त्रैकसमधिगम्यत्वाद्यथाशास्त्रम् । अतिशयविशेषवा-
दिनाऽपि चे+दं वाच्यमेव । तत्र तस्य प्रयोजकत्वस्वीकारात् ।: × यत्तु
वाचस्पतिनाऽशुचिना विनियोजितानामनधिकारिविनियोजितत्वात्फ-

स्वामिकानां तृणकाष्ठादीनां नाऽऽशौचमिति कथं युज्यतामित्याशङ्क्याऽऽह—द्रव्यविशेषगतमेवेति। तत्र प्रतिग्रहाद्ययोग्यत्वरूपद्रव्याशौचे। हेतुः—प्रयोजकं कारणमित्यर्थः।

* ननु—आशौचिस्वामिकत्वं द्रव्यविशेषगतमेव द्रव्याशौचे हेतुर्न द्रव्यमात्रगतमिति कथमवगम्यते तत्राऽऽह—शास्त्रैकसमधीति। अयं भावः—आशौचिभिः परिगृहीतेष्वपि द्रव्येषु परिग्रहादेवाशुचित्वं जायते। तदुक्तमादित्याचार्यकृतायां षडशीत्याम्—अशुचीनां नराणां तु द्रव्याण्यप्यशुचीनि हि। तस्मात्तान्यपि वर्ज्यानि शुचीनामिति निश्चयः। जननमरणनिमित्तेनाऽऽशौचेनाशुचीनां नराणां यानि द्रव्याण्यन्नादीनि तान्यप्यशुचीन्येव। तुशब्द एवकारार्थः। दृष्टादृष्टार्थकर्मायोग्यानीति यावत्। तस्मादशुचित्वादेव शुचीनामसपिण्डानां तानि वर्ज्यानि परिहरणीयानीति निश्चयः शास्त्रज्ञानामिति तदर्थः। अत एव 'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते' इति यमस्मरणम्। इति सामान्यतो द्रव्याशौचमुक्त्वा केषुचिद्द्रव्येषु तदपोदितम्—'क्षीराज्यदधितक्राम्बुतिलपुष्पफलं गुडम्। शाककाष्ठौषधं मूलं ग्राह्यं स्यात्स्वाम्यनुज्ञया' इत्यनेन। तथा च केषांचिद्द्रव्याणामाशौचिस्वामिकानामप्याशौचाभावकथनेन केषुचिदेव द्रव्येष्वाशौचिस्वामिकेषु तदवशिष्टमिति तादृशद्रव्याशौचहेतुर्द्रव्यविशेषगतमेवाऽऽशौचिस्वामिकत्वं फलतीति भावः।

+ चेदमिति। योऽप्याशौचप्रयोजकत्वेनातिशयविशेषं मन्यते तेनापीदमाशौचिस्वामिकत्वं मन्तव्यम्। आशौचप्रयोजकत्वेनाङ्गीकृतेऽतिशयविशेषे प्रयोजकत्वेनाऽऽशौचिस्वामिकत्वस्य त्वयाऽप्यङ्गीकृतत्वात्। एवं च प्रयोजकत्वेनाऽऽशौचिस्वामिकत्वस्योभयोरप्यावश्यकत्वात्तवातिरिक्तमतिशयकल्पनं गुरुभूतं भवतीत्यर्थः।

× वाचस्पतिपण्डितस्तु कर्मानर्हत्वरूपमतिशयविशेषरूपं वा द्रव्याशौचं नानुमनुते। किंतु स्वतः शुचीनामेव द्रव्याणामशुचिकर्तृकविनियोगहेतुकं फलानर्जकत्वमेव द्रव्येष्वाशौचमित्याह। कर्मानर्हत्वलक्षणेऽतिशयविशेषरूपे वा द्रव्याशौचेऽङ्गीक्रियमाणे ज्ञाताशौचंकभ्रातृस्वामिकद्रव्यस्याशुचित्वात्तेनैव द्रव्येणापरिज्ञाताशौचकतद्भ्रात्रन्तरेण कर्मणि क्रियमाणेऽशुचिद्रव्येण कृतत्वात्तत्कर्म विफलं स्यात्। किंचाशुचिपुरुषात्क्रयक्रीतेन द्रव्येण परमशुचिना विनियुज्यमानेनापि कर्मसिद्धिर्न स्यादिति दूषणमभिधाय स्वतः शुचिन एव तस्याशुचिकर्तृकविनियोगहेतुकफलानर्जकलक्षणाशौचे तु सति शुचिना भ्रात्रन्तरेण क्रयक्रेत्रा वा विनियुज्यमानेन द्रव्येण कर्मसिद्धिर्युज्यत इत्यभिमन्यते तदनुवदति—यत्तु वाचस्पतिनेत्यादि।

ज्ञानजनकत्वमेव द्रव्येष्वाशौचं स्वतस्तु तानि शुचीन्येव । अन्यथैकतरेण भ्रात्रा जननादौ ज्ञाते तस्याऽऽशौचित्वात्तत्स्वामिकत्वेन तद्द्रव्याभावव्याप्यातिशयविशेषरूपे कर्मानर्हत्वरूपे वाऽशुद्धत्वे सति तैरेव द्रव्यैरज्ञातनिमित्ताशौचिभ्रात्रन्तरेण कृतं कर्माशुचिद्रव्यकृतत्वाद्व्यर्थं स्यात् । न स्याच्च *ततः क्रीतद्रव्येणेतरेषां कर्मसिद्धिः । क्रयस्याऽऽशौचापनायकत्वे प्रमाणाभावात् । शुचीनामेव तु तेषामनधिकारिविनियोजितत्वेन फलानर्जकत्वे शुचिना भ्रात्रन्तरेण क्रीत्वा विनियुज्यमानैः फलसिद्धिर्युक्तेत्युक्तम् । तदयुक्तम् । + तथा सति ततः क्रय इव प्रतिग्रहेऽपि न दोषः स्यात् । स्याच्च क्रीतैरिव प्रतिगृहीतैरपि कर्मसिद्धिः । ×अनधिकारित्वेनाऽऽशौचिना विनियुक्तानां फलाजनकत्वेऽपि प्रतिग्रहीतृविनियुक्तानां तस्याप्रमाणकत्वात् । =न चानधिकारिकृतत्वेनाऽऽशौचिकर्तृकदानस्य स्वफलाजनकत्वात्ततः प्रतिगृहीते स्वत्वमेव नास्तीति वाच्यम् । ÷शास्त्रीयफलाभावेऽपि स्वत्वस्य लौकिकत्वेन तदनुत्पत्तौ प्रमा-

---

* ततः—अशुचिपुरुषान्तरात् ।

+ पूर्वोक्तवाचस्पतिमतस्यानादरणीयतां स्फोरयितुं तदयुक्ततामुपपादयितुमाह—तथा सतीति । अशुचिकर्तृकविनियोगहेतुकफलानर्जकत्वरूपे द्रव्याशौचेऽङ्गीक्रियमाणे सतीत्यर्थः । ततोऽशुचिपुरुषात्क्रये यथा न प्रत्यवायस्तथा तस्मात्प्रतिग्रहेऽपि प्रत्यवायो न स्यात् । तथा च शुचिना विनियुज्यमानेन क्रीतद्रव्येणेव प्रतिगृहीतेनापि कर्मसिद्धिः प्रसज्येतेति भावः ।

× ननु— आशौचिपुरुषात्प्रतिग्रहेण लब्धस्य द्रव्यस्याशुचिसंबन्धात्फलाजनकत्वेन कथं तेन कर्मसिद्धिरुच्यत इत्याशङ्क्याऽऽह—अनधिकारित्वेनेति । प्रतिग्रहीत्रा विनियुक्तानामिति विग्रहः । प्रतिग्रहीत्रेत्यस्य शुचिनाऽत एवाधिकारिणेति शेषः । तस्य फलाजनकत्वस्य । अप्रमाणकत्वात्—प्रमाणरहितत्वादित्यर्थः ।

= अशुचिपुरुषान्तरात्प्रतिग्रहेण लब्धे द्रव्ये प्रतिग्रहीतुः स्वत्वमेव नोत्पद्यत इत्याशङ्क्ते—न चानधिकारीति । आशौचे कर्माधिकारस्य निषिद्धत्वेनाधिकाराभावादशुचिना क्रियमाणस्य 'तुभ्यमहं संप्रददे' इत्येवंरूपस्य दानस्य परस्वत्वोत्पत्त्यनुकूलव्यापारस्य दानपदार्थत्वादित्यर्थः । तथा च प्रतिगृहीते प्रतिग्रहीतुः स्वत्वमेव न सिध्यतीति कथं विनियुक्तेन तेन द्रव्येण कर्मसिद्धिः स्यादिति शङ्कार्थः ।

÷ समादधाति— शास्त्रीयेति । शास्त्रीयं फलं दानजन्यमपूर्वं तस्याभावेऽपि स्वत्वपदार्थस्य लोकव्यवहारजन्यत्वेन शास्त्रीयत्वाभावात्स्वत्वानुत्पत्तौ प्रमाणं नास्तीति भावः ।

णाभावात् । स्वत्वस्य च लौकिकत्वं * लिप्सासूत्रे मतद्वयेऽपि प्रप-

* ननु स्वत्वस्य लौकिकत्वमिति कथमवगम्यते तत्राऽऽह— लिप्सासूत्र इति । 'यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात्' (जै. सू. ४।१।२) इति चतुर्थाध्यायगतप्रथमपादस्थे लिप्सापदघटिते जैमिनीयसूत्र इत्यर्थः । अयं भावः—षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥ तथा—'ब्राह्मणः प्रतिग्रहादिना धनमर्जयेत्, राजन्यो जयादिना, वैश्यः कृष्यादिना' इत्येवमादयो धनार्जननियमा अनारभ्य पठ्यन्ते । तत्र संशयः । किमेते नियमाः क्रत्वर्था आहोस्वित्पुरुषार्था इति । तत्र क्रत्वर्था इति ब्रूमः । कुतः । द्रव्यार्जनोपायानां नियतत्वात् । यदि चैते नियमाः पुरुषप्रीतिसाधनरूपपुरुषार्थाः स्युस्तर्हि येन केनाप्युपायेन संपादितद्रव्येण पुरुषप्रीतेः सिद्धत्वादर्जनोपायनियमस्तत्र निरर्थकः स्यात् । एवं पूर्वपक्षे प्राप्तेऽभिधीयते—द्रव्यार्जने रागः प्रवर्तको दृष्ट इति न तत्र विधिरपेक्ष्यते । फलं च क्षुन्निवृत्त्यादि दृष्टमेव । क्रत्वर्थत्वे तु द्रव्यार्जननियमानां कृत्स्नमेवार्जितं क्रतौ व्ययीकरणीयमिति जीवनसाधनाभावात्क्रतुरेव न सिध्येत् । तस्मात्पुरुषार्था एते नियमा इति सिद्धान्तितम् । तत्र द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात्स्वत्वस्यालौकिकत्वात् । तथा च द्रव्ये स्वत्वमेव न भवतीति याग एव न संवर्तेत । नहि यस्य यत्स्वं न भवति तत्तस्य क्रत्वाद्यर्थक्रियां साधयितुं शक्नोतीति पूर्वपक्षमाक्षिप्य प्रतिग्रहादिना द्रव्यार्जनस्य स्वत्वसाधनत्वं लोकसिद्धमिति पूर्वपक्षः समर्थितो गुरुणा 'प्रलपितमिदं केनापि यदर्जनं स्वत्वं नाऽऽपादयतीति' वदता । तत्राऽऽक्षेपग्रन्थस्यायमर्थः— स्वत्वस्य लौकिकहेत्वजन्यत्वेन शास्त्रीयहेत्वन्तराभावेन नियतप्रतिग्रहादिहेतूनां च क्रत्वर्थत्वादन्यार्थत्वेनाकारणकार्योत्पत्त्यभावेन च स्वत्वानुत्पत्त्या स्वस्याभावादस्वेन च क्रत्वसिद्धेः क्रत्वर्था नियमा इति पूर्वपक्षोऽसंभवीति । आक्षेपसमाधानग्रन्थस्य चेत्थमर्थः—नियमानां क्रत्वर्थत्वेऽपि प्रतिग्रहादिना द्रव्यार्जनमर्ज्यार्जकयोः स्वस्वामिभावसंबन्धरूपस्य लौकिकस्वत्वस्य साधनं भवत्येव । लोके हि याजनप्रतिग्रहपरितोषाद्युपायेन संपादिते द्रव्ये संपादयितुस्तादृशस्वत्वस्य दृश्यमानत्वात् । तथा च प्रतिग्रहादिनियमाः स्वत्वं साधयन्त एव क्रतूपयुक्तधनद्वारा क्रत्वर्था भविष्यन्ति । यथाऽवघातो विदुषीभावं कुर्वन्नेव क्रतूपयुक्तव्रीहिद्वारा क्रत्वर्थस्तद्वदिति । अत्र प्रलपितमिदं केनापि यत्प्रतिग्रहादिना द्रव्यार्जनं स्वत्वं नाऽऽपादयतीत्युपहासं कुर्वता गुरुणा द्रव्यार्जनं स्वत्वसाधनं लोकसिद्धमिति स्पष्टमेवाभिहितम् । किंच सिद्धान्तेऽपि स्वत्वस्य लौकिकत्वमङ्गीकृत्यैव विचारप्रयोजनमुक्तम् । तथा हि— यदा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव द्रव्येण क्रतुसिद्धिरिति न-

श्चितम् । * यत्त्वेकतरेणेत्यादि । तदपि+मन्दम् । भ्रात्रन्तरेण परिग्रहसंपादितासाधारणस्वत्वे द्रव्य आशौचिभ्रात्रन्तरस्वत्वाभावेन तत्राशुचित्वाभावात् । × साधारणस्वत्वाधिकरणस्य यथेष्टविनियो-

---

नियमातिक्रमार्जितेन द्रव्येणेति न नियमातिक्रमदोषः पूर्वपक्षे । सिद्धान्ते त्वर्जननियमस्य पुरुषार्थत्वात्तदतिक्रमेणार्जितेनापि द्रव्येण क्रतुसिद्धिर्भवति पुरुषस्यैव नियमातिक्रमदोष इत्युक्तम् । तत्र यद्यर्जनं लौकिकस्वत्वसाधकं न स्यात्तर्हि नियमातिक्रमार्जितद्रव्येण क्रतुसिद्धिप्रतिपादनमसंगतं स्यादिति स्पष्टमेव नियमातिक्रमार्जनस्यापि स्वत्वसाधनत्वमभिहितम् । अन्यथा क्रतुसिद्धिरेव न स्यात् । नचैवं चौर्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम् । लोके तत्र स्वत्वप्रसिद्ध्यभावान्मम स्वमनेनापहृतमिति विसंवादाच्च । एवं प्रतिग्रहाद्युपायकं स्वत्वं लौकिकमिति तत्र स्पष्टमित्यर्थः । इतोऽप्यधिकं दायविभागप्रकरणे याज्ञवल्क्यस्मृतिटीकायां मिताक्षरायां तट्टीकायां बाळंभट्ट्यां च द्रष्टव्यम् ।

* यत्त्वेकतरेणेत्यादीति । कर्मानर्हत्वलक्षणेऽतिशयविशेषरूपे वा द्रव्याशौचेऽङ्गीक्रियमाणे ज्ञाताशौचकभ्रात्रन्तरस्वामिकद्रव्यस्याशुचित्वात्तेनैव द्रव्येणाज्ञाशौचकतद्भ्रात्रन्तरेण कर्मणि क्रियमाणेऽशुचिद्रव्येण कृतत्वात्तत्कर्म विफलं स्यादित्यर्थकं यद्वाचस्पतिनोक्तं तदित्यर्थः ।

+ मन्दमिति । अज्ञाताशौचकभ्रात्रन्तरेण परिग्रहेण विनियोगार्थं स्वीकारेण संपादितं जनितमसाधारणं स्वमात्रनिरूपितं स्वत्वं यत्र तादृशे द्रव्ये परिज्ञाताशौचकभ्रात्रन्तरस्य स्वत्वाभावेन तद्द्रव्यस्याशुचित्वाभावात्तेन द्रव्येण कृतस्य कर्मणो न वैफल्यं कर्मानर्हत्वलक्षणेऽतिशयविशेषरूपे वा द्रव्याशौचेऽङ्गीक्रियमाणेऽपीति निरुक्ता त्वदुक्तिर्मन्दोक्तिसदृशीत्यर्थः ।

× ननूभयस्वामिके द्रव्ये कस्मिंश्चित्कर्मणि विनियोगार्थमेकतरेण परिगृहीते सति तत्र द्रव्ये परिग्रहीतुरेव स्वत्वमित्ययुक्तम् । तत्रोभयस्वामिनोः स्वत्वस्योचितत्वादित्याशङ्क्याऽऽह—साधारणेति । साधारणं समानमुभयनिरूपितत्वात्तुल्यं यत्स्वत्वं तदधिकरणस्य तादृशस्वत्वाश्रयस्य द्रव्यस्येत्यर्थः । यथेच्छं यः कर्मणि विनियोगस्तदनर्हत्वेन कर्मानुष्ठानासिद्धये तस्य=परिग्रहमात्रेण भ्रात्रन्तरस्वत्वनिवृत्तिपूर्वकपरिग्रहीत्रेकस्वत्वस्यावश्यं वक्तव्यत्वादित्यर्थः । परिज्ञाताशौचकयोर्द्वयोर्भ्रात्रोः स्वत्वेऽपरिज्ञातापि येन यावद्द्रव्यमुपयोगार्थं स्वीकृतं तत्र स्वीकर्तृमात्रस्वत्वस्य लोकसिद्धत्वादिति भावः । लोके हि यत्र द्रव्ये द्वयोः स्वत्वं तादृशद्रव्यस्य यावानंशः स्वोपयोगार्थं येन परिगृहीतस्तत्र परिग्रहीतुरेव स्वत्वं दृश्यते स्वातन्त्र्येण तत्कर्तृकक्रयविक्रयादिव्यवहारदर्शनादिति यावत् । इत्यभिप्रायवानाह—प्रपञ्चितं मयाऽन्यत्रेति ।

गानर्हत्वेन कर्मानुष्ठानार्थं तस्याऽऽवश्यकत्वात् । प्रपञ्चितं चैतत्प्रपञ्चेन मयाऽन्यत्र । * यच्च क्रयस्याऽऽशौचापनायकत्वे प्रमाणाभावादिति तदपि +यत्किंचित् । ×स्वत्वापनयद्वारैव तस्य द्रव्याशुद्ध्यपनायकत्वात् । तस्या आशौचिस्वत्वप्रयुक्तत्वात् । =तत्रैव द्रव्ये कालस्य चेतनाशुद्ध्यपनयद्वारा तदपनायकत्ववदित्यलमश्रुतमीमांसानभियुक्तोक्तिदूषणवृथाश्रमेण । एतेषामाशौचिहस्ताद्ग्रहणे प्राप्ते आह—

दद्यादद्यादिमानि स्वयमनुमननात्स्वामिनो याति-
जाताशौचे वा कृत्रिमे वा ।

इमानि + शाकादीनि । यातिजाताशौचे । यानं यातिः परलोकगमनं मरणमिति यावत् । जातं जननम् । तदुभयनिमित्ते ⊙ आशौचे

* अन्यं खण्डनीयांशमनुवदति—यच्च क्रयस्याऽऽशौचेति ।

+ खण्डनं प्रतिजानीते—यत्किंचिदिति ।

× खण्डनप्रकारमुपपादयति—स्वत्वापनयेति । स्वत्वस्य—अशुचिस्वामिनिरूपितस्य स्वत्वस्य योऽपनयोऽपगमस्तद्द्वारा । तस्य—क्रयस्य । द्रव्यगताशुचित्वस्य नाशकत्वादित्यर्थः । अयं भावः—क्रयो हि नाम पणाणकादिमूल्यदानेन विक्रेतुः स्वत्वापनयपूर्वकं क्रेतुः स्वत्वोत्पत्त्यनुकूलव्यापारविशेषः । तत्र विक्रय्यवस्तुनः स्वामिनि विक्रेतर्यशुचौ सति स्वामिगताशुचित्वप्रयुक्तं स्वामिनिरूपितस्वत्ववति वस्तुन्यशुचित्वमुत्पद्यते । तादृशाशुचित्वस्य, मूल्यदानेन क्रयघटकविक्रेतृस्वत्वस्यापगमेन तत्सम तज्जन्याया विक्रय्यद्रव्यगताशुद्धेरपि वह्निनिवृत्त्या धूमनिवृत्तेरिव व्यापकनिवृत्त्या व्याप्यनिवृत्तेरर्थसिद्धत्वेन विक्रय्यवस्तुगतविक्रेतृसत्वस्य प्रणाशात्तत्कारणिकाया विक्रय्यवस्तुगताशुद्धेरपि प्रणाशादिति ।

= स्वत्वापनयनेन क्रयस्य द्रव्यगताशुद्ध्यपनायकत्वेऽभियुक्तसंमतं दृष्टान्तं प्रकाशयति—तत्रैव द्रव्य इति । तत्रैव पूर्वोक्त एवाऽऽशौचिस्वामिनिरूपितस्वत्वजन्याशुद्धिमत्येवेत्यर्थः । द्रव्ये तण्डुलादिद्रव्ये । 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इत्यादिना चेतनेषु—प्राणिष्वाशौचस्य दशाहादिकालपर्यन्तावस्थायित्वावगमेन कालस्य—दशाहाद्युत्तरकालस्य चेतनगताशुचित्वप्रणाशनेन तादृशस्वामिकद्रव्यगताशुद्धिप्रणाशकत्वं यथाऽभ्युपेयते तद्वदिति दृष्टान्तार्थः ।

उत्प्रमाणममीमांसितं यत्किंचिद्ब्रुवाणानामुपरि दूषणभारमराधानेन श्रान्तत्वादाह—अलमिति ।

+ शाकादीनीति । विंशतितमश्लोकपूर्वार्धोपात्तानि शाकाद्यामभोज्यान्तानि सप्तदशेत्यर्थः ।

⊙ आशौच इति । सपिण्डाशौच इत्यर्थः ।

* कृत्रिमे वाऽऽपाद्यनिर्हारादिनिमित्तके तदितराण्यपि स्वामिनोऽनुमनना-त्स्वयमनाशौचीतरस्मै दद्यात्स्वयं चाद्याद्भक्षयेत्। नत्वाशौचिहस्तादि-मान्यपि गृह्णीयादित्यर्थः। + शाकादिष्वेवाऽऽशौचप्रतिषेधश्चानापाद्यनि-मित्तकाशौचविषयः। × कृत्रिमे तु = तद्भिन्नेष्वप्याशौचाभावः। ÷ आशौचं यस्य संसर्गादित्यादिवचनात्। अतिक्रान्ताशौचेऽप्येवमेव। अतिक्रान्ते दशाहे त्वित्यादिवाक्यात्। अत्र कृत्रिमग्रहणं तु तत्राप्या-शौचिहस्तात्सर्वाण्यपि द्रव्याणि न ग्राह्याणीत्येतद्विधानार्थम्।

पणितमपणितं चापि सर्वं शुचि स्यात्।

पणितमित्यादि। कर्मणि ⊙ क्तः। तेन पणितं क्रयार्थं प्रसारितम्। अपणितं तद्विपरीतम् तत्सर्वं शाकादिव्यतिरिक्तमपि शुचि स्यात्स्वा-मिनो वणिज आशौचेऽपि। अप्रतिग्राह्यत्ववदक्रेयत्वं द्रव्येषु नास्ति। आशौचिहस्ताच्च क्रयेऽपि न दोष इत्यर्थः। तथा च मरीचिः—

लवणे मधुमांसे च पुष्पमूलफलेषु च।
शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च॥
तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः।
पण्येषु चैव सर्वेषु नाऽऽशौचं मृतसूतके॥ इति।

स्वयमित्युपलक्षणम्। आशौचिहस्तान्न ग्राह्यमित्येतावन्मात्रं विव-

---

* कृत्रिम इति। असपिण्डाशौच इत्यर्थः। तदाह—आपाद्यनिर्हारादीति। आ-पाद्यं स्वकर्तृकं यन्निर्हारादि, तन्निमित्तकाशौच इति भावः।

+ शाककाष्ठादिषु योऽयमाशौचनिषेधः स जन्मतःसिद्धनिमित्तकाशौचविषयको नाम सपिण्डाशौच एव भवतीत्याह— शाकादिष्वेवेति।

× कृत्रिमे त्विति। असपिण्डाशौचे त्वित्यर्थः।

= तद्भिन्नेष्विति। शाककाष्ठादिव्यतिरिक्तेषु वस्तुष्वपीत्यर्थः।

÷ आशौचमिति। 'आशौचं यस्य संसर्गादापतेद्गृहमेधिनः। क्रियास्तस्य न लुप्यन्ति गृह्याणां च न तद्भवेत्॥ इति वचनादित्यर्थः। गृह्याणां गृहवर्तिनां भार्यापुत्रादीनां जडवस्तूनां चेत्यर्थः।

एवमेवेति। अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद्गृही। त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित्॥ इति वचनादित्यर्थः।

⊙ क्त इति। कर्मार्थकक्तप्रत्ययान्तमित्यर्थः।

प्रसारितमिति। क्रय्यमित्यर्थः।

विपरीतमिति। क्रेयमित्यर्थः। क्रयणार्हमिति यावत्।

क्षितम्। पक्वं भक्ष्यं शष्कुल्यादि। अपक्वं तण्डुलादि। पक्वापक्वाभ्यनुज्ञानं चान्नसत्रप्रवृत्तविषयम्।

अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम्।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु व्रती भवेत्॥

इत्याङ्गिरसैकवाक्यत्वात्। अत्र पक्वान्नपदं भक्ष्यव्यतिरिक्तौदनादिविषयम्। आमान्नग्रहणं च भक्ष्यस्याप्युपलक्षणम्। पूर्वैकवाक्यत्वात्। योगविभागकरणाच्च पण्येषु न स्वयंग्रहनियमः। मृतसूतकग्रहणं च स्वयंग्रहविधौ कृत्रिमस्याप्युपलक्षणम्। आशौचं यस्य संसर्गादित्यस्याऽऽशौचाभावमात्रप्रतिपादकत्वेनाऽऽशौचिस्पृष्टोपादान *निषेधबाधे प्रमाणाभावात्। पण्याशौचनिषेधे च कृत्रिमोपलक्षणम्। आशौचं यस्येत्यस्य पण्येष्वपि प्रवृत्तेः। शाकादिनियमार्थं तु मृतसूतकग्रहणम्। ब्रह्मपुराणेऽपि—

लवणं मधु मांसं च पुष्पमूलफलानि च।
काष्ठं लोष्ठं तथा पर्णं दधि क्षीरं घृतं तथा॥
औषधं तैलमजिनं शुष्कमन्नं च नित्यशः।
आशौचिनां गृहाद्ग्राह्यं स्वयं पण्यं च मूलजम्॥ इति।

मूलजमाकरजम्। एवं चान्न+सत्रिणामोदनादि, ×इतरेषां तु भक्ष्यतण्डुलाद्यप्यभ्यनुज्ञातव्यतिरिक्तं सर्वमग्राह्यमेवानाशौचिनाम्। अत एव यमः—

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत्॥ इति।

कुलस्याऽऽशौचिकुलस्यान्नमनाशौचिभिर्न भुज्यते। तदेवान्नं कुलस्य सकुल्यस्य त्वदोषं भोज्यमित्यर्थः। अयं च निषेधो दात्राऽऽशौचनिमित्ते ज्ञाते भोक्त्राऽज्ञातेऽपि दातुराशौचित्वात्तत्स्वामिकेऽन्ने प्रवर्तत एव। अज्ञानप्रवृत्तत्वात्तु प्रायश्चित्ताल्पत्वं भोक्तुः। दात्राऽज्ञातेऽपि भोक्त्रा ज्ञाते तु तद्द्रव्यस्याऽऽशौचिस्वामिकत्वाभावेऽपि वचनात्प्रवर्तते। तथा च षट्त्रिंशन्मते—

उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत्।
एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत्॥ इति।

---

* दाननिषेधेति। उपादानप्रयुक्तनिषेधबाध इत्यर्थः।

+ अन्नसत्रिणामिति। अन्नसत्रप्रवृत्ताशौचिनामित्यर्थः।

× इतरेषामिति। अन्नसत्रीतराशौचिनामित्यर्थः।

भोक्तृग्रहणं तन्मात्रेण ज्ञातेऽपि तस्य दोषप्रतिपादनार्थं न पुनर्दातृमात्रेण ज्ञाते तस्य दाननिषेधातिक्रमनिमित्तदोषनिवृत्त्यर्थमपि । अर्थद्वयकरणे वाक्यभेदापत्तेः ।

अपि दातृग्रहीत्रोश्च सूतके मृतके तथा ।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथंचन ॥
विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात् ॥ इति ।

ब्रह्मपुराणमपि भोक्तुः स्यादेवेति व्याख्येयम् । आदिशब्देनाऽऽशौचम् । तत्र प्रायश्चित्तं चोक्तं पूर्वम् । विवाहादौ त्वाशौचसंभावनया पूर्वमेव ब्राह्मणार्थं पृथक्कृतं सिद्धान्नमनुज्ञातव्यतिरिक्तमपि चान्यदुपादेयम् ।

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तितः ॥

इति बृहस्पतिवचनात् । सिद्धान्नभोजने विशेषः षट्त्रिंशन्मते—

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥
भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ॥ इति ।

भुञ्जानेष्विति विवाहादिष्वपृथक्कृतान्नभोजनेऽन्यत्र च ब्राह्मणभोजने द्रष्टव्यम् । अवशिष्टं चान्नं त्यक्तव्यम् ।

भोजनार्धे तु संभुक्ते विप्रैर्दातुर्विपद्यते ।
यदि कश्चित्तदोच्छिष्टं शेषं त्यक्त्वा समाहितः ॥
आचम्य परकीयेन जलेन शुचयो द्विजाः ॥

इति ब्रह्मपुराणात् । श्राद्धे तूक्तम् ॥ २० ॥

*जातारण्यग्निनाऽर्वाक्परिणयनविधेर्दग्धिराधानकालादूर्ध्वं गृह्येणोर्ध्वं तु विध्याहितहुतवहैर्लौकिकेनाग्न्यभावे ।
चाण्डालाग्निं चिताग्निं पतितहुतभुजं सूतिकामेध्यवह्नीन्जह्याच्छूद्राहृतेनेन्धनदहनघृताद्येन दाहोऽप्यदाहः ॥ २१ ॥

* इदानीमग्नेरुपादेयत्वानुपादेयत्वमेकविंशतितमेन श्लोकेन कथयति — जातारण्यग्निनेति । विवाहात्प्राग्जातारण्यग्निना दाहः कर्तव्यः । जातारणिर्जातकर्मसमये योऽरणिस्तन्मथनेनोत्पन्न इति यावत् । विवाहादूर्ध्वं श्रौताधानादर्वाग्वैवाहि-

जातेति । जाते पुत्रे तत्संबन्ध्यग्निसाध्यकार्यार्थं स्वशाखोक्तविधिनो- पादीयमानाऽरणिर्जातारणिः । तन्मथिताग्निना परिणयनविधेर्विवाह- विधेः । इदं चोपलक्षणम् । गृह्याग्निस्वीकारकालादर्वाङ्मृतस्य + नि- खननाभावे दग्धिर्दाहः कर्तव्या । गृह्याग्निस्वीकारादूर्ध्वमाश्रौताधान- कालान्मृतस्य गृह्येणाग्निना दग्धिः । श्रौताधानादूर्ध्वं तु विधिनाऽऽहितैः कृताधानसंस्कारैर्हुतवहनैराहवनीयादिभिर्दग्धिः । × यद्यपि च कालो-

---

केनाग्निना दाह इति शेषः । आधानकालानन्तरं विधिनाऽऽहिता विध्युक्ताधाना- ख्यसंस्कारसंस्कृता ये दक्षिणाग्न्यादयस्त्रयस्तैरेव दाहः करणीयः । एतेषां जातार- ण्यग्न्यादीनामभावेऽसंस्कृतेनाग्निना दाहः । प्रेतदाहे चाण्डालाग्न्यादीञ्जह्यात्लोपादद्यात् । काष्ठदहनाद्यैः, आदिशब्देन पयःप्रभृति यदुपयुज्यते तत्संग्रहः । शूद्रेणाऽऽहृतेन काष्ठादिना यो दाहः सोऽप्यदाहः, कृतोऽप्यकृत एवेति तात्पर्यार्थः । अत्र प्रमा- णवचनानि टीकायां स्पष्टानीति नोक्तानि ।

* उपलक्षणमिति । परिणयनविधिग्रहणं गृह्याग्निस्वीकारस्योपलक्षणमित्यर्थः । अन्यथाऽऽवसथ्याधानं दारकाले दायविभागकाले वेत्युक्तत्वाद्येन दायाद्यपक्षमवलम्ब्य दारकाले वैवाहिकोऽग्निर्न गृहीतस्तादृशस्य मृतौ विवाहविधेर्निष्पन्नत्वाज्जातारण्य- ग्निविधिस्तत्र न प्रवर्तते । नापि गृह्याग्निविधिः । तस्याद्याप्यस्वीकारात् । नच तादृ- शस्थले 'लौकिकेनापरो जनः' इति लौकिकाग्निविधिः प्रवर्ततेति वाच्यम् । जाता- रण्यभावे लौकिकेनेति टीकाकृतोक्तेः । तथा च ग्रन्थस्य न्यूनतापत्तिपरिहारार्थं परि- णयनविधिग्रहणस्योपलक्षणार्थत्वमवश्यं स्वीकर्तव्यमित्यर्थः ।

+ नाम्नः पूर्वं खननस्य नियतत्वेन तत्र दाहाप्रसक्तेर्दाहसाधनाग्निनियामक- स्याप्यप्रसक्तेरर्थसिद्धत्वादुक्तं 'निखननाभावे' इति ।

× ननु परिणयनविधिग्रहणस्य गृह्याग्निस्वीकारकालोपलक्षणार्थत्वमुक्तम् । तत्र कालविशेषः कालसामान्यं वा विवक्षि[illegible] कालविशेषश्चेत्—अष्टमे वर्षे ब्राह्मण- स्योपनयनं मुख्यम् । ततो द्वादशवर्ष[illegible] ब्रह्मचर्यमिति मुख्यपक्षाश्रयणेनैकविंश- तितमवर्षात्मकः साधारण्येन मुख्यः [illegible]विवाहकालः सिध्यति । कालसामान्यं चेत्- बुद्धिशै[illegible]यमान्ययोरध्येयस्य समग्रासमग्र[illegible]वयोऽध्यानुसारेण त्वरया मन्दगत्या वा ब्रह्म- चर्यसमाप्तावेकविंशवर्षादर्वाक्तदुत्तरं वा [illegible] यदा विवाहप्रसक्तिः स पुरुषविवाहस्य सामान्यः काल इत्यायाति । एवं सति गृह्याग्निस्वीकारकालशब्देन पूर्वोत्तरावधि- परिच्छिन्नमेकविंशं वर्षं जिघृक्षितं त[illegible]मध्ययनवाच्छिन्नं वत्सरं वेत्याशङ्कायां कालविशेषविवक्षातन्निरसनयोरुपपादनक[illegible] कालसामान्यविवक्षेति सिद्धान्तं सूच- यन्नाह-यद्यपीत्यादि । 'यथा नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इत्यत्र कालविशेष-

पलक्षणापायेऽप्यन्यतोऽवगतविशेषकालानपायः शङ्खवेलायां दोहवेलायामित्यादौ लोके, उपांशुयाजमन्तरा यजतीत्यादौ वेदे च व्युत्पन्नस्तथाऽप्यत्राग्न्यभावे तत्कालपात्रे तैर्दाहासंभवान्मूलवचने च कालानुपादानाम कालविशेषमात्रविवक्षेत्यभिप्रेत्याऽऽह–अधिकाराभावेन तत्सद्भावेऽपि वाऽऽलस्यादिनाऽग्नेरभावेऽस्वीकारे विच्छेदे वा लौकिकेन पूर्वासंस्कृतेनाग्निना दग्धः । सर्वत्र च दाहप्रकारः स्वस्वसूत्रोक्तो द्रष्टव्यः । तथा च वृद्धयाज्ञवल्क्यः—

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।
अनाहिताग्निरेकेन लौकिकेनापरो जनः ॥ इति ।

लौकिकेनेति जातारण्यभावे । तस्याग्निसाध्यकार्यमात्रार्थमुत्पत्तेः । * लौकिके विशेषमाह—

ज्ञानसाधनस्य नक्षत्रदर्शनस्य मेघादिप्रतिबन्धकेनाभावेऽपि नोपलक्षितस्य सूर्यास्तमयोत्तरभाविनक्षत्रोद्गमाधिकरणक्षणरूपस्य कालविशेषस्याभावः । किंतु तादृश एव क्षणरूपः कालविशेषो वाग्विसर्गाय परिगृह्यते न दिवा सूर्यतेजसोऽदर्शनेन नक्षत्रदर्शनेऽपि तादृशसूर्यसहकृतनक्षत्रदर्शनाधिकरणक्षणः । यथा वा दोहवेलायामागन्तव्यमित्युक्ते तत्र गोदोहनाभावेऽपि दोहशब्देनोपलक्षितः प्रातःसायंरूपः कालविशेष एव प्रतिपिपादयिषितो न दोहसहकृतो मध्याह्नादिरूपः सामान्यकालः । तद्वत्तत्र गृह्याग्निस्वीकाराभावेऽप्युपलक्षित एकविंशतितमवर्षात्मकः कालविशेष एव जिघृक्षितो न गृह्याग्निस्वीकारसहकृत एकविंशवर्षात्प्रागुत्तरं वा स्थितो यत्किंचिद्वत्सरात्मकः सामान्यकाल इति कालविशेषविवक्षापरः 'यद्यपीत्यादिर्व्युत्पन्नः' इत्यन्तग्रन्थस्यार्थः । 'तथाऽप्यत्राग्न्यभावे' इत्यादेस्त्वयमर्थः—यद्यप्युपलक्षणस्थल उपलक्षितः कालविशेष एव ग्रहीतुमुचितस्तथाऽप्यत्र काले (एकविंशवर्षात्मके गृह्याग्निस्वीकारकाले) 'सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम् । आवसथ्यं तथाऽऽधानं पतितस्तु तथा भवेत्' इति गार्ग्योक्तेरधिकाराभावेन सत्यपि वाऽधिकारे श्रद्धामान्द्यालस्यादिनाऽग्निस्वीकाराभावे सति तत्र गृह्याग्निदाहासंभवात् 'आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः । अनाहिताग्निरेकेन लौकिकेनापरो जनः' इति मूलभूतार्षवचनेऽग्निस्वीकारकालस्यानुल्लेखाच्च न गृह्याग्निस्वीकारकालशब्देन 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इत्यत्रेव कालविशेषविवक्षा । अपि तु कालसामान्यविवक्षा । यदा ह्ययमग्निं स्वीकुर्यात्तादृशाग्निस्वीकरणाधिकरणं यः कोऽपि क्षणः कालसामान्यं तद्विवक्षितमिति भावः । एवमाधानकालादित्यत्रापि कालसामान्यं बोध्यम् ।

* लौकिक इति । लौकिकाग्निषु कश्चिदपवादमाहेत्यर्थः ।

चण्डालाग्निं चिताग्निं पतितहुतभुजं सूतिकामेध्यवन्ही-
ञ्ह्यात्।

अमेध्यं नराश्च(स्थिश्च)शकृदादि। तदिन्धनोऽग्निरमेध्याग्निः। शेषाः प्रसिद्धाः। एतांश्चण्डालादिसंबन्धिनोऽग्नीञ्शवदाहार्थं नोपादद्यात्। तथा च देवलः—

चण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित्।
पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः॥ इति।

शूद्राहृतेनेन्धनदहनघृताद्येन दाहोऽप्यदाहः।

शूद्रेण श्मशानं प्रत्याहृतेनेन्धनदहनघृताद्येन। आद्यशब्दादन्यदपि प्रेतकर्मोपकरणं तिलकुशपिष्टादि। तेन कृतस्त्रैवर्णिकस्य दाहः। उपलक्षणं चैतत्। प्रेतत्वनिवृत्त्यर्थं कर्ममात्रम्। अदाहः शास्त्रीयो दाहो न भवति प्रेतत्वनिवर्तकं न भवतीत्यर्थः। तेन मृतस्य प्रेतत्वनिवृत्त्यर्थं पुनर्यथासंभवमस्थिपर्णशरदाहपूर्वकं सर्वं कर्तव्यम्। शूद्रस्य चाऽऽहर्तुः प्रत्यवायः। तथा च यमः—

यस्याऽऽनयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च।
प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते॥ इति।

यस्य प्रेतस्य कृते, हवींषि घृतपिष्टतण्डुलादीनि। शवस्य शूद्रस्पर्शे तु वक्ष्यति॥ २१॥

* सर्वं तूष्णीं विदध्यादुपनयनविधेः प्राक् परं तु स्वशाखा-
गृह्योक्तैस्तद्विधानैः सकलशवविधिं ज्येष्ठपुत्रोऽवरो वा।
पुत्राभावे क्रमेण स्वकुलजजननीवंश्यशिष्यर्त्विजो वाऽऽ-
चार्यो वा यत्र कुर्यात्प्रथमदिनविधिं सोऽपि तत्सूतकान्ते॥२२॥

---

* अथ द्वाविंशेन श्लोकेन दाहेतिकर्तव्यतामधिकारिणं च प्रतिपादयति—सर्वं तूष्णीमिति। एतत्सर्वं दाहादिकृत्यमुपनयनविधेः प्राक् तूष्णीममन्त्रकमेव विदध्यात्। परं तूपनयमानन्तरं स्वगृह्योक्तैस्तत्तद्विधानैर्विदध्यात्। एवमितिकर्तव्यतां निरूप्याधिकारिणं निरूपयति—सकलेति। सकलं सर्वंशवविधिं प्रथमदिनमारभ्य दशाहान्तं स्वगृह्योक्तं कर्म ज्येष्ठपुत्रोऽनुपपत्त्याऽवरो वा विदध्यादिति संबन्धः। पुत्राभावे कर्तृविशेषं दर्शयति—क्रमेणेति। क्रमेण पूर्वाभावे पर इत्यनुक्रमेण। स्वकुलजः सपिण्डः सोदको वा। तदभावे जननीवंशजः। तदभावे शिष्यः। तदभाव ऋत्विक्। तदभाव आचार्यो वा विदध्यादित्यन्वयः। यस्मिन्देशे प्रथमदिनविधिं कुर्यात्सोऽपि स एव देशस्तत्सूतकान्तेदशाहपर्यन्तं कर्मणि भवतीति शेषः। देशनियमे शिष्टाचारो मूलम्।

उपनयनविधेः प्रागनुपनीतस्य मृतस्य दाहादि सर्वं तूष्णीममन्त्रकं विद्ध्यात् । विशेषविहितयमसूक्तादिजपवर्जम् । एतच्चामन्त्रकौर्ध्वदेहिकविधानं यस्य दाहः क्रियते तस्य । यस्य तु निखननं तस्यौर्ध्वदेहिकमेव *नास्ति । ऊनद्विवर्षं निखनेन्न कुर्यादुदक[क्रिया]मित्यादिवचनात् । अत्र चोदकग्रहणमाद्यत्वात्सकलप्रेतक्रियोपलक्षणम् । तथा शिष्टसमाचारात् । + अत एवोनाद्विवार्षिकमित्यादिमनुवचने 'अरण्ये काष्ठवत्त्यक्त्वा इत्यस्य श्राद्धाद्यौर्ध्वदेहि×काकरणरूपौदासीन्यपरत्वेन 'अस्थिसंचयनादृते' इत्यस्य चारथ्यादिरहितशुद्धभूमिपरतया, निदध्युरित्यस्य च निखननार्थतया व्याख्यानं कृतं मेधातिथिविज्ञानेश्वरादिभिः । केश्चित्तु सर्वं यथाश्रुतमेव व्याख्यातम् । तत्र च युक्तायुक्तत्वविवेकोऽन्यत्र मत्कृतौ द्रष्टव्यः । दाहनिखननावधिं तु वक्ष्यति । अत्र यद्यपि सर्वमित्यविशेषेणोक्तं,

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ।

इत्यादि लौगाक्ष्यादिवचनादुपनयनात्पूर्वं तूष्णीमग्न्युदकदानं तदूर्ध्वं सर्वमौर्ध्वदेहिकं कार्यमिति संकलनमिताक्षरातश्चाग्न्युदकदानमात्रं गम्यते, तथाऽपि 'असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां तु कुशेष्विति' प्राचेतसगुणविधेः पिण्डदानमपि द्रष्टव्यम् । त्र्यहाशौचादौ च तत्प्रकारो

* नास्तीति । 'ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः' इति याज्ञवल्क्यवचने ऊनद्विवर्षोद्देश्यकनिखननोदकदाननिषेधयोः सहोच्चारणात्समभिव्याहाररूपवाक्यप्रमाणेन निखननोदकदाननिषेधयोः साध्यसाधनभावो विज्ञायते । साधनं निखननं साध्यं तूदकदाननिषेधः । तत्रोदकग्रहणस्योदकाञ्जलिदानादिसकलौर्ध्वदेहिकक्रियोपलक्षणार्थत्वान्निखननहेतुकः सकलौर्ध्वदेहिकक्रियाकलापनिषेध इत्यर्थपर्यवसानाद्यस्य निखननं तस्यौर्ध्वदेहिकमेव नास्तीति फलतीत्यर्थः ।

+ उदकग्रहणस्योपलक्षणार्थत्वे शिष्टसमाचाररूपं प्रमाणं प्रदर्श्य प्रमाणान्तरं दर्शयितुमाह— अत एवेति । याज्ञवल्क्यवचस्युदकग्रहणस्योपलक्षणार्थत्वादेव ।

× और्ध्वदेहिकाकरणेति । यथोक्तमूनद्विवर्षमिति याज्ञवल्क्यवचनव्याख्यानावसरे मिताक्षरायां विज्ञानेश्वरैः— 'अरण्ये काष्ठवत्त्यक्त्वेत्यस्यायमर्थः— यथाऽरण्ये काष्ठं त्यक्त्वोदासीनास्तद्विषये भवन्ति तथोनाद्विवार्षिकमपि खातायां भूमौ परित्यज्य तद्विषये श्राद्धाद्यौर्ध्वदेहिकेषूदासीनैर्भवितव्यमित्याचारादिप्राप्तश्राद्धाद्यभावोऽनेन दृष्टान्तेन सूच्यते' इति ।

वक्ष्यते । तथा—

द्वादशाद्वत्सराद्र्वाक्पौगण्डमरणे सति ।
सपिण्डीकरणं न स्यादेकोद्दिष्टानि कारयेत् ॥

इति देवलवचनाच्च सपिण्डीकरणं विना तत्प्राग्भावि सर्वं द्रष्टव्यम् । अत्र च पूर्वावध्यपेक्षायाम्—

चूडाकर्मणि संजाते विपत्तिस्तु यदा भवेत् ।
सूतकान्ते प्रकर्तव्यं वृषस्योत्सर्जनं तथा ॥
तत्र दाहः प्रकर्तव्य उदकं तत्र निश्चितम् ।
श्राद्धानि षोडशापि स्युः सपिण्डीकरणं विना ॥

इति देवयाज्ञिकोदाहृतवचनाद्धरदत्तेनौर्ध्वदैहिकोपलक्षणत्वेन व्याख्यातोदकग्रहणादुदकदानं सपिण्डैः कृतचूडस्येति गौतमसूत्राच्च चूडाकरणमेव *तथा प्रतीयते तथाऽपि लौगाक्षिवचने नात्रिवर्षस्येत्यादिमनुवचने चोदकदानस्य दाहसाहचर्यावगमात्तस्य चोपलक्षणत्वाद्दाह एव +पूर्वावधिर्द्रष्टव्यः । देवयाज्ञिकनिबन्धे तु दन्तजननादर्वाङ्मृते दुग्धदानं सवयोभ्यः । चौलादर्वाक्पायसक्षीरवस्त्रदानं तेभ्य एव । निखननं चोभयत्र । तदूर्ध्वं पञ्चमवर्षसमाप्तिपर्यन्तमग्न्युदकपिण्डदानमात्रं तेभ्य एव भोजनादिदानं च । तदूर्ध्वमुपनयनात्सापिण्डीकरणवर्जं सर्वमिति विशेषो वचनैरेव दर्शितः । तानि यथा-

गर्भे नष्टे क्रिया नास्ति दुग्धं देयं शिशौ मृते ।
परं च पायसं क्षीरं दद्याद्बालविपत्तितः ॥
एकादशद्वादशाहवृषोत्सर्गविधिं विना ।
महादानविहीनं च कुमारे कृत्यमाचरेत् ॥

तथा—यत्र प्रमीयते बालस्तत्र प्रायः प्रदीयते ।
किंचित्समानवयसां सत्कृत्यान्नं यथाविधि ॥
भक्ष्यं भोज्यं च दातव्यं तथा च सुखभक्षिका ।
तद्वस्त्राणि प्रदेयानि सोपानत्कानि तत्समे ॥

---

* तथेति । पूर्वावधित्वेनेत्यर्थः । लौगाक्ष्यादिपूर्वोक्तवचनेषु चूडाग्रहणादुदकदानाद्यौर्ध्वदेहिककरणे पूर्वावधिश्चूडेत्यर्थः । एतदाशयेनैवोक्तं निर्णयसिन्धौ—' अत्र चूडैव पूर्वावधिः । पूर्ववाक्येषु तद्ग्रहणात् ' इति ।

+ दाह एवेति । एतदाशयेनैवोक्तं निर्णयसिन्धौ— ' उदकग्रहणस्योपलक्षणत्वाद्दाहः पूर्वावधिरिति केचित् ' इति ।

अत्र बालग्रहणं कुमारस्याप्युपलक्षणम् ।

कुमाराणां च बालानां भोजनं वस्त्रवेष्टनम् ।

इति तत्रैवाभिधानात् । तथा—

भूमिनिक्षेपणं बाले आवर्षद्वयमाश्रितम् ।

ततः परं खगश्रेष्ठ देहदाहो यथाविधि ॥

प्रथमवर्षकृतचूडस्यापि निखननविनिवृत्त्यर्थमाश्रितमिति । उपनीतकालादौ करिष्यमाणचूडस्यापि तदर्थमावर्षद्वयमिति । एतच्चाग्रे विवेचयिष्यते । तथा—

शिशुरादन्तजननाद्बालः स्याद्यावदाशिखम् ।

कथ्यते सर्वशास्त्रेषु कुमारो मौञ्जिबन्धनात् ॥

अत्र यद्यप्यामौञ्जिबन्धनादित्युक्तं तथाऽपि पूर्ववाक्यानि पञ्चमवर्षपर्यन्तमेव प्रवर्तन्ते । तदूर्ध्वं तु—

पञ्चवर्षादि(धि)के का(बा)ले विपत्तिर्यदि जायते ।

वृषोत्सर्गादिकं कर्म कर्तव्यमुदकं ततः ॥

अहन्यहनि संप्राप्ते कुर्याच्छ्राद्धानि षोडश ।

पायसेन गुडेनैव पिण्डं दद्याद्यथाक्रमम् ॥

उदकुम्भप्रदानं तु पददानानि यानि च ।

भोजनानि द्विजे दद्यान्महादानानि भक्तितः ॥

दीपदानानि यत्किंचित्पञ्चवर्षाधिके सदा ।

कर्तव्यं तु खगश्रेष्ठ प्रतावाक्प्रेततृप्तये ॥

स्वा[1]हाकारेणैव कुर्यादेकोद्दिष्टानि षोडश ।

ऋजुदर्भैस्तिलैः शुक्लैः प्राचीनावीति निश्चितम् ॥ इति ।

प्राचीनावीति यथा स्यात्तथा । येषामपि षोडशश्राद्धपर्यन्तं सर्वं क्रियते तेषामपि सपिण्डीकरणाभावात्सांवत्सरिकादीनि न भवन्त्येव । तदभावे तद्देवतात्वापादकपितृत्वाभावात् । प(य)तिवच्च ता(द्वि)वैव तत्संपत्तौ प्रमाणाभावात् । स्त्रीणां तु कृतचूडानामप्यापरिणयादुदकदानादि वैकल्पिकम् । तत्स्त्रीणां चेके प्रत्तानामिति गोतमसूत्रात् । शूद्राणामप्येवम् । स्त्रीशूद्राश्च सधर्माणः इति वचनात् ।

परंतु स्वशाखागृह्योक्तैस्तद्विधानैः ।

---

1 क. स्वधाका

उपनयनविधेः परं पश्चात्तु स्वग्रास्यागृह्योक्तस्वाह्निकानेरौर्ध्वदेहिक-प्रकारैः सर्वं विदध्यात् । तथा च याज्ञवल्क्यः- *स दग्धव्य उपेतश्चेदा-हिताग्न्यावृताऽर्थवदिति । अर्थवत्प्रयोजनवत् । लुप्तप्राकृतप्रयोजनं प्रत्या-म्ना(ख्या)तं च न कार्यमित्यर्थः ।

+सकलशवविधिं ज्येष्ठपुत्रोऽवरो वा ।

विभक्तानामविभक्तानां चौरसानां पुत्राणां बहुत्वे सर्वेषां संनि-धाने च सकलं दाहादिसपिण्डनान्तं शवस्य मृतस्य प्रेतत्वनिवृत्त्या पितृ-त्वप्राप्त्यर्थं विधिमपतितादेर्जन्मतः सर्वज्येष्ठ एव पुत्रः कुर्यात् । ज्ये-ष्ठस्य स्वरूपेणाभावेऽसंनिधाने पातित्यादिनाऽनधिकारित्वे वा तस्मा-दवरः कनिष्ठो वा ×तादृश एव सर्वं कुर्यादिति =व्यवस्थितो विकल्पः ।

---

* स दग्धव्य इति । अस्य पूर्वार्धं तु—'यमसूक्तं तथा गाथा जपाद्भिर्लौकि-काग्निना' इति ( या० स्मृ० ३ । २ ) । अस्यार्थो मिताक्षराकारेणैवं विवृतः—उपेतश्चेद्युपनीतस्तर्हि आहिताग्न्यावृता आहिताग्नेर्दाहप्रक्रियया स्वगृह्यादिप्रसि-द्धया लौकिकाग्निनैव दग्धव्यः । अर्थवत्—प्रयोजनवत् । अयमर्थः—यदस्य बलाद्यं दाहद्वारं कार्यरूपं प्रयोजनं संभवति भूमिजोषणप्रोक्षणादि तदुपादेयम् । यत्पुनर्लुप्तप्रयोजनं पात्रप्रयोजनादि तन्निवर्तते । इति ।

+ अथ दाहाद्यधिकारिणं प्रदर्शयति—सकलेति । अत्र सकलश्चासौ शववि-धिश्चेत्यर्थककर्मधारयसमासाच्छवविधिं साकल्येन विशेषयता ( शवविधौ सकलेति विशेषणं ददता ) दशाहान्तकर्मसमाप्तिपर्यन्तं कर्तृभेदो न करणीय इति सूचि-तम् । तथा च गृह्यपरिशिष्टे—असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् । प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ।। इति । उक्तमिति शेषः ।

× तादृश एवेति । औरस एवेत्यर्थः । ननु यथा सर्वतो ज्येष्ठस्तथा सर्वतः कनिष्ठ इति भावः । तदेतत् 'तस्मादवरः' इत्युक्त्या सूचितम् । तस्मादिति तच्छब्देन सर्वतो ज्येष्ठः परामृश्यते । तथा च सर्वतो ज्येष्ठापेक्षयाऽवरः कनीया-न्द्वितीयोऽपीति तदर्थात् । अत एव 'ज्येष्ठाभावे सर्वतः कनिष्ठ एवाधिकारी न तु मध्यमा इति केचिदाहुस्तन्निर्मूलम्' इत्युक्तं धर्मसिन्धौ । अत एव च टीकाकृता 'सर्वतो ज्येष्ठापेक्षया कनीयसामपि बहुत्वे पूर्ववत्' इत्युक्तं संगच्छते । यदि च सर्वतः कनिष्ठ एवाधिकारी तदा 'कनीयसामपि बहुत्वे पूर्ववत्' इत्युक्तिरनर्थिका स्यादिति ।

= व्यवस्थित इति । सर्वतो ज्येष्ठः पुत्र औरसो मुख्योऽधिकारी, तदभावे

---

*सर्वज्येष्ठकनीयसामपि बहुत्वे +पूर्ववदिदमेव योज्यम्। तथौरसपौत्रिकेयादीनां समवाये ज्येष्ठः पूर्वः पूर्वपठित एव कुर्यात्। तदभावेऽवरोऽवरः पश्चात्पठितः। तथा च सुमन्तुः—

मातुः पितुश्च कुर्वीत मृतयोरौरसः सुतः।
पैतृमेधिकसंस्कारं मन्त्रपूर्वकमादितः॥ इति।

अत्र चौरस इत्येकवचनं कर्तृत्वे वि×वक्षितम=धिकारे त्वविवक्षितम्। 'प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः' इति बृहस्पतिवचने सर्वे-

---

तदनुज इत्येवं व्यवस्थयोदितानुदितहोमवद्विकल्पः। न तु 'व्रीहिभिर्यजेत यवैर्वा' इतिवत्समविकल्प इत्यर्थः। तस्याष्टदोषदुष्टत्वात्। ते चाष्ट दोषा उक्ता अभियुक्तैः

प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पने। प्रत्युज्जीवनहानिभ्यामष्टौ दोषाः प्रकीर्तिताः॥

इति। लक्षणसमन्वयपूर्वकमस्यार्थः प्रदर्श्यते— व्रीहिभिर्यजेत यवैर्वेति वाक्यद्वयमपि प्रमाणभूतमृष्युक्तत्वात्। तत्र व्रीहिवाक्याश्रयणे यववाक्यमनाश्रयणीयं श्रुतनैरपेक्ष्यविरोधाद्युगपदुभयानुष्ठानायोगात्। अतो यववाक्यस्थं प्रमाणत्वं हेतुमन्तरेव त्यक्तव्यं भवति। त्यक्तस्य च तस्य प्रमाणत्वस्याप्रमाणत्वं चेष्टव्यम्। केनापि हेतुना प्रयोगान्तरेण यवग्रहणे त्यक्तप्रमाणत्वस्य पुनराश्रयणं तदनुरोधेन स्वीकृताप्रमाणत्वस्य पुनस्त्यागश्चेत्येकस्मिन्वाक्ये चत्वारो दोषाः। द्वितीयेऽपि वाक्ये प्राप्तत्यागाप्राप्ताश्रयणत्यक्तस्वीकारोपात्तत्यागा इति त एव चत्वारो दोषा इत्यष्टौ दोषा इति यावत्।

* ननु ज्येष्ठाभावे कनिष्ठोऽधिकारीत्युक्तम्। तत्र कनिष्ठानां बहुत्वे किं क्रमेणैक एवाधिकार्युताक्रमेण सर्व एवाधिकारिण इत्याशङ्कायामाह— सर्वज्येष्ठकनीयसामपीति। सर्वेष्वौरसेषु यो जन्मतो ज्येष्ठस्तदपेक्षया ये कनीयांसस्तेषामप्यनेकत्व इत्यर्थः।

+ पूर्ववदिति। यथौरसानां बहुत्वे ज्येष्ठोऽधिकारी तदभावे कनिष्ठ इत्युक्तं तथा कनीयसां मध्ये यो ज्येष्ठः स एवाधिकारी तदभावे तत्कनीयानिति पूर्ववद्व्यवस्थित एव विकल्पो न तु समविकल्प इत्यर्थः।

× विवक्षितमिति। उपात्तस्यैकत्वस्य विना कारणं त्यागायोगाद्विधेयगतत्वाच्चेत्यर्थः। मृतमातापितृसंस्कारकर्तृत्वेनौरसस्य विधानात्। तथा च मृतमातापितृसंस्कारकर्ता औरसः स चाप्येक एव न तु सर्वे।

= अधिकार इति। पैतृमेधिकसंस्कारजन्यफलभोक्तृत्वरूपेऽधिकारेऽविवक्षितमित्यर्थः।

+ अविवक्षायां प्रमाणं प्रदर्शयति—प्रमीतस्येति। देयमित्यत्र 'अर्हे कृत्य-

षामधिकारप्रतिपादनात् । एवं 'मृते पितरि पुत्रेण क्रिया कार्या विधानतः' इत्यादिशङ्खादिवचनेष्वप्येकवचनं साक्षात्कर्तृत्वाभिप्रायमेव । अधिकारस्तु *फलस्वाम्याख्यः सर्वेषामपि । अविभक्तानां स्वत एव +साधारणेन विभक्तानां च ×स्वस्वांशप्रदानसंपादितसाधारण्येन द्रव्येण साक्षादेकेन कृतेऽपि सपिण्डीकरणान्तकर्मण्यनुमति=व्यवधानेन कर्तृत्वात् । ÷अन्यथा ≈साधारणस्यैकेन विनियोक्तुमशक्यत्वात् ।

---

तृचश्च' (पा.सू.३।३।१६९) इत्यर्हार्थे यत् । अर्हणमर्हो योग्यतेत्यर्थः । तथा च पुत्रैरिति बहुवचनेन सर्वेषां श्राद्धदानयोग्यतारूपाया अधिकारिताया: प्रतिपादनादेकवचनमधिकारित्वेऽविवक्षितमिति भावः । श्राद्धदानयोग्यता नाम श्राद्धदानजन्यफलभोक्तृता । सैव चाधिकारितेति यावत् । नचानेनैव हेतुना कर्तृत्वमपि सर्वेषां स्यादिति शङ्क्यम् । 'सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥' इति मरीचिवचने 'ज्येष्ठेनैव' इत्यनेन कनिष्ठकर्तृकताव्यवच्छेदपूर्वकं ज्येष्ठस्यैव कर्तृताया अभिधानात् । ननु यदि कनिष्ठानां कर्तृत्वं नास्ति तदा 'सर्वैरेव कृतं भवेत्' इत्यसंगतम् । किंच कर्तृत्वाभावे फलभाक्त्वमपि न स्यात् । 'शास्त्रफलं प्रयोक्तरि' इति न्यायादिति चेत् । उच्यते—ज्येष्ठेन कृते सति तावतैवाकरणेऽपि सर्वैः कृतं भवेदित्युक्त्या तत्रैवार्थान्तर्भावावश्यकत्वेन कृतं भवेदित्यस्य कृतमिव भवेदित्यर्थात् । ज्येष्ठेन कृते सति यथा तस्य फलभाक्त्वं भवति तथा ज्येष्ठेतरैरकृतेऽपि तेषां फलभाक्त्वं भवतीति फलभागित्वसाम्यात्सर्वैः कृतं भवतीति यावत् । एवं च फलभागित्वरूपाधिकारित्वमेवानेन प्रतिपाद्यत इति न किंचिदसंगतं नापि किंचिदनुपपन्नमिति बोध्यम् ।

* फलस्वाम्येति । फलनिरूपितं स्वामित्वं फलभोक्तृत्वमिति यावत् ।

+ साधारणेनेति । अनेकस्वामिकेन । अस्य द्रव्येणेत्यत्रान्वयः । अविभक्तानां भ्रातॄणां द्रव्यस्य स्वत एव स्वस्वांशप्रदानाद्यायासमन्तरेणैवानेकस्वामिसंबन्धित्वेनेत्यर्थः ।

× स्वस्वांशेति । स्वस्य स्वस्येति वीप्सायां कृतद्वित्वस्य षष्ठ्यन्तस्यांशशब्देन समासे विभक्तिलुकीदं साधु । स्वस्य स्वस्यांशस्य भागस्य प्रदानेन समर्पणेन संपादितं साधारण्यमनेकस्वामिसंबन्धित्वं यत्र तादृशेन द्रव्येणेत्यर्थः ।

= व्यवधानेनेति । अनुमतिप्रदानद्वारेत्यर्थः ।

÷ अन्यथेति । उक्तवैपरीत्ये । सर्वतो ज्येष्ठव्यतिरिक्तानां भ्रातॄणामनुमतिद्वारा कर्तृत्वानङ्गीकार इत्यर्थः ।

≈ साधारणस्येति । अनेकस्वामिकस्य । द्रव्यस्येति शेषः ।

यत्तु वाचस्पतिना 'एकस्य कर्तृत्वेऽपि सर्वेषामधिकारोऽस्त्वित्याशङ्क्य न ह्यन्यकर्तृके प्रयोगेऽन्यस्य कर्तृता संभवति' इत्युक्तं *तत्कर्तृत्वाधिकारिविवेकाज्ञाननिबन्धनम्। +यदपीतरेषां ज्येष्ठकर्तृकप्रयोगोपसंहारासामर्थ्यं तत्र कारणमुक्तं तदपि व्यधिकरणम्। अनुमतिद्वारककर्तृत्वस्य सङ्कितत्वात्। साक्षात्कर्तृत्वासामर्थ्येऽपि च तत्रेतरेषां सामर्थ्यस्याविकल्प[ल]त्वात्। न ह्यन्यत्रासामर्थ्येनान्यत्रासामर्थ्यं भवति। हो×त्रासामर्थ्येनाऽऽध्वर्यवे। सपिण्डीकरणोत्तरभावीनि तु सांवत्सरिकादीन्यविभक्तानामेकस्यैव। विभक्तानां तु पृथक् पृथक्।

भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक्पृथक्॥

इति स्मरणात्। एवं च यच्छूलपाणिना सपिण्डनोत्तरभाविष्वविभक्तानामनियम इत्युक्तं तद्धेयम्। यदपि—

---

* तत्कर्तृत्वेति। कर्तृत्वं चाधिकारश्चेति तयोर्विवेको भेदस्तदज्ञानमूलकं तद्वाचस्पतिवचनमित्यर्थः। साक्षात्पैतृमेधिकसंस्कारनिष्पादकत्वं कर्तृत्वम्। तच्च क्वचित्फलभोक्तृत्वसमानाधिकरणं तदसमानाधिकरणं च। यदा ह्यौरसः सपिण्डनान्तं कर्म करोति तदा फलभोक्तृत्वसमानाधिकरणं कर्तृत्वमौरसे। यदा त्वसगोत्रस्तत्करोति तदाऽसगोत्रे कर्तरि तदसमानाधिकरणं कर्तृत्वम्। अधिकारित्वं तु साक्षात्सपिण्डनान्तकर्मनिष्पादकत्वाभावेऽपि तज्जन्यफलभोक्तृत्वम्। यथा यदा सवानुमत्या ज्येष्ठः पुत्रस्तादृशं कर्म करोति तदा ज्येष्ठानुजानां सर्वेषां साक्षात्तत्कर्तृकत्वाभावेऽपि तज्जन्यफलभोक्तृत्वं भवतीति तयोर्भेदो दिङ्मात्रेण प्रदर्शित इति ज्ञेयम्।

+ अन्यकर्तृके प्रयोगेऽन्यस्य कर्तृत्वं न संभवतीत्यत्र कारणमित्थं प्रदर्शितम्— ज्येष्ठभ्रातृकर्तृको यः प्रयोगस्तस्य य उपसंहारः समाप्तिस्तत्र ज्येष्ठव्यतिरिक्तभ्रातॄणां सामर्थ्याभावः। प्रयोगसंपादनानुकूलव्यापाराभावः। ज्येष्ठकर्तृकप्रयोगसंपादनानुकूलत्वेन कनीयसां तत्र व्यापाराभावादिति। तदपि व्यधिकरणं व्यभिचरितमयुक्तमिति यावत्। अनुमतिप्रदानरूपस्य प्रयोगसंपादनानुकूलव्यापारस्य तत्र सत्त्वात्। तथा च साक्षात्कर्तृत्वासामर्थ्येऽपि कनीयसामनुमतिप्रदाने सामर्थ्यस्याक्षतत्वादित्याह—यदपीत्यादिनाऽविकलत्वादित्यन्तेन।

× साक्षात्कर्तृत्वासामर्थ्येनानुमतिप्रदाने कनीयसामसामर्थ्यं न भवतीति दृष्टान्तेन स्पष्टयति—होत्रेति।

सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश ।
पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित् ॥

इति लघु+हारीतवचनं, पृथग्द्रव्या अपिशब्दादपृथग्द्रव्याश्च सपिण्डीकरणान्तानि पृथङ्नैव कुर्युः । ×तदुत्तराणि तु विभक्तानां पृथगेव । अविभक्तानां च पृथगपृथग्वेति वचनव्यक्त्यङ्गीकारेण =तत्र प्रमाणत्वेनोक्तं तदपि +वचनव्यक्त्यज्ञाननिबन्धनम् । अविभक्तानामिवेतरवत्सपिण्डीकरणान्तान्यप्यपृथगेव भवन्ति । विभक्तानां त्वितरवत्ते⊙ष्वपि भे✻दानुष्ठाने प्राप्ते पृथग्द्रव्या अपि सपिण्डीकरणान्तानि पृथङ्नैव कुर्युरितराण्येव तु पृथक्कुर्युरिति हि तत्र वचनव्यक्तिर्नतु ◡पूर्वा । ✾पृथग्द्रव्या अपीत्यस्याऽऽनर्थक्यापत्तेः ।

---

✻ षोडशेति । तानि यथा—द्वादश प्रतिमास्यानि आद्यं षाण्मासिकं तथा । त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश । इति जातूकर्ण्यः । हेमाद्रौ तु—'सपिण्डीकरणं चैव इत्येतच्छ्राद्धषोडशम्' इत्युत्तरार्धे पाठः । अत्र द्वादश प्रतिमास्यानीत्यनेनैवाऽऽद्यषाण्मासिकयोः संग्रहे सिद्ध आद्यग्रहणमूनमासिकार्थम् । तथा षाण्मासिकशब्दः षट्सु षट्सु मासेषु विहितमिति व्युत्पत्त्या पूर्वमासषट्कोत्तरमासषट्कभेदात्षाण्मासिकाब्दिकद्वयार्थकः । तयोश्च प्रतिमास्यानीत्यनेनैवोक्तत्वादूनषाण्मासिकोनाब्दिकपरो बोध्यः । अन्यथाऽऽद्यषाण्मासिकग्रहणं व्यर्थं स्यात् । अत एव षोडशत्वसंख्याऽपि सम्यगुपपद्यते ।

\+ हारीतवचनमिति । अस्य प्रमाणत्वेनोक्तमित्यत्र संबन्धः ।

× तदुत्तराणीति । सपिण्ड्युत्तराणि सांवत्सरिकादीनि त्वित्यर्थः ।

= तत्रेति । 'सपिण्डनोत्तरमाविश्वाविभक्तानामानियमः' इति शूलपाण्युक्ताविर्त्यर्थः ।

\+ वचनव्यक्तीति । लघुहारीतवचनार्थाज्ञानमूलकमित्यर्थः ।

ˇ इतरवदिति । सपिण्डनोत्तरभाविसांवत्सरिकादिवदित्यर्थः ।

⊙ तेष्वपीति । सपिण्डीकरणान्तेष्वपीत्यर्थः ।

✻ भेदानुष्ठान इति । भेदेन पार्थक्येनानुष्ठान इत्यर्थः ।

◡ नतु पूर्वेति । 'पृथग्द्रव्या अपृथग्द्रव्याश्च विभक्ता अविभक्ताश्च सुताः सपिण्डीकरणान्तानि पृथङ्नैव कुर्युः । तदुत्तराणि तु विभक्तानां पृथगेव । अविभक्तानां च पृथगपृथग्वा' इति पूर्वोक्ता वचनव्यक्तिर्नेत्यर्थः ।

✾ पृथग्द्रव्या अपीत्यस्याऽऽनर्थक्यापत्तेरिति । अयं भावः—सुतकर्तृकसपिण्ड्यन्तश्राद्धानां पृथगनुष्ठानं लघुहारीतवचनेन निषिध्यते । निषेधस्य च प्राप्तिपूर्वकत्वात्तत्र

एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥

इत्यादिबृहस्पत्यादिवचनविरोधाच्च ।

अर्वाक्संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात्समेत्य च ।
ऊर्ध्वं सपिण्डीकरणात्सर्वे कुर्युः पृथक्पृथक् ॥

इति व्यासवचनमपि विभक्तानामुत्तरार्धार्थानुवादेन पूर्वार्धार्थविधायकम् । अन्यथा समेत्येत्येतस्याऽऽनर्थक्यापत्तेः । इत्यलमनभियुक्तदूषणेन । एवं बहुष्वौरसेषु सर्वेषामधिकारित्वेऽपि साक्षात्कर्तृत्वमेकस्यैवेति स्थिते तत्कस्येत्यपेक्षायां मरीचिनोक्तम्—

मृते पितरि पुत्रेण क्रिया कार्या विधानतः ।
बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः ॥
सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥ इति ।

यदैकत्र वासिनोऽविभक्ता बहवः पुत्राः स्युस्तदा सर्वानुमत्या ज्येष्ठेन यत्कृतं तत्सर्वैरेव कृतं भवेत् । फललाभात् । यदाऽपि विभक्तास्तदाऽप्यविभक्तेन साधारणेन(णी)कृतेन द्रव्येण । सर्वेषां तु मतमित्यादीति भिन्नविषयतया योज्यम् । अविभक्तमात्रविषयत्वे द्रव्येण चाविभक्तेनेत्यस्याऽऽनर्थक्यापत्तेः । द्रव्येण चाविभक्तेनेत्येतच्च सपिण्डीकरणपर्यन्तक्रियाविषयम् ।

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥

इति वचनात्पूर्वोक्तबृहस्पत्यादिवचनाच्च । तस्माद्विभक्तानामविभक्तानां वाऽनेकेषामौरसानां संनिधानेऽपतितादिर्विद्यमानो ज्येष्ठ एव सपिण्डी-

---

पृथगनुष्ठानप्राप्तिरवश्यं वक्तव्या । तादृशी प्राप्तिश्चेत्थं संभवति—'एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम्' । इति वचनात्सांवत्सरिकादिवत्सपिण्ड्यन्तश्राद्धान्यप्यविभक्तानामपृथगेव भवन्ति । विभक्तानां तु 'ऊर्ध्वं सपिण्डीकरणात्सर्वे कुर्युः पृथक्पृथक्' इति वचनात्सांवत्सरिकादिवत्सपिण्ड्यन्तानामपि पार्थक्येनानुष्ठाने प्राप्ते । पृथग्द्रव्या अपि सपिण्ड्यन्तानि पृथङ्नैव कुर्युरिति तन्निषेधार्थं पृथग्द्रव्या अपीति सार्थकम् । पूर्वोक्तवचनव्यवस्थामाश्रीयमाणायां तु पृथग्द्रव्या अपीति नात्यन्तावश्यकम् । एकपाकेन वसतामित्यादिवक्ष्यमाणवचनविरुद्धं चेति बोध्यम् ।

करणपर्यन्तं कुर्यात्तदसंनिधानादौ त्ववरेऽपि पुत्रा एव षोडशश्राद्ध-पर्यन्तं तावत्कुर्युरेव । तस्य नियतकालकर्तव्यत्वात् । प्रति-निध्यनुकल्पयोश्च मुख्याभावोपाधिकत्वाविशेषात्तुल्यन्यायत्वेऽपि मुख्यद्र-व्येणान्यस्य कर्तृत्वं स्वस्थां(त्वा)भावादसंभवि स्वद्रव्येण कर्तृत्वे तस्यैवाधिकारापत्तिरित्येवंरूपस्य प्रोषिते मृते वा यजमाने यजमानेषु प्रतिनिध्यभावन्यायस्य द्रव्याधिकारसाधारण्यात्पत्न्यामिव पुत्रेष्वप्र-वृत्तेः । कर्तृत्वांशे तेषामनुकल्पत्वस्य न्याय्यत्वात् । वक्ष्यमाणपुत्रा-तिरिक्ताधिकारिणां तु यद्यपि न्यायात्तत्रैव प्राप्नोति वचनं च पिण्डदो-ऽंशहरश्चेत्यादि पूर्वपूर्वस्वरूपाभावोपाधिकमेव तेषामंशग्रहण इव पिण्ड-दानेऽपि कर्तृत्वं विदधाति तथाऽपि 'असगोत्रः सगोत्रो वेति' वाक्या-रम्भसामर्थ्यात्प्रोषितावासिते पुत्र इति वाक्यारम्भसामर्थ्याच्च पूर्वपूर्वा-संनिध्यशक्त्यादावपि तेषां तत्र कर्तृत्वमवसीयते । यदि हि स्वरूपेण पूर्वपूर्वसंनिधानाद्यभावेऽप्यु( भाव एवोत्त )त्तरोत्तरस्य कर्तृत्वं तदा तदसंनिधानादिना तदन्येन तत्प्रथमदिनकृत्ये कृते पश्चात्प्रत्यासन्न-संनिधौ प्रवृत्तेऽपीति चेदिति न्यायेनोत्तरकर्माणि तस्यैव कर्तृत्वे प्राप्ते पुत्रासंनिधौ च सपिण्डनेऽपि तत्पूर्वक्रियास्विव भ्रात्रादीनामप्यधिकारे प्राप्त इदं वचनद्वयमर्थवद्भवति । सपिण्डीकरणं तु पुत्राः साग्निकश्चे-त्तदैकादशाहे द्वादशाहे वा कुर्युरेव । पिण्डपितृयज्ञार्थं साग्निकस्य तत्काले तस्याऽऽवश्यकत्वात् । निरग्निकैस्तु चरमकालं यावज्ज्येष्ठा-नुष्ठानं प्रतीक्षणीयम् । तन्मध्ये ज्ञाते ज्येष्ठेनैव कार्यम् । नो चेच्चरमकाले कनिष्ठैरपि कार्यम् । पूर्वोक्तादेव न्यायात् । पुत्रातिरिक्तानां तु विशेषो वक्ष्यते । औरसाभावे च पुत्रिकापुत्रादयो याज्ञवल्क्योक्तक्रमेण कुर्युः । तथा च याज्ञवल्क्यः—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः ।
दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः ॥

उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ।
पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ॥ इति ।

धर्मपत्नी द्विजानां द्विजैव । शूद्राणां तु मुख्यपत्न्यभावेऽपि तत्तुल्या परिणीता । तस्यां स्वस्माज्जात औरसः । अत एव विष्णुना स्वक्षेत्रे स्वयमुत्पादितः प्रथम इत्युक्तम् । एवं च यन्मनुना—

संस्कृतायां सवर्णायां स्वयमुत्पादयेत्तु यम् ।
तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकम् ॥

इति सवर्णग्रहणं कृतं तद्द्विजेषु द्विजत्वाभिप्रायेण द्रष्टव्यम् । यदपि योगीश्वरेणात्र उक्तम्—'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' इति । तदप्यौरसव्यतिरिक्तविषयम् । विधिरित्युक्तेः । तस्य च पिण्डरिक्थभागित्वेनात्र विधेयत्वात् । तेन ब्राह्मणक्षत्रियोरपादितयोः क्षत्रियावैश्यापुत्रयोरप्यौरसत्वं द्रष्टव्यम् । अत एव ब्रह्मपुराणे—' पुत्राः कुर्वन्ति विप्रा ये क्षत्रविट्शूद्रयोनयः ' इति क्षत्रियावैश्यापुत्रयोरपि पितृक्रियाकारित्वमुक्तम् । शूद्रापुत्रस्य तु तद्द्वादशविधपुत्रत्वाभावः । तच्चानुपदमेव वक्ष्यते । औरसाभावे पुत्रिकासुतः । स च द्विविधः । पुत्रिकैव सुत इत्येकः । तथा च मनुः—

अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम् ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥ इति ।

पुत्रिकायाः सुत इत्यपरः । तथा च वसिष्ठः—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेत् ॥ इति ।

स चौरससमो दायग्रहे । अयं च मातामहस्यैव पुत्रः । संविदा तु बीजिनोऽपि । अत एव यमः--

कुर्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः ।
उभयोरथ संबद्धः स कुर्यादुभयोरपि ॥ इति ।

संविच्च दर्शिता वसिष्ठेन—

अपुत्रोऽहं प्रदास्यामि तुभ्यं कन्यां भवानपि ।
पुत्रार्थी चेदिहोत्पन्नः स नौ पुत्रो भवेत् ॥ इति ।

तदभावे तु क्षेत्रजः । स च वाग्दत्तविधवायाम् 'अपुत्रां गुर्वनुज्ञातः', इति याज्ञवल्क्योक्तविधिना जातः ।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥

इति वचनादिति विश्वरूपविज्ञानेश्वराद्याः । मनुना तु पुत्रजननासमर्थस्य जीवतोऽपि पत्युः क्षेत्रे तन्नियोगेन सवर्णाज्जातः स उक्तः ।

यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य च ।
स्वधर्मेण नियुक्तायां स ज्ञेयः क्षेत्रजः सुतः ॥ इति ।

अयं च क्षेत्रिणः । 'अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः' इत्युक्तत्वात् । बीजिनोऽपि पुत्रच्छायां तस्यापि । तथा च याज्ञवल्क्यः—

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ इति ।

तदभावे गूढजः । स च सवर्णजत्वनिश्चयेऽपि पुरुषविशेषजत्वानिश्चयात्प्रच्छन्नो भर्तृगृहे सवर्णादुत्पन्नः । अयं च क्षेत्रिण एव । तथा च मनुः—

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥ इति ।

अज्ञानं च पूर्वोक्तं द्रष्टव्यम् । तदभावे कानीनः । स च सवर्णादिवापरिणीतायामुत्पन्नो मातामहसुतः । वसिष्ठोऽपि—

अप्रत्ता दुहिता यस्य पुत्रं विन्देत तुल्यतः ।
पुत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥ इति ।

मनुना तु 'परिणेतुः पुत्रः' इत्युक्तम्—

पितृवेश्मनि कन्या तु यं पुत्रं जनयेदिह ।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥ इति ।

अत्रैकस्यैवापुत्रत्वे तस्यैव । उभयोरपि तथात्वे उभयोरपीति द्रष्टव्यम् । तदभावे पौनर्भवः । स च पत्या भुक्तायामभुक्तायां वा जीवता पत्या त्यक्तायां विधवायां वा सवर्णादेव जातः । विष्णुरपि—

या तु पत्या परित्यक्ता विधवा स्वेच्छयाऽथवा ।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥ इति ।

अयं च बीजिन एव । परित्यागेन मरणेन च भर्तुः क्षेत्रे स्वत्वाभावात् । नियोगस्य चाभावात् । स्वेच्छाग्रहणाच्च । तदभावे दत्तकः । स च मात्रा पित्रा चान्यतराभावेऽन्यतरेण वाऽऽत्यन्तदुर्गत्या प्रदत्तः ।

मर्थ्येन विधिपूर्वकं दत्तः प्रतिग्रहीतृसवर्णः प्रतिग्रहीतुरेव पुत्रः । तथा च मनुः—

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥ इति ।

अद्भिरिति वसिष्ठोक्तविध्युपलक्षणम् । आपद्ग्रहणादनापदि दातुर्दाननिषेधः । यत्तु वाचस्पतिनाऽऽपदि ग्रहीतुः पुत्राभाव इति व्याख्यातं तत् ।

आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः ।
तथैकादश पुत्राः स्युः पुत्रिकौरसयोर्विना ॥

इति बृहस्पतिवचनात्—

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति क्रियालोपहेतुकौरसप्रतिनिधित्वोक्तेश्चेतरवद्दत्तकस्याप्यौरसपुत्राभावविषयत्वसिद्धेनर्थक्यात्समभिव्याहारविरोधाच्चोपेक्ष्यम् । सदृशं प्रतिग्रहीतृसवर्णं प्रीतिसंयुक्तमिति देयपुत्रविशेषणम् । ' विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः ' इति वचनात् । मातापित्रोश्चायं विशेषः-उभयोर्जीवतोः पत्युरपि पत्न्यनुमत्यैव दातृत्वम् । कथंचिदपि तदनुमत्यभावेऽत्यन्तापादि पत्युः स्वातन्त्र्यमपि । पत्न्यास्तु पत्यौ जीवति संनिहिते प्रोषिते वा तदनुमत्यैव दातृत्वं मृते तु स्वातन्त्र्यमिति । तथा च वसिष्ठः—

शुक्रशोणितसंभवः पुत्रो मातापितृनिमित्तकः ।
तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः ॥
न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषाम् ।
न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः ।

पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चाऽऽवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसंनिकृष्टमेव प्रतिगृह्णीयात् । संदेहे चोत्पन्ने दूरे शूद्रमिव स्थापयेत् । विज्ञायते ह्येकेन बहूंस्त्रायत इति । एकं पुत्रमित्युपलक्षणम् । ज्येष्ठोऽपि न देयस्तस्य पुत्रकार्यकरणे मुख्यत्वात् । स्त्रीग्रहणात्पत्युः पूर्वोक्त एव विषये स्वातन्त्र्यं द्योत्यते नतु सर्वदा । उपक्रमविरोधात् । विशेषणे निषेधसंक्रमाद्दान इव प्रतिग्रहेऽपि

स्त्रिया अधिकारः । होमस्तु न भवति । सति संभवे बन्धुसंनिकृष्टं भ्रातृपुत्रादिकम् । तदभावेऽदूरबान्धवं संनिहितदेशवर्तिपित्रादिकं ज्ञातकुलशीलमन्यमपि । परीक्षितस्यापि कथंचिद्ब्राह्मण्यादिसंदेह उत्पन्ने यावत्तन्निवृत्ति दूरे स्थापयेत्तेन न व्यवहरेत् । अपुत्रस्य पुत्रकरणावश्यकत्वद्योतनाय श्रुत्याकर्षः । विज्ञायत इति श्रूयत इत्यर्थः । एकेनानौरसेनापि पुत्रेण बहून्पित्रादीन्नरकात्त्रायत इति । अत्र च होमातिरिक्तः सर्वोऽपि ग्रहणापादानग्रहीतृगोचरो नियमः क्रीतस्वयंदत्तकृत्रिमापविद्धेष्वपि यथासंभवं द्रष्टव्यो दृष्टार्थत्वात् । वसिष्ठेन विक्रयत्यागोपादानाच्च । स्वयंदत्ते तु होमोऽपि । तत्रापि प्रतिग्रहसत्त्वात् । दत्तकाभावे क्रीतो मातापितृभ्यां पूर्ववत् । यत्तु—

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकसुतस्तस्य सदृशोऽसदृशोऽपि वा ॥

इति मानवसदृशग्रहणं तद्गुणासादृश्यपरम् । सजातीयेष्वयं प्रोक्त इत्युपसंहारात् । तदभावे कृत्रिमः । स च मातापितृविहीनः प्रौढो धनादिप्रलोभनेन स्वयं पुत्रार्थिना पुत्रीकृतः पूर्ववत् । मनुरपि—

सदृशं यं प्रकुर्वीत गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥ इति ।

तदभावे स्वयंदत्तः । स च मातापितृविहीनस्ताभ्यां त्यक्तो वा तवाहं पुत्रोऽस्मीति स्वयमात्मानं दत्तवान्पूर्ववद्गृहीतः । मनुरपि—

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्तु स्वयंदत्तस्तु स स्मृतः ॥ इति ।

तदभावे सहोढजः । स च सवर्णात्संभूतो गर्भे स्थितो गर्भिण्यां परिणीतायां स्वीकृतः पश्चादुत्पन्नो वोढुः पुत्रः । तथा च मनुः—

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥ इति ।

ननु कन्यामुपयच्छेतेति कन्याया एव विवाहविधानात्कथं गर्भिण्याः संस्कारः । अत्र केचित्तावदाहुः—न पुरुषसंबन्धेन कन्यात्वमपैति किंतु मन्त्रवत्संस्कारेणैव ॥

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥

इति मनुवचनात् । अत एव मनुना व्यवायपूर्वकत्वेनोक्तयोरपि गान्धर्वपै-
शाचविवाहयोरस्त्येव पाणिग्रहणहोमादिसंस्कारः । तथा च देवलः—

गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥ इति ।

तत्रोपगन्तैव संस्कर्ता गर्भिण्यास्त्वन्य इत्यन्यदेतत् । अत एव च
नियुक्तागमनाद्वावाङ्गविवाहवद्धर्ममात्रं तत्र होमादि । (वाग्दानमात्रेणैव
कन्यात्वापगमाज्ज्येष्ठीयकेवलस्य त्वा(स्वत्वा)वरुद्धायां चास्यामेतत्स्व-
त्वसंभवो न तद्विनाभूतभार्यत्वलक्षणातिशयस्यातिभारः ।) ननु भार्या-
त्वलक्षणालौकिकातिशयजनकं संस्कारकर्म विवाह एव च कन्यामुपय-
च्छेतेति विधिर्द्वितीयानिर्देशादित्यपि नाङ्गीकर्तव्यम् । कन्यां पाणिग्र-
हणेनैव संस्कुर्यात् । क्षतयोनित्वेऽपि संस्कार(रा)भावेन कन्यात्वानपग-
मात्तत्रापि तद्विधिप्रवृत्तौ बाधकाभावात् । प्रथमव्यवायेन स्त्रीपुरुषयोः
कन्यापत्यभ्युगमननिषेधातिक्रमनिमित्तप्रत्यवायसंभवेऽप्यग्रे गान्धर्वादौ
तस्यैव पुरुषस्य गर्भिणीपरिणयनेऽन्यस्य स्त्रियाश्चोभयत्र तत्परिहारार्थं
गान्धर्वगर्भिणीपरिणयनादेरपि भार्यापतिभावसंपादकत्वेन संस्कारकर्म-
त्वाच्च । अत एव गान्धर्वाद्यूढायां गर्भिण्यां च जातः पुत्रो वोढुरेव ।
तस्यां भार्यात्वेन स(स्व)त्वात् । नियुक्तायास्तु संस्कृतत्वेनाकन्यात्वाद्दे-
वरादिपरिणयनं धर्ममात्रमेव । यद्यपि च नियोगो वाग्दत्ताविषयस्त-
थाऽपि वाग्दानसंप्रदानस्य पतित्वोक्तेर्नियुक्ताजस्य क्षेत्रिपुत्रत्वोक्तेश्च
संपूर्णभार्यात्वाभावेऽपि वाग्दानमात्रेणैव ज्येष्ठस्वत्वं कन्यात्वापगमश्च
द्रष्टव्यः । कन्योक्तिस्तु संपूर्णसंस्काराभावाभिप्रायेण । संपूर्णसंस्कृ-
तायां नियोगं प्रतिषिध्य मनुना यस्या म्रियेतेत्याद्युक्तेः । अन्यथा—

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
नाकन्यासु क्वचिन्नॄणां लुप्तधर्मक्रिया हि ताः ॥

इति निषेधाप्रवृत्तेस्तद्विवाहविधेर्वैयर्थ्यप्रसङ्गात् । अत एवाप्राप्त-
त्वेनानेकगुणोपादानेन च विधेयत्वाद्विकेऽस्मिन्विवाहे प्रजार्थविवाहा-
ख्योदकप्राप्त्यन्यपूर्वापर्युदासापवादत्वेनापुत्रां गुर्वनुज्ञात इत्यादि व्या-
ख्यातं विज्ञानेश्वरेण । अनन्यपूर्वाशब्दश्च कन्याशब्दसमानार्थत्वादन्या-
दत्तापर एव । नत्वन्यानुपभुक्तपरोऽपि । गर्भिणीसंस्कारानुपपत्तिप्रस-
ङ्गात् । न चात्र संस्कारो न विधीयते । येन नियुक्तावद्वाचनिकं धर्ममा-
त्रमित्युच्येत ।

बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥

इत्यनेनापि वाचोयुक्तिविशेषेणापहरणेन कन्यात्वनिवृत्तिशङ्कापि- शाचीनिरासमात्रं क्रियते न त्वकन्याया एव तस्याः कन्यातुल्यत्वे- नान्यस्मै दानं विधीयते । वचनभारकल्पनापत्तेरकन्यात्वे बीजाभा- वाच्च । अत एव च कानीनः कर्ण इत्यपि युज्यते । अक्षतयोनिवच- नत्वे कन्यायाः पुत्र इति व्याघातात् । वर्ण्यते च शकुन्तलोपाख्या- नादावितिहासपुराणेषु क्षतयोनीनामपि विवाहः । एवं च—

सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते ॥

इति मनुवचने क्षतयोनिषु वोढुरप्युत्पन्नानां तज्जातीयत्वनिवृत्त्यर्थ- मक्षतयोनिग्रहणं पृथगुक्तम् । अन्यथा तासां विवाहसंस्काराभावेन मुख्यपत्नीत्वाभावात्तद्ग्रहणेनैव तत्प्रयोजनलाभात्तद्वैयर्थ्यप्रसङ्गात् । न च तासां विवाहसत्त्वेऽपि कर्मानधिकाराद्यज्ञसंयोगनिमित्तं पत्नीत्वं नास्त्येवेति वाच्यम् । विवाहरूपयज्ञसंयोगादेव तदुत्पत्तेः । तस्यापि पूषवरुणादियागरूपत्वात् । पाणिग्रहणिका मन्त्रा इत्यादिनिषेधोऽपि संस्कृताविषय एव न क्षतयोनिविषयः । मन्त्रलिङ्गस्य हेतुत्वाभिधा- नान्मन्त्राणां च गार्हपत्याय भार्यापतिभावाय देवा मह्यमेव त्वामदुर्द- त्तवन्तो न त्वन्यस्मै । अहमेव त्वामितः पितृकुलात्प्रमुञ्चामि न त्व- न्येन त्वं तथा कृता । अर्यमादयो देवा इदानीमिमामितः प्रमुञ्चन्तु नतु पूर्वं प्रमुक्तवन्तः । वाचा(तावाचा)मिह विवहावहै न तु पूर्वं व्यूढावि- त्यादि प्रकारेण संस्कृतापरत्वात् । न त्वक्षतयोनिपरत्वे किंचिन्मन्त्र- लिङ्गं पश्यामः । संभोगमात्रेण तु स्वत्वापनयरूपापितृकुलप्रमोकासं- भवात् । कानीनपौनर्भवयोर्मातामहपुत्रत्वाद्यनुपपत्तिप्रसङ्गात् । यत्त्व- वैदिकत्वान्मन्त्रार्थमजानानैः साहसिकैः कुल्लूकवाचस्पत्यादिभिः कन्या अग्नि(म)यक्षतेति मन्त्रलिङ्गमुदाहृतं तदप(य)क्षतेति बहुवचना- न्तभूतनिर्देशसमभिव्याहाराद्वितिपाठाच्च बहुवचनान्तदेवकन्यापरक- न्याशब्देन संस्क्रियमाणकन्याप्रकाशनाभावादसंस्कृताक्षतयोनिपरत्वेन तस्य संदिग्धत्वाच्चोपेक्ष्यम् । अत एवार्यमणमित्यादिमन्त्राणां पत्न्या होतृत्वेऽपि पतिप्रयोज्यत्वमुक्तं वृत्तिकृता । तस्माद्वृतपुरुषसं-

प्रयोगाच्च। अपि संस्काराभावेन कन्यात्वानपायाद्युक्त एव गान्धर्वा-
दिवद्गर्भिण्या अपि परिणयः। केवलं निषेधातिक्रमपूर्वकत्वात्कन्याग-
मननिषेधप्रवृत्तिसंपादनेन च केवलदृष्टार्थत्वाच्च तद्वदेव निन्द्यः। अत
एव गान्धर्वादीनां मैथुनमात्रविहितत्वलक्षणं मैथुनत्वं तज्जातपुत्राणां
च संतानाज्व(व)र्धनत्वमुक्तं स्मृतिषु। पूर्वोपगन्तुर्वोढुश्चान्यत्वेन निन्द्यत-
मत्वाच्च विवाहेषु गर्भिणीपरिणयस्यापाठ इति। मेधातिथिप्रभृतयस्तु
कन्याकुमारीशब्दौ प्रथमवयोवचनावनुपभुक्तपूर्वस्त्रीवचनौ च। कोशा-
त्प्रयोगाच्च। न त्वसंस्कृतमात्रवचनौ। तदभावात्। वेश्याजीविनीनामसं-
स्कृतानां गमने कन्यागमनदोषापत्तेश्च। विवाहप्रकरणे त्वनुपभुक्तवच-
नावेव। लोकेऽपि तत्प्रसङ्गेऽज्ञानादक्षतयोनिं परिणेतुकामस्यान्यैर्नैषा
कुमारी नष्टमस्याः कौमारमित्यादिबोधनादिव्यवहारस्य तद्विषयत्वात्।
अन्यत्रापि प्राचुर्येण तत्रैव प्रयोगाच्च। क्षतयोनेरपि परिणये च गर्भा-
धानादिसंस्काराङ्गमन्त्राणां विष्णुर्योनिं कल्पयत्वित्यादीनामसमवे-
तार्थत्वापत्तिः। मैथुनक्षमत्वरूपस्य योनिकल्पनस्य प्रथममेव
वृत्तत्वेन प्रार्थनाऽसंभवात्। न च गान्धर्वादिभिन्नोढाविषयत्वं
तेषां युक्तमविशेषश्रवणात्। तथा च कन्यामुपयच्छेतेत्यक्षतयोनेरेव
विवाहाभिधानाद्गान्धर्वलक्षणार्थे इच्छयाऽन्योन्यसंयोगः कन्यायाश्च
वरस्य चेति मनुवचने संयोग एकत्र देशे संगतयोरन्योन्येच्छया त्वं
मे पतिर्भव त्वं मे भार्या भवेति समयरूपो द्रष्टव्यः। पैशाचलक्षणे
सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति इत्यत्रोपगच्छतिरालिङ्गनो-
पगूहनचुम्बनाद्युपगमनार्थव्यापारपरो द्रष्टव्यः। अत एवाऽऽश्वलायन-
सूत्रयाज्ञवल्क्यस्मृत्यादौ मिथः समयच्छलापहरणमात्रं तयोर्लक्षणमु-
क्तम्। एवं च विवाहविधौ कन्याशब्दस्याक्षतयोनिवचनत्वेन गर्भिण्या-
स्तदप्राप्तेर्गर्भिणीत्यत्र संस्कारस्यानुवादप्रतीतावप्यनुपपत्त्या विधि-
रेव द्रष्टव्यः। स च संस्कारः कन्यासंस्कारवन्न भार्यापतिभावसंपा-
दकः। प्रमाणाभावात्। किंतु तद्धर्मकं धर्ममात्रं नियुक्तासंस्कारवत्। तस्य
च प्रयोजनं तस्याः कन्यात्वपरभार्यात्वविधवात्वाभावात्तद्गमने द्विती-
योपगन्तुः कन्यागमननिमित्तदोषाभावेऽपि स्वभार्यात्वस्याप्यभावात्स्व-
दारनिरतः सदेति नियमातिक्रमनिमित्तप्रसक्तदोषपरिहारो भार्यात्वा-
संपादनेऽपि तद्वदेव। अन्यथाऽऽनर्थक्यापत्तेः। वोढुरित्यनेनापि म-

विवाहकत्याभिज्ञा। तस्य स्वीकर्तृपात्रवचनत्वात्। पूर्वोक्तरीत्या गर्भिण्या विवाहाभावात्। तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवमित्यत्राप्येवमेव। यद्यनूढा तदा मातामहस्य यद्यूढा तदा वोढुरिति मिताक्षराऽपि यद्युपगन्त्रे दीयते तदा तस्य, न चेन्मातामहस्येत्येवं व्याख्येया। विवाहासंभवात्। तत्रोपगन्तैव स्वीकर्ता गर्भिण्यास्त्वन्य इति विशेषः। एवं च

सा चेदक्षतयोनिः स्याद्गतप्रत्यागताऽपि वा।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति॥

इति मनुवचनेऽक्षतयोनेः पुनः (पुनर्भ्वाः) संस्कारार्हत्वोक्तिः संगच्छते। अन्यथा तस्याः संस्कृतत्वेन तदनुपपत्तिप्रसङ्गात्। धर्ममात्रे(त्वे) च पुनःशब्दानुपपत्तेः। गतप्रत्यागतायामप्यक्षतयोनित्वमपेक्षितमेव। पूर्वा तु पत्या त्यक्ता विधवा वा। इयं तु स्वयमेव जीवन्तं पूर्वपतिं त्यक्त्वाऽऽगतेति भेदः। अत एव च गर्भिण्यादिपरिणयस्य विवाहेष्वपाठः। यत्तु सर्ववर्णेष्वित्यादिवर्णलक्षणार्थमनुवचनेऽक्षतयोनिग्रहणं तल्लोकेऽसंस्कृतास्वपि लक्षणया रजकस्य पत्नीत्यादिपत्नीशब्दप्रयोगदर्शनादत्र च लाक्षणिकार्थग्रहणे प्रमाणाभावेऽपि मन्दमतशङ्कानिवृत्त्यर्थमिति प्रपञ्चेनोक्तं मेधातिथिना तद्व्याख्यानावसरे। पाणिग्रहणिका मन्त्रा इत्याद्यप्यक्षतयोनिपरमेव। कन्यामुपयच्छेतेति नियमविधेः पूर्वोक्तयुक्त्या तत्परत्वात्तसिद्धार्थानुवादत्वाच्चैतस्य। मन्त्रगतानां च ते त्वा त्वामिमामित्यादीनां संनिहितवाचिपदानां विधिपरतन्त्रत्वेन विधिविषयीभूततत्परत्वात्। नियमादिगर्भत्वे च प्रमाणाभावेन मह्यं त्वाऽदुरित्यादीनामौदासीन्यात्। यथाकथंचिच्चर्या नोऽस्मभ्यमेव उरू विश्रयाते विवृणोति विवहावहै ततः पश्चादेव प्रजां प्रजनयावहै प्रजोत्पत्त्यनुकूलं व्यवायलक्षणं व्यापारं करवावहै नतु पूर्वं कृतवन्ता इ(वि)त्यादि प्रकारेणाक्षतयोनिपरत्वस्यापि दर्शयितुं शक्यत्वात्। अत एव मेधातिथिना कन्याशब्दस्याक्षतयोनिवचनत्वात्कन्या अग्निमयक्षतेति मन्त्रगतपुराकल्पे कन्यानां विवाहयोगे कर्तृत्वनिर्देशाद्गार्ह्ये(र्ण्ये)नयपूर्वपक्षानुसारेण मन्त्रबलादेवाक्षतयोनीनां विवाह इत्युक्त्वा तत्रापरितोषात्परमार्थस्तु कन्यामुपयच्छेतेति विधिबलादेव तासां विवाहः। मन्त्राः पुनर्विहितमेवार्थमभिवदन्ति। पुनर्मन्त्रेषु कन्याशब्द-

श्रवणात्कन्यानां विवाह इत्युक्तम्। माच्यैस्तु मीमांसानध्ययनात्तद्ग्रन्थता-त्पर्यमजानानैः संस्क्रियमाणकन्याप्रकाशकले(त्वे)नैव कन्यामग्निमयक्षतेति तेनोदाहृतमिति भ्रमेण कन्याविवाहे तस्यासमवेतार्थत्वापत्तिरित्युक्तं तदुपेक्ष्यमित्युक्तम्। कानीनः कर्ण इत्यादौ तु लक्षणयाऽसंस्कृतापरत्वं कन्याशब्दस्येति। अत्रेदं तत्त्वम्। कन्याशब्दस्यानन्यपूर्वाशब्दपर्याय-त्वात्सार्वजनीनप्रयोगाच्च दानोपभोगोभयाभावः प्रवृत्तिनिमित्तम्। एवं चान्यतरस्यस्त्व उभयाभावेन कन्यात्वाभावान्मुख्यविवाहाप्राप्तेः स्मृति-यूक्तः पुनर्भूसंस्कार उपभुक्तासंस्कारश्च द्वयमपि वाचनिकं धर्ममात्रम्। प्रयोजनं च तस्य पूर्वोक्तमेव। अत एव च द्वयस्यापि विवाहेष्वपाठः। तथा च मिताक्षरायां दानेनोपभोगेन वा पुरुषान्तरापरिगृहीतामित्यन-न्यपूर्वापदं व्याख्यातम्। अन्यपूर्वा न परिणेयेत्युक्ते का साऽन्यपूर्वेत्य-पेक्षायां तत्स्वरूपप्रतिपादकत्वेनाक्षता च क्षता चैवेत्यादि व्याख्यातम्। अन्यत्तु पूर्वोक्तमेवेत्यलं प्रसङ्गागतेन। सहोढजाभावेऽपविद्धः। स च मातापितृभ्यां तदन्यतरेण वा दोषाभावेऽपि भरणासामर्थ्येन मूलजात-त्वादिना वा त्यक्तोऽज्ञातपित्रादिः सवर्णः पुत्रत्वेन परिगृहीतः। मनुरपि—

मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा।
यं पुत्रं प्रतिगृह्णीयादपविद्धस्तु स स्मृतः॥ इति।

एते च द्वादश पुत्राः। यद्यपि—

औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च।
पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा।
स्वयं चापगतः पुत्रा द्वादशैते प्रकीर्तिताः॥

इति नारदस्मृतौ मन्वादिस्मृतौ च क्रमान्तरेणोक्तास्तथाऽपि तत्र परि-गणनमात्रदर्शनात्क्रमो योगीश्वरोक्त एव ग्राह्यः। पूर्वाभावे परः पर इति क्रमविधानात्। विष्णुस्मृतौ तु—औरसक्षेत्रजपुत्रिकापुत्रपौनर्भव-कानीनगूढोत्पन्नसहोढजदत्तकक्रीतस्वयमुपगतापविद्धयत्रक्वचनोत्पादि-तानां प्रथमद्वितीयादित्वेनाभिधानादेतेषां पूर्वः पूर्वः श्रेयान् स एव दायहर इत्युक्तेश्च यद्यपि क्रमो विहित एव तथाऽपि विज्ञानेश्वरादिभि-र्योगीश्वरोक्तक्रमस्यैवाऽऽदृतत्वात्स एवोक्तः। प्राच्यानां तु याज्ञवल्क्यया-

शुक्रवैधक्रमातिक्रमेण नारदीयपाठक्रमाङ्गीकरणं क्रमप्रमाणस्वरूपतत्फ-लाबलज्ञाननिबन्धनम् । अत्र च

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ।
स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥ इत्युक्त्वा
क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति मनुनोक्तत्वाद्यत्र क्वचनोत्पादितस्तु द्वादश इति विष्णुवचनात्–

ब्राह्मणेन न कर्तव्यं शूद्रस्यैवौर्ध्वदेहिकम् ।
शूद्रेण वा ब्राह्मणस्य विना पारशवात्क्वचित् ॥

इति पारस्करवचनाच्च पूर्वोक्तद्वादशविधपुत्राभावे शूद्रापुत्रस्यापि द्विजातिपित्रौर्ध्वदेहिकेऽधिकार इति प्रतीयते । विज्ञानेश्वरादिभिस्तु याज्ञ-वल्क्यादिभिरनुक्तत्वात्

यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽपि वा भवेत् ।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः ॥

इति च मनुनाऽन्यपुत्राभावेऽपि तस्य तस्य कृत्स्नदायालाभोक्तेर्य-श्चार्थहरः स पिण्डदायीति च विष्णापस्तम्बाभ्यामुत्सर्गतो रिक्थग्रह-णस्य श्राद्धाद्यधिकारप्रयोजकत्वोक्तेः षण्ढादिवत्तस्याप्यनधिकारावग-मात्राधिकारिषु परिगणितः । यच्च—

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वास्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

इति मनुवचनम् । तद्भ्रातृपुत्रस्य पुत्रीकरणसंभवेऽन्येषां पुत्री-करणनिषेधार्थं नतु तस्य पुत्रत्वप्रतिपादनार्थम् । श्राद्धादौ रिक्थग्रहणे च भ्रात्रनन्तरं तस्याधिकारस्मरणात् । सपत्नीपुत्रस्य तु गौणपुत्रत्व-मस्त्येव । तेन स्त्रीश्राद्धे औरसस्तदभावे पौत्रिकेयस्तदभावे क्षेत्रजाद्या इत्यधिकारिक्रमः ।

बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥

इत्यस्य पूर्ववद्व्याख्यानसंभवेऽपि—

विवृध्व्यादौरसः पुत्रो जनन्या और्ध्वदेहिकम् ।
तदभावे सपत्नीजः क्षेत्रजाद्यास्तथा वृताः ।
तेषामभावे तु पतिस्तदभावे सपिण्डकाः ।

इति कात्यायनवचनात् । एवं च पुत्राभावे दुहिता तदभावे सपत्नीपुत्र इति शूलपाण्युक्तः क्रमो हेयः । पुत्रस्य चानुपनीतस्याप्यत्राधिकारः ।

नह्यस्मिन्युज्यते कर्म किंचिदामौञ्जिबन्धनात् ।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥

इति मनुवचनात् । स च कृतचूडस्यैव । त्रिवर्षादूर्ध्वं स्वकृतचूडस्यापि । तथा च सुमन्तुः—

अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम् ।
यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः ॥ इति ।

यत्तु श्राद्धदीपकलिकादौ—

कृतचूडस्य कुर्वीत उदकं पिण्डमेव च ।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥

इति व्याघ्रनाम्ना लिखितं वचनं तन्मनुस्मृतिविरोधादनादेयम् । यद्यपि देवयाज्ञिकेनास्य प्रथमवर्षकृतचूडाविषयत्वमुक्तं तदपि सुमन्तुवचने 'यदि स्याच्च त्रिवत्सरः' इति पृथगुपादानात्तत्पूर्वमपि कृतचूडस्य दहनादावधिकारावगमादयुक्तम् । अशक्तौ त्वग्निदानमात्रं समन्त्रकं तेन कर्तव्यमन्यच्चान्येन ।

असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम् ।
कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि ॥ इति ।

कात्यायनवचनात् । यत्तु देवयाज्ञिकेन शक्तेनाप्यनुपनीतेनाग्निदानमेव कर्तव्यमित्युक्तं तत्—

कुर्यादनुपनीतोऽपि श्राद्धमेकं तु यः सुतः ।
पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य तु ॥

इति वृद्धमनुवचनाच्छ्राद्धेऽप्यधिकारावगमादयुक्तम् । एतच्चौरसविषयमेव । अन्ये तूपनीता एवाधिकारिण इति कालादर्शे ।

**पुत्राभावे क्रमेण स्वकुलजजननीवंश्यशिष्यर्त्विजो वाऽऽचार्यो वा ।**

पुत्राणां पूर्वोक्तानां गौणमुख्यानामभावे स्वकुलजाः पौत्रप्रपौत्रादयः सपिण्डाः सोदकाश्च । जननीवंश्या मातुलतत्पुत्रादयः सपिण्डाः सोदकाश्च । शिष्य ऋत्विग्वा आचार्यो वा क्रमेण पूर्वपूर्वाभाव उत्तरोत्तर इत्येवं सकलश्राद्धविधिं कुर्युः । तत्र पुत्राभावे पौत्रस्तदभावे प्रपौत्रः ।

पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसंततिः ।
सकुल्यसंततिश्चैव क्रियार्हा नृप जायते ।

इति विष्णुपुराणात् । अत्र च पुत्रपदं जात्यभिप्रायैकवचनान्तं गौणमुख्यपुत्रपरम् ।

पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधामिति ऋष्यशृङ्गवचनात् । नैव पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः । इति कात्यायनवचनाच्च । क्षेत्रजादिपुत्रत्वोक्तेश्चेदमेव प्रयोजनं यत्पुत्रग्रहणेन तेषामपि ग्रहणमिति । तथा च

पौत्रश्च पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।
रिक्थे च पिण्डदाने च समौ तौ परिकीर्तितौ ॥

इति बृहस्पतिवचनं न पौत्रगौणपुत्रयोर्विकल्पार्थं किं त्वधिकारमात्रप्रतिपादनार्थं द्रष्टव्यम् । कालादर्शे तु—औरसाभावे पौत्रः प्रपौत्रश्च तदभावे क्रमेण पुत्रिकापुत्रक्षेत्रजदत्तकक्रीतकृत्रिमस्वयंदत्तापविद्धा इत्युक्तम् । पुत्रः पौत्रः प्रपौत्रश्च पुत्रिकासुत एव चेति च स्मृतिसंग्रहवचनं तत्र प्रमाणत्वेन लिखितम् । सर्वेषामभावे भर्तुः पत्नी पत्न्याश्च पतिः । तथा च शङ्खः—

पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ।
पुत्राभावे तु पत्नी स्यात्पत्न्यभावे च सोदरः ।
भार्यापिण्डं पतिर्दद्याद्भर्त्रे भार्या तथैव च ।
श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः ॥ इति ।

न भार्यायाः पतिर्दद्यादपत्ये भार्या तथैव चेति छन्दोगपरिशिष्टं प्रपौत्रपर्यन्तसद्भावविषयम् । सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकमिति मार्कण्डेयपुराणं कुलद्वयेऽपि चोत्प( न्न )न्ने स्त्रीभिः कार्या क्रिया नृपेति विष्णुपुराणं चाऽऽसुरादिविवाहोढाविषयम् । स्त्रीग्रहणात् । तथा च आपस्तम्बः—

धर्म्यैर्विवाहैरूढा या सा पत्नी परिकीर्तिता ।
सहाधिकारिणी ह्येषा यज्ञादौ धर्मकर्मणि ।
क्रयक्रीता तु या नारी सा न पत्न्यभिधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां मुनयो जगुः ॥ इति ।

असवर्णाविषयमिति शूलपाणिः । अत्र च यद्यपि—

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥

इति वृद्धमनुवचने सहनिर्देशाद्विभक्तासंसृष्टस्य पत्नी, तद्धनग्रहणाधिकारात् । अविभक्तसंसृष्टस्य तु सोदरस्तस्यास्तदभावादिति प्रतीयते । तथाऽपि वचनात्सर्वत्रौर्ध्वदेहिकाद्यधिकारिणी भार्यैव । एकयोगनिर्दिष्टयोरपि वचनान्तरवशाद्भिन्नविषयत्वे न दोषः । यश्चार्थहरः स पिण्डदायीति तूत्सर्गः । दुहित्रादिसत्त्वे पुत्रादीनां मातृधनग्रहणेऽधिकाराभावेऽपि तदौर्ध्वदेहिकादावधिकारात् । सर्वसंबन्ध्यभावेऽर्थग्रहणेऽधिकारप्रतिपादकं वा । कालादर्शे तु पूर्वोक्तापविद्धपर्यन्तपुत्राभावे पत्नी । तदभावे गूढजकानीनपौनर्भवसहोढा इत्युक्तम् ।

कानीनगूढसहजपुनर्भूतनयाश्च ये ।
पत्न्यभावे तु कुर्युस्ते अप्रशस्ता यतः स्मृताः ॥

इति स्मृतिसंग्रहवचनं च तत्र प्रमाणत्वेनोक्तम् । अप्राशस्त्यं च स्मृतं विष्णुना—

अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः ।
पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः ॥ इति ।

मूलस्मृतिसंग्रहविरुद्धक्रमाभिधानं च तत्र वचनान्तरबलादन्यप्रवेशेनौरसादीनां क्रमनिर्देशात्प्रतीयमानमव्यवधानमात्रं बाध्यम् । पौर्वापर्यं तु योगीश्वरोक्तमेव ग्राह्यमित्यभिप्रायेण । पत्न्यभावे 'पुत्राभावे तु पत्नी स्यात्पत्न्यभावे सहोदरः' इत्यादिवचनैर्भ्रातुरधिकारः प्रतीयते ।

पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम् ।
अपुत्रस्य तु या पुत्री साऽपि पिण्डप्रदा भवेत् ॥

इत्यादिवचनैश्च दुहितुः ।

अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम् ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥

इत्यादिभिश्च दौहित्रस्य। तत्रेत्थं व्यवस्था—विभक्तासंसृष्टस्य पत्न्यभावे दुहिता। पुत्रेष्वित्याद्युक्तवचनात्। तद्धनग्रहणे तस्या एवाधिकारात्। तथा च बृहस्पतिः—

भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता।
अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम्॥
तस्मात्पितृधनं त्वन्यः कथं गृह्णाति मानवः॥

इति धनग्रहणस्य चोपकारव्याप्तत्वात्। यश्चार्थहरः स पिण्डदायीत्यस्य च विरोधे व्यवस्थापनमपि प्रयोजनं संभवत्येव। धनग्रहणं च यद्यप्यनूढाया अप्यस्ति तथाऽपि पिण्डदानादौ संस्कृतैवाधिकारिणी।

दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता।
आशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोः॥

इति भरद्वाजस्मरणात्। तथैव दुहित्रभावे दौहित्रः। तदभावे तस्यैव तद्धनग्रहणेऽधिकारात्। अकृता वेत्यादिमनुवचने—

अपुत्रापौत्रसंताने दौहित्रा धनमाप्नुयुः।
पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रका मताः॥

इति विष्णुवचनेन च तेन सह निर्देशात्। तस्यैव दौहित्राभावे भ्राता। शातातपः—पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथेत्यत्र चशब्दोक्तदौहित्रानन्तरं तस्य तद्धनग्रहणाधिकारप्रतिपादनात्। स्मृतिसंग्रहे चेदं स्पष्टमुक्तम्—

सुतः कुर्यात्पितुः श्राद्धं पत्नी च तदसंनिधौ।
धनहार्यथ दौहित्रास्ततो भ्राताऽथ तत्सुतः॥ इति।

पत्नी चेति च शब्दाद्दुहिता। अविभक्तसंसृष्टस्य तु पत्न्यभावे भ्रातैव। तत्र पत्न्यभावे तु सोदर इत्यादिवाक्यस्य प्रवृत्तेरप्रत्यूहत्वात्। आदित्यपुराणेऽपि—

भ्रातुर्भ्राता स्वयं कुर्यात्तद्भार्या चेन्न विद्यते।
तस्य भ्रातृसुतः कुर्याद्यस्य नास्ति सहोदरः॥ इति।

तत्र सोदरासोदरसमवाये सोदर एव। संनिकर्षात्। तत्रापि ज्येष्ठकनिष्ठसमवाये कनिष्ठः। नानुजस्य तथाऽग्रज इति च्छन्दोगपरिशिष्टस्य भ्रातृत्वादविशेषेणाधिकारप्राप्तौ कनिष्ठसद्भावे ज्येष्ठस्य तन्निषेधत्वात्। तत्समभिव्याहृतस्य न योषितः पतिर्दद्यात्। न पुत्रस्य पिता

कुर्यादित्यस्य वचनान्तराविरोधायाधिकार्यन्तराभावविषयत्वात् । कनिष्ठबहुत्वे प्रथमं मृतानन्तरः, तदभावे तदनन्तरः संनिकर्षात् । कनिष्ठाभावे ज्येष्ठः, भ्रातृत्वान्निषेधाप्रवृत्तेश्च ।

यदि स्नेहेन कुर्यात्तां सपिण्डीकरणं विना ।
गयायां तु विशेषेण ज्यायानपि समाचरेत् ॥

इति च्छन्दोगपरिशिष्टाच्च । ज्येष्ठबहुत्वे च मृतानन्तरक्रमेण । सोदराभावे भिन्नोदरः पूर्ववत् । तस्यापि भ्रातृत्वात् । केचित्तु दुहितृदौहित्रयोर्भिन्नगोत्रत्वान्न कदाचित्सगोत्राय श्राद्धं कार्यमगोत्रजैरित्यस्याऽऽनर्थक्यपरिहाराय वर्तमाना(न)सगोत्रायेत्यर्थकत्वात् । अगोत्रजैरिति च सगोत्रसद्भावे भिन्नगोत्रस्य श्राद्धाद्यनधिकारोक्तेर्विभक्तासंसृष्टस्यापि भ्रातैव कुर्यादिति वदन्ति । कनिष्ठज्येष्ठसमवाये कनिष्ठानां ज्येष्ठानां वा समवाये च पूर्ववदित्यर्थः । तदभावे भ्रातृपुत्रः । भ्राता वा भ्रातृसंततिरिति विष्णुपुराणात् । आदित्यपुराणे सहोदरग्रहणं भ्रातृमात्रोपलक्षणं पूर्वसामान्येनोक्तम् । सोदरासोदरभ्रातृपुत्रादिसमवाये पूर्ववत् । भ्रातृपुत्राभावेऽपि पिता पुत्रो भ्राता पिता वाऽपीति प्रचेतःस्मरणात् । दत्तानामप्यदत्तानां कन्यानां कुरुते पितेति ब्रह्मपुराणाच्च । तदभावे माता । धनग्रहणे पितराविति निर्देशात् ।

असमाप्तव्रतस्यापि कर्तव्यं ब्रह्मचारिणः ।
श्राद्धादि मातापितृभिर्न तु तेषां करोति सः ॥

इति ब्राह्माच्च । न च माता न च पिता कुर्यात्पुत्रस्य पैतृकमिति कात्यायनवचनं तु भ्रातृपुत्रपर्यन्तसद्भावे द्रष्टव्यम् । मात्रभावे श्वशुरयोः स्नुषा । श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डका इति शङ्खवचनात् । स्नुषाभावे भगिनी । तत्रानुजाग्रजासोदरासोदरसमवाये भ्रातृवत् । तदभावे तत्पुत्रः । समवाये तद्वदेव । तथा च कात्यायनः—

अनुजा वाऽग्रजा वाऽपि भ्रातुः कुर्वीत संस्क्रियाम् ।
ततस्त्वसोदरस्तद्वत्क्रमेण तनयस्तयोः ॥ इति ।

स्मृतिसंग्रहेऽपि—

पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा ।
भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा ।
असंनिधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः ॥ इति ।

तदभावे पितृव्यतत्पुत्रादयः सपिण्डाः प्रत्यासत्तिक्रमेण । तदभावे सोदकास्तथैव । तदभावे मातामहमातुलतत्पुत्रादयो मातृसपिण्डाः प्रत्यासत्तिक्रमेण । तदभावे तत्सोदकास्तथैव । तथा च विष्णुपुराणे—

पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसंततिः ।
सपिण्डसंततिश्चैव क्रियार्हा नृप जायते ।
एषामभावे सर्वेषां समानोदकसंततिः ।
मातृपक्षस्य पिण्डेन संबद्धा ये जलेन च ॥ इति ।

तदभावे त्रिविधा बान्धवाः । गोत्रजानन्तरं शिष्यादिभ्यः पूर्वं तेषां धनग्रहणाधिकारप्रतिपादनात् । तत्रापि प्रत्यासत्तेः प्रथमं स्वबान्धवः पश्चात्पितृबान्धवः पश्चान्मातृबान्धव इति क्रमः । तदभावे स्त्री । तत्रापि प्रथममासुरादिविवाहोढाऽसवर्णा । तदभावे परिणीता सवर्णा । तदभावेऽवरुद्धाऽपि शूद्राव्यतिरिक्तेति क्रमः । तथा च तत्रैव । कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृपेति । कुलद्वयेऽनेन च बान्धवा अपि गृह्यन्ते । तेषामपि तत्संबन्धात् । तदभावे गुरोः शिष्यः । तदभावे यजमानस्य ऋत्विक् । तदभावे शिष्यस्याऽऽचार्यः सब्रह्मचारी वा । पुत्राभावे सपिण्डा मातृसपिण्डा शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्याविति गौतमवचनात् । शिष्यानन्तरं सब्रह्मचारिणो धनग्रहीतृत्वोक्तेश्च । राज्ञश्च पुरोहितो मन्त्री भृत्यश्च क्रमेण ।

मृते राज्ञि सपिण्डेऽपि निरपत्ये पुरोहितः ।
मन्त्री वा तदशौचं तु तीर्त्वा पश्चात्करोति सः ॥

इति ब्रह्मपुराणात् ।

प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः ।
जातिबन्धुसुहृच्छिष्यैर्ऋत्विग्भृत्यपुरोहितैः ॥

इति बृहस्पतिवचनाच्च । तदभावे जामाता श्वशुरस्य श्वशुरश्च जामातुः । तदभावे सख्युः सखा । तथा च मार्कण्डेयपुराणे—

सख्युरुत्सन्नबन्धोश्च सखाऽपि श्वशुरस्य च ।
जामाता स्नेहतः कुर्यादखिलं पैतृमेधिकम् ॥ इति ।

ब्राह्मेऽपि— जामातुः श्वशुरश्चक्रे तेषां ते चापि संयताः ॥ इति । यद्यपि च मार्कण्डेयपुराणे सख्युः पश्चाज्जामाता निर्दिष्टस्तथाऽपि तस्याधिकारमात्रप्रतिपादनपरत्वात्संबन्धविशेषाज्जामातुरेव प्राथम्यं

युक्तमित्यभिप्रायेण कालादर्शे तथोक्तम् । तदभावे संघातान्तर्गताः प्रत्यासत्तिविशेषक्रमेण । संघातान्तर्गतैर्वाऽपि कार्या प्रेतस्य सत्क्रियेति विष्णुपुराणात् । पूर्वादिक्रियाभेदेनाधिकारिव्यवस्था । सपिण्डीकरणं तु तासां पुत्राभावे न भवतीत्युक्तं मार्कण्डेयपुराणे । स्त्रीणामप्येवमेव । तदभावे ब्राह्मणधनग्रहणे राज्ञोऽधिकाराभावाद्ब्राह्मणस्य धनग्राही यः कश्चिद्ब्राह्मणः, 'धनार्थहरः स पिण्डदायीति' विष्णूक्तेः । ब्राह्मणव्यतिरिक्तानां तु राजा धनं गृहीत्वा तेन धनेनान्येन कारयेत् । उत्सन्नबन्धुरिक्थाद्वा कारयेदवनीपतिरिति विष्णुपुराणात् । एतस्य च ब्राह्मणव्यतिरिक्तविषयत्वं तत्रैव राज्ञा वा धनहारिणेत्युक्तेर्गम्यते । राज्ञो ब्राह्मणधनग्रहणानाधिकारात् । मुमूर्षुणा वा संनिहिताधिकार्यभावे धर्मपुत्रः कार्यः । स च तस्य मृतस्य सर्वं कुर्यात् ।

अपुत्रेण सुतः कार्यो यादृक्तादृक्प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च ।

इति वचनात् । अत्र चापुत्रग्रहणं संनिहिताधिकारिमात्राभावपरम् । पिण्डोदकक्रियाहेतोरित्युक्तत्वात् । स्त्रीश्राद्धे त्वधिकारिक्रमे विशेषः । अनूढायाः पिता तदभावे भ्रात्रादिः ऊढायास्त्वौरसः पुत्रि(त्रः) । पुत्राभावे सपत्नीपुत्रः । तदभावे क्षेत्रजायाः प्रपौत्रान्ताः । तदभावे पतिः । तदभावे दुहितृदौहित्रौ पुं(पूर्व)वत् । तदभावे पत्युर्भ्राता । तदभावे तत्पुत्रः । तदभावे स्नुषा । तदभावे पितृमातृभ्रातृतत्पुत्रादयः पूर्वोक्ताः । विवाहेन तस्याः पितृगोत्रहानेन पतिगोत्रापत्तेः । न कदाचित्सगोत्राय श्राद्धं कार्यमगोत्रजैरिति च निषेधादिति । एतेषु चाधिकारिषु केषां किमावश्यकं कर्तव्यमित्यपेक्षायां विष्णुपुराणेऽभिहितम्—

पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ।
त्रिप्रकाराः क्रिया ह्येतास्तासां भेदाञ्छृणुष्व मे ॥
आदाहाद्वार्यायुधादिस्पर्शाद्यन्ताश्च याः क्रियाः ।
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ॥
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ॥
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ।
संघातान्तर्गतैर्वाऽपि राज्ञा वा धनहारिणा ॥

पूर्वाः क्रियास्तु कर्तव्याः पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्र नृपैस्तथा ।
मृताहानि च कर्तव्याः स्त्रीणामप्युत्तराः क्रियाः ।
प्रतिसंवत्सरं राजन्नेकोद्दिष्टविधानतः ॥ इति ।

अस्यार्थः—जलादिस्पर्शादेराशौचान्त्यदिने विहितश्राद्धाहमाह्नवाद्य-शौचमध्ये कर्तव्याः क्रियाः पूर्वाः । एकादशाहकृत्यमारभ्य सपिण्डीकरणपर्यन्ता मध्यमाः । तदूर्ध्वाः सांवत्सरिकाद्या उत्तराः । तत्र सपिण्डादिभिरपि नृपान्तैः पूर्वाः क्रियाः कार्या एव । उत्तरास्तु न कर्तव्याः । मध्यमास्तु(सु त्व )नियमः । पुत्राद्यैर्भ्रातृसंतत्यै(त्यन्तै)र्दौहित्रपर्यन्तैश्चोत्तरा अप्यवश्यं कर्तव्याः । पात्रादि(मात्रादी)नां पूर्वमध्यमावत्सर्वोत्तराक्रियाप्राप्तौ परिसंख्या । प्रतिसंवत्सरं मृताहन्येव स्त्रीणामुत्तराः क्रियाः कार्या न तु दर्शादौ । तत्र तु पत्न्यादेरंशभागित्वमेव तासाम् । तच्च चैकोद्दिष्टविधानत इति पाक्षिकैकोद्दिष्टानुवादः । इदं च वृद्ध्यान्वष्टकादेरप्युपलक्षणम् । तत्रापि स्त्रीणां पृथक्श्राद्धविधानात् ।

न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ॥

इति परिशिष्टवत्(ष्टात्) । पूर्वमध्यमास्तु पृथग्भवन्त्येव । अत्र च राजव्यतिरिक्तानां तदीयधनाभावेऽपि स्वद्रव्येण पूर्वक्रियास्वधिकारः । राज्ञस्तु तदीयधनसत्त्व एव । राज्ञा वा धनहारिणेत्युक्तत्वात् । सर्वाभावे तु नृपतिः कारयेत्तस्य रिक्थत इति मार्कण्डेयपुराणाच्च । स्वयं तदीय[धन]ग्रहणे तु सपिण्डादीनामपि नृपान्तानां मध्यमोत्तरा अप्यावश्यकाः । तथा च स्कन्दपुराणे—

मलमेतन्मनुष्याणां द्रविणं यत्प्रकीर्तितम् ।
तद्गृह्णन्मलमादत्तेऽज्ञाति(नि)नां ज्ञाति(नि)नामपि ।
ऋषिभिस्तस्य निर्दिष्टा निष्कृतिः पावनी परा ।
आदेहपतनात्कुर्यात्पिण्डदानोदकक्रियाम् ॥ इति ।

पुत्रपौत्रप्रपौत्रपत्नीभ्रातृतत्पुत्रमातृपितृदौहित्रस्नुषाशिष्याणां तु तदीयधनाभावेऽप्युत्तरक्रियापर्यन्तमावश्यकम् ।

पुत्राभावे च तत्पुत्रः पत्नी भ्राता तथा पिता ।
पित्राभावे च स[ञ्छिष्यः]कुर्यात्तस्यौर्ध्वदैहिकम् ॥

इति मार्कण्डेयपुराणात् ।

व्रतस्थोऽपि यथा पुत्रः पितुः कुर्यात्क्रियां नृप ।
तथा मातामहस्यापि दौहित्रः कर्तुमर्हति ॥

इति भविष्यत्पुराणाच्च । स्त्रीणामप्येवमेव पूर्वादिक्रियाभेदेनाधिकारिव्यवस्था । सपिण्डीकरणं तु तासां पुत्राभावे न भवतीत्युक्तं मार्कण्डेयपुराणे—

स्त्रीणामप्येवमेवं तदेकोद्दिष्टमुदाहृतम् ।
सपिण्डीकरणं तासां पुत्राभावे न विद्यते ॥ इति ।

हारीतीयेऽपि—पुत्रेणैव तु कर्तव्यं सपिण्डीकरणं स्त्रियाः ।
पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि च ॥ इति ।

पुत्रग्रहणं पत्युरप्युपलक्षणम् ।

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डनाम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ॥

इति पैठीनसिवचनात् । सपिण्डीकरणाभावे च पितृत्वाभावादपतिपुत्रायाः सर्वोत्तरक्रियालोपे प्रसक्ते पितृत्वाभावेऽप्येकोद्दिष्टविधिना सांवत्सरिकं कर्तव्यमित्युक्तं मार्कण्डेयपुराणे—

प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैः स्त्रियाः ।
मृताहनि यथान्यायं नृणां यद्वदिहोदितम् ॥ इति ।

नरैः—पतिपुत्रातिरिक्तैरुत्तरक्रियाधिकारिभिर्दौहित्रादिभिः । इह सपिण्डीकरणाभावे नृणां पुरुषाणां यद्वत् । एवं च दृष्टान्तव्याजेन गोब्राह्मणहतव्युत्क्रममृतादीनां सपिण्डीकरणाधिकारिणां पुरुषाणामपि पितृत्वाभावेऽपि वचनात्सांवत्सरमात्रमेकोद्दिष्टविधानेन कर्तव्यमित्युक्तं भवति । तथा च मृताहनीत्यादिविष्णुपुराणमप्येतद्विषयतयैव व्याख्यातुं शक्यम् । व्याख्यानान्तरमपि पूर्वमुक्तम् । यत्तु शूलपाणिना सांवत्सरिकविधिबलात्सपिण्डनाभावेऽप्येकोद्दिष्टैरेव पितृत्वापत्तिरित्युक्तम् । तदयुक्तम् । तथा सत्यन्वष्टकादीनामपि प्राप्तौ परिसंख्यापत्तेरुभयपरत्वे गौरवाच्च । तस्मात्पितृत्वाभावात्सपिण्डीकरणानधिकारिणां सर्वेषां सर्वोत्तरक्रियानिवृत्तौ प्राप्तायां वार्षिकप्रतिप्रसवमात्रमनेन क्रियते । नच शस्त्रहतैकोद्दिष्टे यदि ब्राह्मणादिहता न भवन्तीति मिताक्षरादर्शनात्सपिण्डीकरणोत्तरभाविन्येकोद्दिष्टेऽपि पितृत्वापन्नानामेव

देवतात्वाद्वचनं विना पार्वणैकोद्दिष्टविधानयोर्द्वयोरप्यप्राप्तेर्वचनात्तु द्वयोरपि प्राप्तिः संभवतीति पाक्षिकपार्वणानिवृत्तेरपि करणाद्वैरवमवशिष्टमिति वाच्यम्। असपिण्डीकृतान्प्रेतानेकोद्दिष्टेन वर्तयेदिति सामान्यवचनादेव तत्सिद्धेः। अस्य च सांवत्सरिकविधेरेकोद्दिष्टविधिनाऽप्युपपत्तौ तद्बाधकत्वे मानाभावादित्यादिरन्यत्र विस्तरः।

यत्र कुर्यात्प्रथमदिनविधिं सोऽपि तत्सूतकान्तम्।

अग्रे स इति दर्शनात्पूर्वमपि य इति द्रष्टव्यम्। तथा च यत्र तीर्थादिदेशे यो विप्रकृष्टोऽपि संनिधानात्प्रथमदिनविधिं पिण्डदानरूपं कुर्यात्स एव मध्ये संनिकृष्टसंनिधानेऽपि। अपिशब्दात्तत्रैव देशे तस्य प्रेतजातिप्रयुक्तस्य सूतकस्याऽऽशौचस्यान्तो दशमदिनादिरन्तो यस्य पिण्डोदकदाननवश्राद्धादिविधिस्तं तावत्पर्यन्तमिति यावद्विधिं कुर्यादित्यन्वयः। तथा च गृह्यपरिशिष्टे—

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यो दद्याद्दशाहं स समापयेत्॥ इति।
भविष्योत्तरे गृहद्वारे श्मशाने च तीर्थे देवगृहे तथा।
यत्राऽऽद्ये दीयते पिण्डस्तत्र सर्वं समापयेत्॥ इति।

अत्र च परिशिष्टे यद्यपि दद्यादिति सामान्येनोक्तं तथाऽपि प्रतिग्रहाभावेऽपि पिण्डकर्मश्राद्धादौ तदुद्देशत्यागमात्रेण ददातिशब्दप्रयोगसंभवात्प्रथमेऽहनि यो दद्यात्स दशाहं समापयेदिति च प्रथमदिनकर्मण एव दशाहसमाप्त्यन्वयप्रतीतेर्दाहस्य च तदसंभवात्॥

प्रथमेऽहनि यो दद्यात्प्रेतायान्नं समाहितः।
अन्नं नवसु चान्ये(न्ये)षु स एव प्रददात्यपि॥

इति ब्रह्मपुराणाच्च। पिण्डं दद्यादित्येवार्थो युक्त इत्यभिप्रेत्य प्रथमदिनविधिमित्युक्तम्। मिताक्षरास्वरसोऽप्येवम्। दिवोदासीये तु—

सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे नरः।
सोऽपि कुर्यान्नवश्राद्धं शुद्धे तु दशमेऽहनि॥

इत्यपि वचनं लिखितम्। एकादशाहादिकं तु संनिकृष्टसंनिधाने संनिकृष्टेनैव कार्यम्। अपवादकवचनाभावात्। तस्य स्वरूपेणाभावेऽसांनिध्यादौ वा पौत्रादिभिः सपिण्डीकरणपर्यन्तं स्वस्वकालेऽवश्यं कर्तव्यम्। सपिण्डीकरणं तु पुत्रे जीवत्यसंनिहितेऽपि प्राप्तकालमप्यन्यैर्न

कर्तव्यं किंतु कालातिक्रमेऽपि पुत्रेणैव । तथा चापरार्के वायुपुराणे—

श्राद्धानि षोडशादत्त्वा कुर्वीत तु सपिण्डनम् ।

प्रोषितावसिते पुत्रः कालादपि चिरादपि ॥ इति ।

अत्र च पूर्वार्धे सामान्यविषयं भिन्नं वाक्यम् । उत्तरस्य त्वयमर्थः— प्रोषितेन सताऽवसिते पितृमरणे ज्ञाते सति चिरादपि कालाद्वर्षान्तरूपचरमकालातिक्रमेऽपि पुत्र एव ( सपिण्डीकरणे ज्येष्ठपुत्रस्यैवाधिकार इत्यन्येष्टिपद्धतौ ) सपिण्डनं कुर्यान्नान्यस्तत्कालेऽपि । उत्तरक्रियास्तु संनिकृष्टस्वरूपाभाव एव विप्रकृष्टैः कार्याः । पूर्वाभाव इति पूर्वस्वरूपाभावोपाधावेव तेषां विधानात् । असांनिध्याद्युपाधिवत्त्वज्ञापकस्य च सपिण्डीकरणपर्यन्तत्वात् । कनिष्ठपुत्रादिभिस्तु स्वस्वकाले ज्येष्ठानुष्ठानासंभवे सर्वमवश्यं कार्यमेव । पत्नीवद्द्रव्याधिकारसाधारण्यादित्युक्तम् । सपिण्डादीनां तु पुत्रादेरभावेऽसंनिधाने वा मध्यमाख्वनियम इत्युक्तमित्यधिकारे बहुविचारणीयेऽपि विस्तरभयादुपरम्यते ॥ २२ ॥

आ * नाम्नः खातमात्रं न जलहुतवहौ नामवर्षत्रयान्तः

कामं चोर्ध्वं तु नित्यौ भवत उपरतेऽचौलके चौलयुक्ते ।

नित्यौ कालाविशेषादथ पितृमुखराः स्नापयित्वाऽम्बरस्र-

ग्गन्धाद्यैः शोभयित्वा मृतमथ खनने योग्यमाज्यैर्विलिप्य ॥ २३ ॥

---

* आ नाम्न इति । आ नाम्नो नामकरणात्प्राक् । मर्यादायामाङ् । जन्मन आरभ्य नामकरणपर्यन्तमिति यावत् । उपरते मृते खातमात्रं खननमेव कर्तव्यम् । मात्रशब्दार्थं स्पष्टयति—न जलहुतवहाविति । स्पष्टोऽर्थः । नामवर्षत्रयान्तः— नामकरणात्तत आरभ्य वर्षत्रयान्तर्वर्षत्रयमध्य उपरते जलहुतवहौ कामं स्वेच्छयाऽनुष्ठेयौ न नियतौ । ऊर्ध्वं वर्षत्रयानन्तरमकृतचूडेऽप्युपरते नित्यौ नियतौ भवतः । कृतचूडे तु विशेषमाह—चौलयुक्त इति । कालविशेषाद्वर्षत्रयात्प्रागपि कृतचौडे नित्याविस्यर्थः । खननविधिमाह—खननयोग्यं प्रेतं स्नापयित्वाऽथानन्तरमम्बरस्रग्गन्धाद्यैः शोभयित्वाऽऽज्यैर्विलिप्य । निखनेयुरिति शेषः । अत्र मूलम्—'ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः' इति याज्ञवल्क्यवचनम् । तथा—ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः । अलंकृत्य शुचौ भूमावस्थिसंचयनादृते ॥ नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया । अरण्ये काष्ठवत्त्यक्त्वा क्षिपेयुस्त्र्यहमेव तु ॥ इति मनुवचनम् । तथा—ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्बहिः । यमगाथां गायन्तो यमसूक्तमनुस्मरन् ॥ इति ।

* नामकरणकालादाऽऽशौचोत्तरदिनादाऽऽशौचदिनमध्य इति यावत् । उपरते बाले खननं खातस्तन्मात्रं कर्तव्यं + न जलहुतवहौ दातव्यौ । जलादिग्रहणं पिण्डदानादेरप्युपलक्षणं न वस्त्वर्थः । नाम च वर्षत्रयं च तथावता भवति तृतीयवर्षपूर्तिरिति यावत् । अनयोरन्तर्मध्य आशौचोत्तरादिनादारभ्य तृतीयवर्षसमाप्तिपर्यन्तं तूपरते जलहुतवहौ कामं पाक्षिकत्वेन × दातव्यौ । नतु पूर्ववत्तयोर्निषेधः । जलादिग्रहणस्य चोपलक्षणत्वात्पिण्डादिकर्मापि । तत्र कस्य कियदित्यादि सर्वं पूर्वमुक्तम् । = वर्षत्रयादूर्ध्वं तूपनीतया सहेष्यत इत्यादिपक्षाश्रयणादचौलकेऽप्युपरते जलहुतवहौ नित्यौ दातव्यौ भवतः । चौ÷लयुक्ते तूपरते कालाविशेषाद्वर्षत्रयमध्येऽपि नित्यौ भवतः । तथा च मनुः—

नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्युर्नाम्नि वाऽपि कृते सति ॥ इति ।

लौगाक्षिरपि—

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ॥ इति ।

---

* नामकरणेति । नामकरणेत्यनेनाऽऽशौचोत्तरदिनं लक्ष्यते । आङ् मर्यादायाम् । तेन जन्मत आरभ्याऽऽशौचोत्तरदिनपर्यन्तमित्यर्थः । एतदनुसंधायैवोक्तम्— आशौचदिनमध्य इति यावदिति ।

+ नेति । 'ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः' इति याज्ञवल्क्योक्तेः । अत्र उदकग्रहणं साहचर्यादग्निसंस्कारस्याप्युपलक्षणार्थमिति मिताक्षरा ।

× दातव्याविति । तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च । सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ॥ इति लौगाक्षिणोक्तेः । अयमर्थः—चौलकर्मानन्तरकाले नियमेनाग्न्युदकदानादि कार्यम् । अन्यत्रापि नामकरणादूर्ध्वमकृतचूडेऽपीच्छया प्रेताभ्युदयकामनया द्वयमग्न्युदकदानात्मकं तूष्णीं कार्यं न नियमेनेति विकल्पः, इति मिताक्षरोक्तेरिति भावः ।

= वर्षेति । नात्रिवर्षस्य कर्तव्या बान्धवैरुदक्रिया असमाप्ततृतीयवर्षस्य पित्रादिसपिण्डैरुदकदानादिप्रेतक्रिया न कर्तव्येत्यर्थकमनुवचनात्कुलधर्मापेक्षया चूडोत्कर्षेऽपि वर्षत्रयादूर्ध्वमग्न्युदकदानादिनियमोऽवगम्यत इति मिताक्षरायां विज्ञानेश्वरोक्तेरिति भावः ।

÷ चौलेति 'तूष्णीमेवोदकं दद्यात्तूष्णीं संस्कारमेव च । सर्वेषां कृतचूडानाम्' इति लौगाक्षिवचने सर्वग्रहणाद्वर्षत्रयात्प्रागपि कृतचूडस्याग्न्युदकदानयोर्नियमो भवतीति विज्ञानेश्वरोक्तेरित्याशयः ।

अत्र चोनद्विवर्षं निखनेदित्यनेन सामा*न्यप्राप्तदाहापवादत्वेनोन-द्विवर्षस्य निखनने विहिते तृतीयवर्षमारभ्य दाहस्यैव प्राप्तौ तृतीये+ऽपि वर्षे मनुवचनेन वैकल्पिके ×तन्निषेधद्वारा निखनने विहिते = तदूर्ध्वं-प्रकृतचूडस्यापि सामान्यप्राप्तो दाह एव भवति । लौगाक्षिवचने च ~सर्वग्रहणादूनद्विवर्षस्यापि कृतचूडस्य निखननबाधेन दाह एव भवति । यत्तु प्राच्यैरात्रिवर्षस्याप्रविष्टतृतीयवर्षस्येत्यर्थाङ्गीकारेणोनद्विवर्षत्वमेव नात्रिवर्षस्येत्यादे(दि)रुक्तं तदयुक्तम् । अनुशासनात्मयोगाच्च भूत-त्रिवर्षस्यैव त्रिवर्षपदात्प्रतीतेः । नास्य कार्योऽग्निसंस्कारो नापि कार्यो-

---

* सामान्येति । 'प्रेतं दहेच्छुभैर्गन्धैः स्नापितं स्रग्विभूषितम्' इति स्मृतेः सामान्यप्राप्तेत्यर्थः ।

+ तृतीयेऽपि वर्षे इति । नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया । जातदन्तस्य वा कुर्यान्नाम्नि वाऽपि कृते सति ॥ इति हि मनुवचनम् । वृत्तौ पूरणप्रत्ययलोपेन संख्याशब्दस्य स्वप्रकृतिकपूरणप्रत्ययान्तार्थकत्वम् । लोके तथैवार्थावगतेः । तृतीयेत्यर्थः । त्रिशब्दात्पूर्वमाङ्प्रश्लेषो न तु नञ् । आतृतीयात्तृतीयपर्यन्तं वर्षं यस्येति आत्रिवर्षः । तस्य मृतस्य सत इत्यर्थः । अत एवैतद्व्याख्यावसरे 'आतृतीयाद्वर्षात्प्रतिषेधो न पुनश्चतुर्थवर्षादौ' इति मेधातिथिनोक्तं संगच्छते । एवं च किंचिदून-द्वितीयवर्षोर्ध्वं सामान्यतः प्राप्तं दाहं तृतीयवर्षपर्यन्तमग्न्युदकक्रिया न कर्तव्येत्यर्थ-केनानेन वचनेन निषिध्य विकल्पेन निखननं विधीयते । यदि चास्य निखननविधा-यकत्वं न स्यात्किंतु सामान्यप्राप्तदाहनिषेधकत्वमेव स्यात्तदा तृतीयवर्षे मृतस्य निख-ननं न प्राप्नोति ऊनद्विवर्षं प्रति तद्विधानात् । नापि दाहः प्राप्नोति । अनेन निषे-धादित्यननुष्ठानलक्षणमप्रामाण्यं स्यात् । अतोऽनुष्ठानलक्षणविधायकत्वसंपत्त्यर्थं सामान्यप्राप्तदाहनिषेधद्वारा खननविधायकत्वमस्य वचनस्य स्वीकार्यं भवति । तच्च खननं वैकल्पिकं बोध्यम् । जातदन्तस्य वा कुर्यादित्युत्तरार्धेनाग्न्युदकदानयोर्वि-धानादिति ज्ञेयम् । तदेतत्सर्वमनुसंधायोक्तम्—तृतीयवर्षेऽपीत्यादि ।

× तन्निषेधेति । सामान्यप्राप्तदाहनिषेधद्वारेत्यर्थः ।

= तदूर्ध्वमिति । तृतीयवर्षादूर्ध्वं चतुर्थवर्षादावित्यर्थः ।

~ 'तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च । सर्वेषां कृतचूडानाम्०' इति लौगाक्षिवचने । ऊनद्विवर्षे कृतचूडे प्रकृतवचनप्रवृत्तिपरित्यागेन यद्यूनवर्षं निख-नेदिति निखननविधायकवचनप्रवृत्तिरिष्येत तदाऽत्र वचने सर्वेषामिति सर्वग्रहणम-नर्थकं स्यादिति तत्सामर्थ्यादूनद्विवर्षेऽपि कृतचूडे निखननं बाधित्वा लौगाक्षिप्रोक्तदाह एव भवतीत्याह—सर्वग्रहणादित्यादि ।

दकक्रियेत्यनेनैवोनद्विवर्षस्य दाहादिनिषेधादानर्थक्यप्रसङ्गाच्च । अनेनै*वाभिप्रायेनो(णो)क्तं मेधातिथिना—आ+तृतीयाद्वर्षादयं प्रतिषेध इति । नच ×तथाऽपि =पूर्वनिषेधान÷र्थक्यमिति वाच्यम् । ऊनद्विवर्षस्य ~तदितरस्य च सत्यपि ⊙पक्षद्वय ऊनद्विवर्षस्य निखननपक्षो मुख्यः, तदितरस्य च दाहपक्षो मुख्य इति मुख्या◡नुकल्पत्ववैषम्यद्योतनार्थत्वात् । अत एव यद्यपि मूले नामवर्षत्रयान्तः काममिति विकल्पमात्रमुक्तं तथाऽपीदृशमुख्यानुकल्पत्वं विभागेन द्रष्टव्यम् । ⊛ तुल्यवद्विकल्पेऽननुष्ठानलक्षणाप्रामाण्यापत्तिभिया क्लेशाधिक्येन चोनाद्विवर्षस्यापि दाहस्यैव मुख्यत्वे सर्वस्मृतिषु निखननविधावूनद्विवर्षग्रहणवैयर्थ्यापत्तेः । ब्रह्मपुराणे च स्पष्टमेवोनाद्विवर्षदाहस्यानुकल्पत्वमुक्तम्—

---

* अनेनैवाभिप्रायेणेति । 'नास्य कार्योऽग्निसंस्कारः' इत्यादिमनुवचनविषयाग्निसंस्कारविषयत्वं नात्रिवर्षस्येति वचनस्येत्यभिप्रायेणेत्यर्थः ।

+ आतृतीयादिति । नात्रिवर्षस्येतिमनुवचनव्याख्यावसरे मेधातिथिना 'आत्रिवर्षस्य' इति प्रतीकोपादानेन नात्रिवर्षस्येत्यत्राऽऽङ्प्रश्लेषो बोध्यः, नतु 'न त्रिवर्षः' इत्यर्थकनञ्समासः । अथवा—असमाप्ततृतीयवर्षस्येत्यर्थो बोध्यः ।

× तथाऽपीति । मेधातिथ्यभिप्रायानुसारेण नात्रिवर्षस्येति मनुवचनस्य तृतीयवर्षपर्यन्तं दाहादिनिषेधकत्वेऽपीत्यर्थः ।

= पूर्वनिषेधेति । ऊनद्विवर्षविषये दाहादिनिषेधकस्य नात्रिवर्षस्येत्येतदपेक्षया पूर्वस्य 'नास्य कार्योऽग्निसंस्कारः' इत्यादिमनुवचनस्येत्यर्थः ।

÷ आनर्थक्यमिति । वर्षत्रयपर्यन्तं दाहादिनिषेधकेन नात्रिवर्षस्येत्यनेनैवोनद्विवर्षविषयेऽपि दाहादिनिषेधसिद्धेरिति भावः ।

~ तदितरेति । प्रवृत्ततृतीयवर्षस्येत्यर्थः ।

⊙ पक्षद्वय इति । दहनखननात्मकपक्षद्वय इत्यर्थः ।

◡ मुख्यानुकल्पेति । अयं भावः—नात्रिवर्षस्येति मनुवचनेनाऽऽशौचोत्तरदिनादारभ्य तृतीयवर्षसमाप्तिपर्यन्तं मृतस्य बालस्य खननदहने विकल्पेन विहिते भवतः । तत्रोनद्विवर्षविषये दाहखननयोर्विकल्पे प्राप्ते 'नास्य कार्योऽग्निसंस्कारः' इति वचनानुसारात्तद्विषये खननपक्षो मुख्यः । प्रवृत्ततृतीयवर्षस्य तु दाहपक्षो मुख्य इति प्रतिपादनद्वाराऽन्यतरविषयेऽन्यतरपक्षस्यानुकल्पत्वद्योतनार्थमिति भावः ।

⊛ ऊनद्विवर्षदाहस्यानुकल्पत्वे प्रमाणं प्रदर्शयन्नाह—तुल्यवद्विकल्पेत्यादिवैयर्थ्यापत्तेरित्यन्तम् ।

* अनतीतद्विवर्षस्तु प्रेतो यत्रापि दह्यते ।
अतिमोहाभिभूतैस्तु देशसाधर्म्यमार्दवात् ।
आशौचं ब्राह्मणानां तु त्रिरात्रं तत्र विद्यते ॥ इति ।

अत एव च मानवेऽपि—जातदन्तस्य वा कुर्युर्नाम्नि वाऽपि कृते सतीति प्रतिप्रसवविधिद्वयं जातदन्तस्य दाहोऽनुकल्पः कृतनाम्नस्त्वत्यन्तानुकल्प इति द्योतनार्थत्वेन सार्थकम् । अन्यथा जातदन्तस्य चेत्यस्याऽऽनर्थक्यात् । यत्तु + सर्वज्ञेन स्त्रीपुंसविषयत्वं प्रतिप्र×सवद्वयस्योक्तं = तन्मानाभावात्पुल्लिङ्गविरो+धाच्चोपेक्ष्यम् । तस्मान्निखन-

---

* ऊनद्विवर्षदाहस्यानुकल्पत्वे वाचनिकत्वं प्रदर्शयन्ब्रह्मपुराणवचनं पठति—अनतीताद्विवर्षस्त्वित्यादि ।

\+ सर्वज्ञेनेति । सर्वज्ञो नाम मनुस्मृतिटीकाकर्तृमेधातिथ्यादिषट्कान्यतमः । योऽसौ सर्वज्ञनारायणशब्देन प्रसिद्धः । तेन हि नात्रिवर्षस्येति मनुवचनव्याख्यावसर इत्थमुक्तम्—' जातदन्तस्य वा कुर्युरिति स्त्रीविषयम् । तेन स्त्रियां जातदन्तायां मृतायां तदभ्युदयार्थिना उदकं कार्यम् । अनिर्दिष्टविशेषत्वाच्च नपुंसकलिङ्गेनाभिधानं शवविशेषणतया चेति । नाम्नि वाऽपीति पुत्रविषयम् । तस्य जन्ममात्रेणातिशयितोपकारकारित्वात् ' इति । एतेन ' जातदन्तस्य वा कुर्युः ' इत्यादिप्रतिप्रसवविधिद्वयस्य स्त्रीपुंसविषयत्वेन व्यवस्थापनं स्पष्टमेवोक्तं भवति ।

× प्रतिप्रसवद्वयमिति । प्रतिप्रसवो नाम निषिद्धस्य कस्यचित्कर्मणः पुनर्विधानम् । यथा—रागतः प्राप्ताया हिंसायाः ' मा हिंस्यात्सर्वा भूतानि ' इति प्रतिषिद्धायाः ' अग्नीषोमीयं पशुमालभेत ' इत्यग्नीषोमदेवताकपशुहिंसायाः पुनर्विधानम् । प्रकृते च ' प्रेतं दहेत् ' इति सामान्यप्राप्तस्य प्रेतदाहस्य ' ऊनद्विवर्षं निखनेत् ' इति खननद्वारा प्रतिषिद्धस्य ' जातदन्तस्य वा कुर्यान्नाम्नि वाऽपि कृते सति ' इत्यनेन दन्तजननप्रयुक्तत्वेन नामकरणप्रयुक्तत्वेन वा प्रेतदाहस्य पुनर्विधानात्तयोः प्रतिप्रसवविधित्वं बोध्यम् ।

= उक्तप्रतिप्रसवविधिद्वयस्य स्त्रीपुंसविषयत्वेन व्यवस्थापनं खण्डयितुं तस्य निर्मूलत्वं जातदन्तस्येति पुंल्लिङ्गनिर्देशविरोधित्वं प्रदर्शयन्नाह—तन्मानाभावादिति ।

\+ विरोधाच्चेति । नच ' सामान्ये नपुंसकम् ' इति नपुंसकमिवैतादिति वाच्यम् । विषयव्यवस्थापनार्थं लिङ्गविवक्षाया आवश्यकत्वात् । नच वैपरीत्येन व्यवस्थेष्टेति वाच्यम् । स्त्रीणाममन्त्रकनामकरणोत्तरं पुरुषाणां च दन्तजननोत्तरं संस्कार इत्यनौचित्यापातात् । तस्माज्जातदन्तस्येति पुंल्लिङ्गेन निर्देशात्सर्वज्ञनारायणकृतं प्रतिप्रसवविधिद्वयस्य स्त्रीपुंसविषयत्वेन व्यवस्थापनमयुक्तमिति भावः ।

नविधौ दाहादिनिषेधे चोनद्विवर्षग्रहणस्य नात्रिवर्षस्येत्येतद्वचनबला-त्प्रयोजनान्तरार्थत्वात्पूर्णद्विवर्षस्यापि तृतीयवर्षसमाप्तिपर्यन्तं निखनन-पक्षोऽस्त्येवेत्यभिप्रेत्य नामवर्षत्रयान्तरित्युक्तम् । एकाहाशौचविधा-वप्यूनद्विवर्षग्रहणं विप्रे न्यूने त्रिभिर्वर्षैरित्येतद्वचनविरोधान्न विशेषकं किं तु प्रयोजनार्थमेवेत्युक्तं तृतीयश्लोके ।

## अथ पितृमुखराः स्नापयित्वाऽम्बरस्रग्गन्धाद्यैः शोभयित्वा मृतम् ।

पितृमुखराः पित्राद्या मृतं पुत्रादिं स्नापयित्वाऽम्बरस्रग्गन्धैराद्यश-ब्दाद्धूपसुगन्धिचूर्णादिभिश्च शोभयित्वा दहेयुरिति शेषः । पुत्राणां मुख्याधिकारित्वाद्दाहदशायां च तत्संभवात्पुत्रमुखरा इति वाच्ये पितृ-ग्रहणं बालोपक्रमादुत्तरत्र च तदसंभवात् । तथा च यमः—

प्रेतं दहेच्छुभैर्गन्धैः स्नापितं स्रग्विभूषितम् ॥ इति ।

प्रचेता अपि—स्नानं प्रेतस्य पुत्राद्यैर्वस्त्राद्यैः पूजनं ततः ।

नग्नदेहं दहेन्नैव किंचिद्देयं परित्यजेत् ॥ इति ।

किंचिद्देयमिति शववस्त्रैकदेशं श्मशानवास्यर्थं देयं परित्यजेदित्यर्थः । ब्रह्मपुराणेऽपि—

दरिद्रोऽपि न दग्धव्यः नग्नः कस्यांचिदापदि ।
केनापि वस्त्रखण्डेन च्छादितव्यः प्रयत्नतः ॥
यत्र तत्र भवेद्दुःखी यदि नग्नस्तु दह्यते ।
निःशेषस्तु न दग्धव्यः शेषः किंचि( त्य )जेत्ततः ॥ इति ।

ततः शवाच्छादनवस्त्रात् । दिनमृतस्य च दाहो रात्रौ न कार्यः । तथा च निगमः—

संध्यायां वा तथा रात्रौ दाहः पाथेयकर्म च ।
नच( व )श्राद्धं च नो कुर्यात्कृतं निष्फलतां व्रजेत् ॥ इति ।

रात्रिमृतस्य रात्रावेव दाहादि वपनं तु प्रातः । तदुक्तं स्मृतिसंग्रहे—

रात्रौ दग्ध्वा तु पिण्डान्तं कृत्वा वपनवर्जितम् ।
वपनं नेष्यते रात्रौ श्वस्तनी वपनक्रिया ॥ इति ।

## अथ खनने योग्यमाज्यैर्विलिप्य ।

खनने योग्यं यस्य खननं करिष्यते तमाज्यैर्विलिप्य पितृमुखरा निखनेयुरिति शेषः । तथा च यमः—

ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्भुवि ।

यमगाथां गायमानो यमसूक्तमनुस्मरन् ॥ इति ।

गाथासूक्तजपस्तु-' यमसूक्तं तथा गाथा जपाद्भिर्लौकिकाग्निना ।

स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥

इति दाह्ययोग्येऽपि विधानान्निखननयोग्यमात्रविषयत्वाभावान्मूले नोक्तः । यद्यपि च —

घृततैलसमायुक्तं कृत्वा वै देहशोधनम् ।

तेनाभ्युक्ष्य गुरुं स्नाप्य नयेत्तं पैतरं वनम् ।

इति वराहपुराणे दाह्यस्यापि घृतसाध्यक्रिया विहिता तथाऽपि तत्र घृतस्य निरपेक्षसाधनत्वाभावाद्विलेपनाभावाच्च घृतविलेपनस्य निखननयोग्यमात्रविषयत्वात्तत्र तदुक्तम् ॥ २३ ॥

***प्रत्यग्द्वारा नगर्या बहिरवनिसुरं क्षत्रियं तूत्तरेण**

**प्राग्द्वारेणैव वैश्यं पितृदिशि वृषलं नाययित्वाऽनुयायुः ।**

**वर्षीयःपूर्वमूनद्विशरदुपरतौ नानुयाने नियामः**

**शूद्रैः स्पृष्टोऽथवोढो यदि भवति मृतः प्रेतभावान्न मुक्तिः ॥२४॥**

---

* इदानीं शवनयने वर्णविशेषेण द्वारविशेषमाह—प्रत्यग्द्वारेति । अवनिसुरं ब्राह्मणं मृतं नगर्याः प्रत्यग्द्वारा पश्चिमद्वारेण बहिर्नाययित्वा सर्वे ज्ञातयो वर्षीयःपूर्वं वृद्धपुरःसरमनुयायुरनुगच्छेयुः । अयमनुगमननियमो द्विवर्षाधिकवयसो मृतौ ज्ञेयः । 'आश्मशानादनुव्रज्य इतरो ज्ञातिभिः सह' इति याज्ञवल्क्योक्तेः । अत्र कस्मादितर इत्यवध्यपेक्षायां पूर्वार्धोपस्थितोनद्विवर्षापेक्षयेतर इत्यर्थः । पूर्णद्विवर्ष इति तदर्थः । तथा च पूर्णद्विवर्षस्य तदधिकवयसो वा मृतावयमनुगमननियमो भवति । अस्मादेव वचनादपरिपूर्णद्वितीयवर्षस्यानुगमनमनियतमिति गम्यते । क्षत्रियं तूत्तरद्वारेण । वैश्यं प्राग्द्वारेण । वृषलं शूद्रं दक्षिणस्यां दिशि यद्द्वारं तेन नाययित्वा सर्वे ज्ञातयो वृद्धपुरःसरमनुयायुरित्यन्वयः । इदानीं वयोविशेषेण मृतस्यानुगमननियमापवादमाह— ऊनद्वीति । ऊनाऽपरिपूर्णा । वृत्तौ पूरणप्रत्ययलोपेन द्विशब्दस्य द्वितीयार्थकत्वाद्द्वितीया शरद्यस्येत्यर्थः । असमाप्तद्वितीयवर्षस्य मृतौ सत्यामनुगमने नियमो नास्ति । अथ शूद्रस्पर्शे तत्कृतवहने च दोषं दर्शयति—शूद्रैः स्पृष्ट इत्यादि । यदि मृतः प्रेतः शूद्रैः स्पृष्टोऽथवोढो भवति तदा तस्य प्रेतत्वान्मुक्तिर्न स्यात् । अत्र ब्राह्मणादिवैश्यान्तेषु सत्स्विति पूरणीयम् । तदुक्तं मनुना—न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत् । अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता ॥ इति ।

अवनिसुरं ब्राह्मणं प्रेतं नगर्याः प्रत्यग्द्वारा पश्चिमद्वारेण क्षत्रियं तूत्तरेण नगर्या द्वारेण वैश्यं प्राग्द्वारेण वृषलं शूद्रं पितृदिशि दक्षिणस्यां द्वारेण पुत्रादिभिर्नाययित्वा बहिर्निःसार्य सर्वे सपिण्डसगोत्रा वर्षीयःपूर्वं वृद्धतमवृद्धतरवृद्धादिक्रमेणोनद्विवर्षातिरिक्तं प्रेतं नियमेनानुयायुरनुगच्छेयुः। ऊनद्विशरदोऽपूर्णद्विवर्षस्य तूपरतावनुयाने नियमोऽवश्यकर्तव्यता नास्ति। प्रेताभ्युदयकामनायां कर्तव्यम्। अकरणे प्रत्यवायो नास्ति। प्राग्द्वारेणेति समस्तमपि द्वारपदं बुद्ध्या निष्कृष्योत्तरेण पितृदिशीत्यत्र च संबन्धनीयम्। तथा च मनुः—

* दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्।
पश्चिमोत्तरपूर्वैस्तु यथायोगं द्विजन्मनः॥ इति।

अत्र च यथायोगमित्यनेनोक्तस्य क्रमस्यानुलोमप्रतिलोमविशेषापेक्षायामुपस्थितिक्रमनिबन्धनस्यानुलोमक्रमस्यैवौत्सर्गिकत्वात्पूर्वार्धोपस्थितशूद्रेण चाव्यवधानाद्वैश्यस्यैव वर्णावधित्वसादृश्यादुत्तरावधिभूतेन पूर्वावधिभूतब्राह्मणस्यापि प्रथमोपस्थितिसंभवेन शूद्रोपक्रमस्य प्रतिलोमक्रमानि-

* मूले प्रत्यग्द्वारेत्यारभ्य पितृदिशि वृषलमित्येतत्पर्यन्तं प्रतिपादितेऽर्थे प्रमाणं प्रदर्शयन्नाह—दक्षिणेनेति। इदं वचनं मनुस्मृतौ पञ्चमाध्याये द्विनवतितमं वर्तते। अत्र द्वे जन्मनी यस्येति विग्रहान्मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनमिति स्मृतेर्मातुरुदराज्जननरूपमेकं जन्म द्वितीयं च मौञ्जीबन्धनरूपं जन्मेत्येवंरूपे द्वे जन्मनी ब्राह्मणक्षत्रियविशां भवत इति द्विजन्मशब्देन ब्राह्मणादयस्त्रयो वर्णा उच्यन्ते। तथा च द्विजन्मनो द्विजातींस्तु यथायोगं यथाक्रमं पश्चिमोत्तरपूर्वैर्निर्हरेदित्युत्तरार्धान्वयः। तत्र यथायोगमित्यनेन निर्दिष्टः क्रमः किं ब्राह्मणक्षत्रियवैश्येत्येवमनुलोमत्वेन ग्राह्य उत वैश्यक्षत्रियब्राह्मणेत्येवं प्रतिलोमत्वेन ग्राह्य इत्याकाङ्क्षायां यद्यपि पूर्वार्धे उपक्रमेऽत्यन्तापकृष्टशूद्राभिधानात्तत्साहचर्यात्तेनाव्यवहितत्वाच्चोत्तरार्धेऽप्यपकृष्टसदृशवैश्यमादिं कृत्वैव वैश्यक्षत्रियब्राह्मणेत्येवं प्रतिलोमक्रमो ग्राह्यत्वेनाऽऽपतति तथाऽपि ब्राह्मणोऽस्य मुखमासीदित्यादिश्रुत्युपबृंहितसकललोकप्रसिद्धत्वेन शीघ्रोपस्थितिकत्वात्पूर्वार्धोपात्तशूद्रेणाव्यवधानाद्वैश्यस्यैवोत्तरावधित्वसादृश्यादुत्तरावधिभूतेन च तेनपूर्वावधिभूतस्य ब्राह्मणस्यापि प्रथमं बुद्ध्यारोहसंभवाच्च ब्राह्मणक्षत्रियवैश्येत्येवं ब्राह्मणमारभ्यैवानुलोमक्रमग्राह्यत्वौचित्यादुपक्रमे शूद्राभिधानस्य प्रतिलोमक्रमव्यवस्थापकत्वाभावेनौत्सर्गिकब्राह्मणादिक्रमेणैव पश्चिमोत्तरपूर्वाणामन्वयं मनसि निधाय मूले ब्राह्मणं प्रत्यग्द्वारेत्याद्युक्तमिति बोध्यम्।

यामकृत्वाद्ब्राह्मणादिक्रमेणैव पश्चिमाद्यन्वयमभिप्रेत्य मूले तथोक्तम्। विशेषानुक्तेः। विज्ञानेश्वरस्यापीदमेवाभिमतं लक्ष्यते। मेधा*तिथिप्रभृतयस्तु शूद्रोपक्रमेणाऽव्यवधानाद्वैश्यस्यैव प्रथमोपस्थितत्वादन्यथा शूद्रोपक्रमाभिधानस्य निरभिप्रायत्वापत्तेरमङ्गलत्वेन तदभिधानेऽत्रापि प्रातिलोम्यस्यैव युक्तत्वाद्वैश्यादिक्रमेण पश्चिमाद्यन्वयमाहुः। देवदासप्रकाशे तु प्रागुदक्पश्चिमद्वारैरिति पाठः। तदा प्रतिलोमान्वयेऽपि मूलाविरोधः। पुरनगरीग्रहणं च संभवद्वारग्रामपात्रोपलक्षणम्। यत्र तु द्वाराभावस्तत्र दिङ्मात्रनियमः। संभवतस्त्यागायोगात्। यत्र त्वेकद्वारता तत्रासंभवान्न सोऽपि। हारीतेन विशेषान्तरमप्युक्तम्—न ग्रामाभिमुखं प्रेतं हरेयुरिति। जीवतश्च नयने न दिगादिनियमः। मृतग्रहणात्। याज्ञवल्क्यः—

ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः।
आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्मृतः(सह) ॥ इति।

तत्र ऊनद्विवर्षादितरोऽनुव्रज्य इति नियमादूनद्विवर्षस्या+नियमः। आश्वलायनः—अन्वञ्चोऽमात्या अधोनिवीताः प्रवृत्त(प्रवृत्तः)शिखा ज्येष्ठप्रथमाः कनिष्ठजघन्या इति। गच्छेयुरिति शेषः। अधःकृतं निवीतमुपरिवस्त्रमुपवीतं वा येस्तादृशाः प्रवृत्तशिखा मुक्तशिखाः। यो यो ज्येष्ठः स पुरतो गच्छेद्यो यः कनिष्ठः स पश्चादित्यानुपूर्वीसिद्ध्यर्थमुभयवचनम्। इत×रथा सर्वज्येष्ठमात्रप्राथम्यं स्यात्। निर्हरणपूर्वकृत्यं

---

* मेधातिथिप्रभृतयस्त्विति। पूर्वार्धोपक्रान्तशूद्रेणाऽव्यवहितत्वादाद्विजन्मनःशब्दात्प्रथमतो वैश्यस्यैवोपस्थितिः। इतरथोपक्रमे शूद्राभिधानस्वारस्यभङ्गापत्तेः। क्रमाङ्कलिकत्वादुपक्रमे शूद्राभिधानमिति चेत्तदनुरोधादुत्तरार्धेऽपि वैश्यमारभ्य प्रतिलोमक्रमस्यैव सुतरामुचितत्वम्। तथा च वैश्यादिप्रातिलोमक्रमेणैव पश्चिमाद्यन्वयं वदन्तीति शेषः।

+ अनियम इति। ऊनद्विवर्षविषयेऽनुगमनस्य नियमो नास्ति। किंतु प्रेताभ्युदयकामनायामनुगन्तव्यमन्यथा नानुगन्तव्यम्। अनुगमनाभावेऽपि प्रत्यवायो नास्तीति भावः। एतच्चोनाद्विवर्षादितरोऽनुव्रज्य इत्यस्मादेव वचनादवगतं भवतीति बोध्यम्।

× इतरथेति। अन्वञ्चोऽमात्या इत्याद्याश्वलायनवचने 'कनिष्ठजघन्याः' इत्यस्यानुपादाने 'ज्येष्ठप्रथमाः' इत्यनेन सर्वतोज्येष्ठेन प्रथमेन भवितव्यमित्येव लभ्येत। तदपेक्षया कनिष्ठेषु ज्येष्ठत्वयुक्तेषु ज्येष्ठः प्रथमः कनिष्ठः पश्चादिति न

निर्हरणप्रकारश्च वराहपुराणादौ स्वस्वसूत्रेषु च द्रष्टव्यः ।

शूद्रैः स्पृष्टोऽथवोढो यदि भवति मृतः प्रेतभावान्न मुक्तिः ।

मृतस्त्रैवर्णिकः शूद्रैः स्पृष्टोऽथवोढो यदि भवति तदा तस्य प्रेतस्य भावात्क्षुत्तृष्णोपजनितात्यन्तदुःखानुभवावस्थातो मुक्तिर्न भवतीत्यर्थवादः । तेन शूद्रस्पर्शादिनिमित्तं प्रायश्चित्तं कर्तव्यमित्यर्थः । तथा च मनुः—

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत् ।
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता ॥ इति ।

अत्र स्वेषु तिष्ठत्स्वित्यतन्त्रम् । अस्वर्ग्यत्वादिदोषश्रवणात् । विप्रग्रहणं च द्विजोपलक्षणम् । तथा च विष्णुः—

मृतं द्विजं न शूद्रेण हारयेन्न शूद्रं द्विजेनेति ।
स्वापयन्त्यनसि प्रेतमेकाग्निं च कटादिषु ।
शिबिकायां विमाने वा प्रचेतोवचनादिह ॥

इति शिबिकादिनाऽपि वहनविधानात्तस्य च साक्षात्स्पर्शं विनाऽपि संभवाद्वहनस्य पृथगुक्तिः । तेन साक्षात्परम्परासाधारणस्पर्शस्य दोषत्वमुक्तं भवति । प्रायश्चित्तं चात्र शूद्रसंस्पर्शदूषितेऽप्यस्पृश्यस्पर्शदोषस्यैव हेतुत्वाभिधानात्तदपनयनमेव । तच्च—

सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः ।
कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ।
पुण्यर्ग्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः ।
तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि ॥

इति सूतिकामरणोक्तप्रकारेणैव । इदमेवाभिधाय—

उदक्या सूतिका चापि यदि प्रेतं स्पृशन्ति ह ।
तस्यैव विधिरादिष्टो वात्स्येनापि महात्मना ॥

इति मुग्धकारिकायामभिधायोदक्याभिधानात् । यद्यपि चात्र शूद्रग्रहणं नास्ति तथाऽपि तस्याप्यस्पृश्यत्वात्तत्स्पर्शेऽपीदमेव द्रष्टव्यम् । शूद्रेण द्विजदाहे तु—

---

लभ्येतेत्यर्थः । कनिष्ठजघन्या इत्येतन्मात्रोक्तौ तु सर्वतः कनिष्ठेन सर्वेषां पृष्ठतोऽनुगामिना भवितव्यमित्येव लभ्येत ज्येष्ठेष्वनियमः स्यात् । उभयतः परिच्छेदे तु मध्यगेषु संदंशन्यायेन पूर्वपरसाहचर्याच्च ज्येष्ठः पूर्वः कनिष्ठः पश्चादित्यर्थो लभ्यत इति बोध्यम् ।

शूद्रेण दग्धो यो विप्रो न लभेच्छाश्वतीं गतिम् ।
प्रायश्चित्तं प्रकुर्वीत बान्धवः पापशुद्धये ॥
चान्द्रा*यणं परा+कं च प्रा×जापत्यं विशोधनम् ।
विप्रेभ्यो दक्षिणां दद्यात्ततः स्यादौर्ध्वदेहिकम् ॥

---

* चान्द्रायणमिति । चन्द्रस्यायनमिवायनं चरणं यस्मिन्कर्मणि ह्रासवृद्धिभ्यां तच्चान्द्रायणम् । संज्ञायां दीर्घः । तल्लक्षणमुक्तं मनुना—एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्धयेत् । उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥ इति । अस्यार्थः—सायंप्रातर्मध्याह्नेषु स्नानं कुर्वाणः पौर्णमास्यां पञ्चदश ग्रासान् मयूराण्डपरिमितान्भुक्त्वा ततः कृष्णप्रतिपदमारभ्य क्रमेणैकैकग्रासापचयेन चतुर्दशीं यावद्भुञ्जीत । चतुर्दश्यामेकं ग्रासं ग्रसित्वाऽमावास्यायामुपोष्य शुक्लप्रतिपद्येकमेव ग्रासमश्नीयात् । तत एकैकग्रासोपचयभोजनेन पक्षशेषे निर्वर्त्यमाने पौर्णमास्यां पञ्चदश ग्रासाः संपद्यन्ते । तदेतत्पिपीलिकावन्मध्ये ह्रसिष्ठं भवतीति पिपीलिकामध्यचान्द्रायणमित्युच्यते । तथा प्रतिपत्प्रभृतिषु चन्द्रकलानामेकैकशो वृद्धिरर्धमासे तद्वद्ग्रासानपि प्रतिपद्येको द्वितीयायां द्वावित्येवमेकैकशो वर्धयन्भक्षयेद्यावत्पौर्णमासी । ततः पञ्चदश्यां पञ्चदश ग्रासान्भुक्त्वा ततः कृष्णपक्षे चतुर्दश प्रतिपदि द्वितीयायां त्रयोदशेत्येवमेकैकशो ग्रासान्ह्रासयन्नश्नीयाद्यावच्चतुर्दशी । ततश्चतुर्दश्यामेकं ग्रासं ग्रसित्वेन्दुक्षयेऽर्थादुपवसेत् । इदं च यववत्प्रान्तयोरणीयो मध्ये स्थवीय इति यवमध्यमिति कथ्यते । इति द्विविधं चान्द्रायणमिति बोध्यम् । शिशुचान्द्रायणयतिचान्द्रायणादयोऽस्य भेदा ग्रन्थान्तरेऽवलोकनीयाः ।

+ पराक इति । तल्लक्षणं याज्ञवल्क्ये—द्वादशाहोपवासेन पराकः परिकीर्तितः । इति । द्वादशसंख्याकदिनसमूहव्याप्युपवाससाध्यं पराकव्रतमिति तदर्थः ।

× प्राजापत्यमिति । एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन चैवायं पादकृच्छ्रः प्रकीर्तितः ॥ इति याज्ञवल्क्यस्मृतावुक्त्वा प्राजापत्यलक्षणमाह—यथाकथंचित्त्रिगुणः प्राजापत्योऽयमुच्यत इति तल्लक्षणमुक्तम् । तदर्थस्तु—अयमेव पादकृच्छ्रो यथाकथंचिद्दण्डकलितवदावृत्त्या स्वस्थानविवृद्ध्या वा तत्राप्यानुलोम्येन प्रातिलोम्येन वा त्रिरभ्यस्तः प्राजापत्योऽभिधीयते । तत्र दण्डकलितवदावृत्तिपक्षो वसिष्ठेन प्रदर्शितः—अहः प्रातरहर्नक्तमहरेकमयाचितम् । अहः पराकं तत्रैकमेवं चतुरहौ परौ ॥ इति । आनुलोम्येन स्वस्थानविवृद्धिपक्षस्तु मनुना दर्शितः—त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् । त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरेद्द्विजः ॥ इति । प्रातिलोम्यावृत्तिस्तु वसिष्ठेन दर्शिता—'प्रातिलोम्यं चरेद्विप्रः कृच्छ्रं चान्द्रायणोत्तरम्' इति ।

इति जाबाल्युक्तं द्रष्टव्यम् । और्ध्वदेहिकं च पञ्चगव्यस्नापितानामस्थ्नां पलाशवृन्तानां वा दाहमारभ्य सर्वं द्रष्टव्यम् । अस्पृश्यस्पृष्टस्य मरणे तु—

ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टे तथैव च ।
अस्पृश्यस्पर्शने चैव अन्तरालमृतौ तथा ॥
खट्वायां मरणे चैव तथा निगडबन्धने ।
सप्तस्वेतेषु कृच्छ्रांस्त्रीन्षट् नव द्वादश क्रमात् ॥
पञ्चदश क्रमेणैव यथासंख्यं प्रकल्पयेत् ॥

इति गृह्यकारिकोक्तं द्रष्टव्यम् । यथासंख्यं प्रकल्पयेदिति पञ्चसूक्तमेव द्वयोरष्टादशैव विंशतिं च कल्पयेदित्यर्थः । रजकाद्यस्पृश्यस्पृष्टमरणे विशेषस्तत्रैव—

सप्तान्त्यस्पृष्टोपरमो यदि दैवात्कथंचन ।
एकत्रिंशता कृच्छ्रैस्तु शुद्धिरुक्ता मनीषिभिः ॥ इति ।

शवेऽर्धदग्धे चितेरस्पृश्यस्पर्शेऽपि तत्रैव—

कुणपे त्वर्धदग्धे च चिता स्पृष्टाऽन्त्यजादिभिः ।
तत्स्पर्शजं दूषणं च त्रिभिः कृच्छ्रैर्विशुध्यति ॥ इति ।

अन्यानि च दुर्मरणप्रायश्चित्तानि सूतिकोदक्यादिमरणकर्तव्यानि च शातातपीयगृह्यकारिकादिकाद्युक्तानि देवयाज्ञिकदेवदासादिनिबन्धेषु द्रष्टव्यानि ॥ २४ ॥

* ज्ञातीनां मातृपित्रोरपि परमगुरोर्नित्यमम्भोऽथ मित्र-
प्रत्तास्वस्त्रीययाज्यश्वशुरगुरुसुहृद्याजकानां यथेष्टम् ।

---

* अथ पञ्चविंशेन वृत्तेनोदकदाने विशेषमाह—ज्ञातीनामिति । ज्ञातयः सपिण्डाः सोदकाश्च । मातापितरौ प्रसिद्धौ । परमगुरुराचार्यो मातामहश्च । एतेषामम्भ उदकदानं नित्यम् । अयमर्थः—सपिण्डानां सपिण्डोद्देशेन, सोदकानां सोदकोद्देशेन, पुत्रस्य मातापित्रुद्देशेन ब्रह्मचारिण आचार्योद्देशेन यदुदकदानं तन्नित्यमिति । तथाऽऽह याज्ञवल्क्यः—'सप्तमाद्दशमाद्वाऽपि ज्ञातयोऽभ्युपयन्त्यपः' इति । तथा 'एवं मातामहाचार्यप्रेतानामुदकक्रिया' इति । इतरत्र नियमाभावमाह—अथ मित्रेति । मित्रं सखा । प्रत्ता परिणीता दुहिता स्वसा च । स्वस्त्रीयो भागिनेयः । श्वशुरो जायापिता । याज्यो यजमानः । गुरुरुपाध्यायः । सुहृत्संबन्धी (मातृष्वस्रीयादिः) । याजक ऋत्विक् । एतेषामम्भोदानं यथेच्छम् । इच्छया भवतीति

न व्रात्यब्रह्मचारिव्रतियतिपतितक्लीबपाखण्डचोरा
दद्युर्ये त्वत्र पिण्डानलजलकथनानर्हकास्ते तु सूक्ताः ॥२५॥

ज्ञातीनां सपिण्डसमानोदकानां पित्रादीनाम् । मातुः पितरौ मातामहीमातामहौ तयोः परमगुरोराचार्यस्य । अपिशब्दादप्रत्तयोश्च दुहितृभगिन्योः । नित्यमवश्यमम्भस्तिलोदकं वक्ष्यमाणप्रकारेण देयमिति शेषः । षष्ठी च संबन्धसामान्यविवक्षया । तेन ज्ञात्यादिभ्यो ज्ञात्यादिरवश्यमुदकं दद्यात् । अदाने प्रत्यवैतीत्यर्थः । तथा च याज्ञवल्क्यः—

सप्तमाद्दशमाद्वाऽपि ज्ञातयोऽभ्युपयन्त्यपः ।
अप नः शोशुचदघमनेन पितृदिङ्मुखाः ॥ इति ।

अस्यार्थः—वा आ अपीति च्छेदः । ज्ञातयः सप्तमाद्दशमादपि वा दिनादा तत्पर्यन्तमपोऽभ्युपयन्ति । अपोऽभ्युपगम्योदकं ददतीत्यजहत्स्वार्थलक्षणयाऽर्थः । अन्यथा 'एवं मातामहाचार्यप्रेतानामुदकक्रिया' इत्यतिदेशानुपपत्तेः । अत एवाभ्युपगमप्रयोजनत्वाविशेषेऽपि न स्नानं लक्ष्यते । उदकदानलक्षणाया आवश्यकत्वात्तावतैव चानुपपत्तिशान्तेः । स्नानरूपाङ्गानुक्तेश्च पाषाणाद्यनुक्तिवदुपपत्तेः । अत एवेदं वाक्यं व्याख्यायैतत्स्नानानन्तरं कार्यमित्युक्त्वा स्मृत्यन्तरं तत्र मूलत्वेन दर्शितं मिताक्षरायाम् । तेनाप नः शोशुचदघमिति मन्त्रस्य पितृदिङ्मुखत्वस्य चोदकदानेनैव सहान्वयः । अपेति मन्त्रानन्तरं चामुकनामाऽमुकगोत्रः प्रेतस्तृप्यत्विति मन्त्रः पठनीयः । तस्यापि 'सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः' इति विधानात् । स्नानलक्षणायामपि प्रधानत्वादुदकदानेनैव मन्त्रस्यान्वयो नतु स्नानेन । तस्य गुणत्वादभ्युपगमनेनैव । एवं चाप नः शोशुचदघमिति दक्षिणामुखा निमज्जन्तीति पारस्करवचनान्मन्त्रे शेषिविकल्पः समुच्चयो वाऽस्तु । न

---

न नियतमिति भावः । केषांचिदुदकदाने कर्तृत्वापवादमाह—न व्रात्येत्यादिना । व्रात्यः पतितसावित्रीकः । ब्रह्मचार्यादयः प्रसिद्धाः । एते प्रेतायोदकं न दद्युरित्यन्वयः । ते क इत्यपेक्षायामाह—ये त्वत्रेति । ये त्वत्र प्रेतप्रसङ्गे पिण्डानलजलकथनानर्हकाः पिण्डाद्ययोग्यास्तेऽप्युदकादि न दद्युरिति । के त इत्यपेक्षायामाह—ते त्विति । ते पुनः सूक्ताः पूर्वोक्ताः स्पष्टा एवेति । तथा च स्मृतिः—न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा । वृद्धमनुरपि—क्लीबाद्या नोदकं दद्युस्तेना व्रात्या विधर्मिणः । गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥ इति ।

तु तदनुरोधादत्र स्नानान्वयो गुरुस्तस्य । पितृदिङ्मुखत्वं चोदकदाने ब्राह्मणाभिप्रायेण । तेनोदङ्मुखाः प्राङ्मुखाश्च राजन्यवैश्ययोरित्यनेन [न] विरोधः । केचित्तु सप्तमाद्दशमाद्वा पुरुषादर्वाग्ज्ञातयोऽपोऽभ्युपयन्ति । उदकसमीपं गत्वा तत्र स्नात्वोदकं प्रयच्छन्तीत्यर्थः । स्नाने च मन्त्रपितृदिङ्मुखत्वान्वयः । उदकदाने तु नामादियुक्त एव मन्त्रो वर्णभेदेन दिङ्नियमश्च । अतो न विरोध इति व्याचक्षते । संवदति चैतमर्थं पारस्करः—संयुक्तं मैथुनं याचेरन्नुदकं करिष्यामह इति कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते कुरुध्वमेवेतरस्मिन्सर्वे ज्ञातयोऽपोऽभ्युपयन्त्या सप्तमात्पुरुषाद्दशमाद्वा समानग्रामवासे यावत्संबन्धमनुस्मरेयुरेकवस्त्राः प्राचीनावीतिनः सव्यानामिकयाऽपनोद्याप नः शोशुचदघमिति दक्षिणामुखा निमज्जन्ति प्रेतायोदकं सकृत्प्रसिञ्चन्त्यञ्जलिनाऽसावेतत्त उदकमिति । संयुक्तं विद्यादिना प्रेतसंबद्धम् । मिथुनमेव मैथुनं स्त्रीपुरुषयुग्मम् । विद्यासंयुक्तमुत्तर(दक)दानाभिज्ञं मैथुनं बालकमिति कर्कः । शत[न्यून]वर्षे प्रेते कुरुध्वं मा चैवं पुनरिति याचितस्योत्तरम् । इतरस्मिञ्छतवर्षे कुरुध्वमित्येव । सप्तमदशमग्रहणमविवक्षितं जन्मनामज्ञानपर्यन्तं विवक्षितम् । एतदेव विवृतं यावत्संबन्धमिति । एकवासस्त्वं चात्रोक्तं बैजवापो(पो)क्तं च ब्राह्मणविषयम् । अपसव्ययज्ञोपवीतवासस इति प्राचेतसमपसव्योत्तरीयत्वं च क्षत्रियवैश्यविषयम् । राजन्यवैश्यावपसव्ये वासोयज्ञोपवीते कृत्वेति शङ्खवचनात् । अतो न विरोधः । अपनोद्येत्यत्रोदकमित्यनुषङ्गः । असावित्यत्र संबुद्ध्यन्तप्रेतनामनिर्देशः । आचार्यादीनां चोदकदानावश्यकत्वमुक्तं तेनैव । आचार्ये चैवं मातामहयोश्च स्त्रीणां चाप्रत्तानां कुर्वीरंस्ताश्च तेषामिति । स्त्रीणां च मन्त्रो न भवति । अमन्त्रा हि स्त्रियो मता इति बौधायनवचनात् । एवं चैवं मातामहेत्यत्र योगीश्वरवचन एकशेषेण मातामह्यपि द्रष्टव्या । अग्रे प्रत्ताग्रहणाच्चाप्रत्ता अपि ।

## अथ मित्रप्रत्तास्वस्रीययाज्यश्वशुरगुरुसुहृद्याजकाना यथेच्छम् ।

प्रत्ता दुहितृभगिन्यादयः । गुरुरुपाध्यायः । सुहृत्संबन्धी मातृष्वस्रीयादिः । अन्ये प्रसिद्धाः । एतेषां मित्रादीनाम् । एतेभ्य इति यावत् । यथेच्छं प्रेताभ्युदयकामनायां सत्यां दातव्यमम्भः । अदाने प्रत्यवायो

भ्रास्तीत्यर्थः। तथा च याज्ञवल्क्यः—कामोदकं सखिप्रत्तास्वस्त्रीयश्वशु- रर्त्विजामिति। शङ्खलिखितौ—उदकक्रिया कामं श्वशुरमातुलयोः शिष्ये सहाध्यायिनि राजनि चेति।

**न व्रात्यब्रह्मचारिव्रतियतिपतितक्लीबपाखण्डचौरा दद्युः।**

व्रात्या यथाकालमनुपनीताः। व्रतिनः प्रक्रान्तप्रायश्चित्ताः। चौराः सुवर्णतत्समद्रव्यापहारिणः। अन्ये प्रसिद्धाः। एते व्रात्यादयश्च ज्ञात्या- दिभ्य उदकं न दद्युः। इदं चोपलक्षणं दाहपिण्डदानादिकमपि न कुर्युः। तथा च याज्ञवल्क्यः—

न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा॥ इति।

वृद्धमनुरपि—क्लीबाद्या नोदकं कुर्युस्तेना व्रात्या विधर्मिणः।

गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः॥ इति।

आद्यपदेन ब्रह्महादयः। विधर्मिणः पाखण्डिनः। मनुरपि—

आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात्।

समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत्॥ इति।

मनुः—यतेः किंचिन्न कर्तव्यं न चान्येषां करोति स इति। ब्रह्म- चारिविषयो विशेषः पूर्वमुक्तः। मूले चौरग्रहणं गोबलीवर्दन्यायेन।

**ये त्वत्र पिण्डानलजलकथनानर्हकास्ते तु सूक्ताः।**

पिण्डानलजलशब्दैस्तद्दानं लक्ष्यते। ये तु पिण्डानलजलदाने किं बहुना कथनेऽपि किं पुनः स्पर्शनवहनादावनर्हका अयोग्यास्तेऽत्रैव नाशौचा ज्ञातयः स्युरिति श्लोके सुष्ठूक्ताः। येषां दोषादाशौचं न कार्यमित्युक्तं तेभ्य उदकदानाद्यौर्ध्वदेहिकमपि न कर्तव्यमित्यर्थः। अत्र च वक्तव्यं सर्वं पूर्वमेवोक्तम्। तथा यतेरप्युदकदानादि न कर्त- व्यम्। तथा च ब्राह्मे—

त्रयाणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः।

यतेः किंचिन्न कर्तव्यं न चान्येषां करोति सः॥ इति।

दत्तात्रेयोऽपि—कर्मनिष्ठे तु संन्यस्ते पितर्युपरते सुतैः।

दहनं तस्य कर्तव्यं श्राद्धपिण्डोदकक्रियाः।

एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम्।

न कुर्याद्वार्षिकादन्यद्ब्रह्मभूताय भिक्षवे॥ इति।

वार्षिकादन्यदिति सपिण्डीकरणान्तक्रियाणां निषेधः। ननु दर्शा- दिश्राद्धस्यापि—

संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि।
महालये तु यच्छ्राद्धं द्वादश्यामेव तद्भवेत्॥

इति वायुपुराणात्। यतिसंस्कारविधिश्च बौधायनीयादौ द्रष्टव्यः। तस्य च कर्तव्यमुक्तं दत्तात्रेयेण—

अहन्येकादशे प्राप्ते पार्वणं तु विधीयते।
सपिण्डीकरणं तस्य न कर्तव्यं सुतादिभिः॥
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते।
एकोद्दिष्टं न कर्तव्यं संन्यस्तानां कदाचन॥
नारायणबलिश्चास्य कर्तव्यो द्वादशेऽहनि॥ इति।

तत्प्रकारश्चोक्तस्तेनैव—

कृत्वा विष्णोर्महापूजां पायसं च विनिर्दिशेत्।
अग्नौ हुत्वा तु तच्छेषं व्याहृतिभिः समाहितः।
यतीन्गृहस्थसाधून्वा गृहीत्वा द्वादशावरान्।
अभ्यर्च्य पुष्पगन्धाद्यैर्मन्त्रैर्द्वादशनामभिः॥
संभोज्य हव्येनान्नेन दक्षिणां च निवेदयेत्।
त्रयोदशं द्विज श्रेष्ठमात्मज्ञं संयतेन्द्रियम्॥
विष्णुं यथा तथाऽभ्यर्च्य पाद्याद्यैश्च विधानतः।
दद्यात्पुरुषसूक्तेन गन्धपुष्पादिकं क्रमात्॥
वस्त्रालंकरणाद्यानि यथाशक्ति प्रदापयेत्।
उच्छिष्टसंनिधौ तस्य दर्भानास्तीर्य भूतले॥
भूर्भुवःस्वःस्वधायुक्तैस्तस्मै दद्याद्बलित्रयम्।
एवं यः कुरुते विद्वान्नारायणबलिं द्विजः।
विष्णुलोकमवाप्नोति पुरुषो नात्र संशयः।
अश्वमेधसहस्रस्य वाजपेयशतस्य तु।
ततोऽधिकं लभेद्विद्वान्यः करोति यतिक्रियाम्॥ इति।

हुत्वा तच्छेषं पायसं निवेदयेदित्यन्वयः। अत्र त्रयोदश्यां द्विजश्रेष्ठमिति पाठः प्राच्यग्रन्थेषु लिखितः स प्रामादिकः। बलित्रयदानात्मकस्य नारायणबलेरुपक्रमे द्वादशेऽहनि कर्तव्यत्वाभिधानात्॥२५॥
तदुदकदानमित्थं कर्तव्यमित्याह—

* संस्कृत्यानीक्षमाणाः सकलकुलभुवो बालपूर्वं व्रजित्वा
नादेये वृद्धपूर्वं पयसि सवसना एकवारं निमज्ज्य ।
पाषाणे त्रिः सकृद्वा प्रतिदिनमुदकं ब्राह्मणे दक्षिणास्याः
क्षत्रे तूदङ्मुखा वै मृतवति विशि तु प्राङ्मुखास्ते ददीरन् ॥ २६ ॥

'स्नायुर्भूयोऽपि तत्र' [ इत्युत्तरस्थमत्रानुकृष्यते ] । येषामनुगमनाद्युक्तं ते सकलाः कुलभुवः सगोत्राः सपिण्डाः सोदकाश्च साक्षात्परम्परया वा प्रेतं संस्कृत्य संस्कारस्थानमनीक्षमाणाः सन्तो बालपूर्वं कनिष्ठपुरःसरं पयःसमीपं व्रजित्वा नादेये पयसि सवसना एकवारं वृद्धपूर्वं ज्येष्ठपुरःसरं निमज्ज्य स्नात्वा तीरसमीपमागत्य कंचन पाषाणमादाय तस्मिन्प्रतिदिनं यावदाशौचदिनं त्रिः सकृद्वा प्रेतनामगोत्रोच्चारपूर्वकं तिलमिश्रमुदकं ददीरन् । एतावत्सर्ववर्णेषु समानम् । वर्णभेदेन स्वयं विशेषः—ब्राह्मणे मृतवति दक्षिणास्याः, क्षत्रे मृतवत्युदङ्मुखाः, विशि वैश्ये तु मृतवति प्राङ्मुखा ददीरन् । शूद्रे त्वनियमः । तत्रोदकदाने कृते भूयः पुनरपि स्नायुः स्नानं कुर्युः । भूय इत्युक्त्या प्रथमस्नानधर्मातिदेशः । अत एव तत्र नादेये पयसीति व्याख्यानमयुक्तम् । तथा च बैजवापः—प्रेतमरण्यं हृत्वा यथोक्तमग्निं गमयित्वाऽनवेक्षमाणा आयान्त्येकवाससोऽरतीभूताः कनिष्ठपूर्वा इति । अरण्यं श्मशानम् । अरतीभूता उद्विग्नाः । रीतीभूता इति पाठे श्रेणीभूताः । प्रचेता अपि—प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोद्धर्षयेयुरुदकं ते प्रसिञ्चेयुरपसव्ययज्ञोपवीतवाससो दक्षिणामुखाः प्राङ्मुखाश्च राजन्यवैश्ययोरिति ।

---

* अथ षड्विंशेन वृत्तेन संस्कारानन्तरकरणीयं तावदाह—संस्कृत्येति । ते सकलकुलभुवः समस्तज्ञातयो बालपूर्वं बालप्रमुखाः प्रेतं संस्कृत्य दाहयित्वा संस्कारस्थलीमनीक्षमाणा नादेये पयसि व्रजित्वा वृद्धपूर्वं वृद्धपुरःसरं यथा भवति तथा सवसनाः सवस्त्रा एकवारं निमज्ज्य पाषाणे त्रिस्त्रिवारं सकृदेकवारं वा प्रतिदिनं प्रत्यहं दशादिनं यावदुदकं ददीरन्निति संबन्धः । उदकदाने वर्णभेदेन दिङ्नियमं विशदयितुं तान्विशिनष्टि—ब्राह्मण इत्यादिना । ब्राह्मणे मृतवति दक्षिणाभिमुखाः क्षत्रिये मृतवति उदङ्मुखा वैश्ये तु मृते प्राङ्मुखा इति । अत्र मूलम्—यथाविभागं शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्युपयन्तीति शातातपस्मृतिः । प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य ते तर्पयेयुरुदकं ते प्रसिञ्चेयुः । अपसव्ययज्ञोपवीतवाससो दक्षिणाभिमुखा ब्राह्मणस्योदङ्मुखाः प्राङ्मुखाश्च क्षत्रियवैश्ययोरिति मूलमित्यनुसंधेयम् ।

नोद्धर्षयेयुरङ्गम् । स एव—

नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् ।
वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥
सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रे दद्याद्दशाञ्जलीन् ॥
द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः ।
त्रिंशच्छूद्राय दातव्यास्ततः संप्रविशेद्गृहम् ॥
ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत् ॥ इति ।

दशद्वादशाद्यञ्जलिदानं चात्र प्रथमदिन एव न विधीयते । किंतु सर्वाशौचदिनानि मिलित्वा । एवं प्रत्यहमेकाञ्जलिदानमुक्तं भवति । गृहप्रवेशस्तु प्रथमदिन एव वक्ष्यमाणकाले । केचित्तु प्रथमदिन एव दशाद्यञ्जलिदानविधिं प्राहुः । स्नानगृहप्रवेशयोश्च पाठक्रमबाधेनार्थाद्विपरीतक्रमो द्रष्टव्यः । पुनःशब्देन सकलपूर्वस्नानधर्मातिदेशेन नदीरूपाधिकरणप्राप्तेर्गृहप्रवेशोत्तरं च तदसंभवात् । पुनर्नदीगमनकल्पने गौरवात्तथैव शिष्टसमाचाराच्च । गृहशौचं च कारयेदित्याशौचान्त्यदिने । अत्र च नदीकूलमित्युक्तत्वान्मूले नादेय इत्युक्तम् । तच्च यत्र भागीरथ्यादिर्नदी तद्विषयं द्रष्टव्यम् । धर्म्यास्वप्स्विति बैजवापोक्तेः । यत्र तु न तादृशी नदी तत्र तडागादौ स्थिरजल एव स्नानादि कर्तव्यम् । यत्रोदकप्रवहद्भवति तत्राप्य सकृदुन्मज्ज्यैकाञ्जलिमुत्सृज्य तत्र गोत्रं नाम गृहीत्वोत्तीर्य वासांसि परिधाय सकृदन्यान्यापीड्योदगृदशानि विसृज्याऽऽसत आ नक्षत्रदर्शनादित्याश्वलायनसूत्रात् । संस्कारानन्तरं चितामप्रदक्षिणमावर्त्य जलसमीपं गन्तव्यमिति । तथा च विष्णुः-निर्हृत्य बान्धवाः प्रेतं संस्कृत्याप्रदक्षिणं चितामभिगम्याप्सु सवाससो निमज्जनं कुर्युरिति । आश्वलायनोऽपि—प्रव्यावृतो व्रजन्त्यनीक्षमाणा इति । यद्यपि चात्रोदकमित्येवोक्तं तथाऽपि कुशतिलसहितं देयम् । दक्षिणाग्रान्कुशान्कृत्वा सतिलं तु पृथक्पृथगिति कात्यायनवचनात् । कुशानां च सत्यपि पितृपत्वे द्विगुणभुग्नता न कार्या ।

सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया ।
सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् ।

इति विष्णुपुराणात् । यद्यपि च गौतमेन प्रथमतृतीयपञ्चमसप्तमनवमे-

पूदकक्रियेति विषमदिनेष्वेवोदकदानमुक्तं योगीश्वरेण च सप्तमाद्दशमा-द्वाऽपीति सप्तमदिनपर्यन्तमप्युक्तं तथाऽपि यावदाशौचं प्रेतस्योदकं पिण्डं च दद्युरिति विष्णुवचनेन पूर्वलिखितप्रचेतोवचने च दश-द्वादशेत्याद्युक्त्योक्तः सर्वाशौचदिनपक्ष एव प्रेताभ्युदयहेतुत्वाच्छिष्टाद्दृ-तत्वाच्च मूल उक्तः । अञ्जलिसंख्यापक्षाश्च त्रयः स्मृतिषु दर्शिताः । योगीश्वरेण तावत्सकृत्पक्ष उक्तः । सकृत्प्रसिञ्चन्त्युदकमिति । आश्व-लायनेनापि स एवोक्तः । एकाञ्जलिमिति । प्रचेतसा तु पक्षत्रयमप्यु-क्तम् । तत्र नदीकूलमित्यादिवाक्ये दश द्वादशेत्याद्युक्त्या सकृत्पक्ष उक्तः । त्रिः प्रसेकं कुर्युः प्रेतस्तृप्यत्विति त्रयपक्ष उक्तः ।

दिने दिनेऽञ्जलीन्पूर्णान्प्रदद्यात्प्रेतकारणात् ।
तावद्वृद्धिश्च कर्तव्या यावत्पिण्डः समाप्यते ॥ इति ।

यदि प्रथमदिने त्रयो दत्तास्तदा द्वितीयदिने षट् तृतीयदिने नवे-त्यादिक्रमेण, यद्येकस्तदा द्वितीयदिने द्वौ तृतीयदिने त्रय इत्यादिक्र-मेण दिनसंख्यया द्वैगुण्यत्रैगुण्यादिपक्षोऽप्युक्तः । तत्रान्यतरानुष्ठानेन शास्त्रार्थसिद्धावपि गुरुपक्षानुष्ठानेन प्रेतोपकारातिशयः कल्पनीयः । अन्यथा तदाम्नानानर्थक्यप्रसङ्गात् । उदकदानमन्त्राश्च नानाविधा उक्ताः । प्रचेतसा प्रेतस्तृप्यत्विति । वैजवापेनामुष्मै स्वधेति । पार-स्करेणासावेतत्त उदकमिति । हारीतेनासौ तृप्यतामिति । कात्याय-नेन गोत्रनामपदान्ते च तर्पयामीत्यहं वदेदिति । रामायणे—

इदं पुरुषशार्दूल विमलं दिव्यमक्षयम् ।
पितृलोकेषु पानीयं मद्दत्तमुपतिष्ठताम् ॥ इति ।

एतेषां च विकल्पो द्रष्टव्यः । एतस्य चोदकदानस्य तर्पणत्वेना-न्वारब्धत्वात्सव्येनापि पक्षे प्राप्तावञ्जलिनियमार्थत्वमुक्तं वसिष्ठेन— सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्वीरन्निति । अन्यदप्यङ्गजातं स्मृत्युक्तं यथासंभवं द्रष्टव्यमिति ॥ २६ ॥

मरणाशौचिनां विधिप्रतिषेधरूपान्धर्मानाह—

* स्नायुर्भूयोऽपि तत्र त्रिनिशमनशना ज्ञातयोऽहर्निशं वा क्रीतोत्पन्नाशना वाऽऽमिषलवणपयः क्षारमन्नं त्यजेयुः ।

---

* अथ सप्तविंशेन श्लोकेनोदकदानानन्तरं यत्कर्तव्यं तदाह—स्नायुरिति । ज्ञात-यस्तत्र पर्यासन्नाः पयसि भूयोऽप्युदकदानानन्तरं पुनः स्नानं कुर्युः । ततस्तैर्यत्क-

स्त्रीसङ्गं मङ्गलानि व्यसनहसनमुद्रोदनोच्चासनानि
तार्णास्तीर्णक्षितौ ते पृथगतिनियताः संविशेयुर्निशायाम् ॥२७॥

ज्ञातयस्त्रिनिशमहर्निशं वाऽनशना उपवासिनः, क्रीतं तदानीमेवाऽऽपणादानीतमुत्पन्नमयाचितलब्धं वाऽशनं येषामेवंभूता वा तावदेव। भवेयुरिति शेषः। तत्रैव विशेषः। पयोन्तो द्वंद्वैकवद्भावः। आमिषं मांसं लवणं सैन्धवसामुद्रादि पयो दुग्धम्। क्षारं च गोधूमगुडाद्यन्नं भक्ष्यं भोजने त्यजेयुः। स्त्रीसङ्गं मैथुनम्। मङ्गलान्यादर्शदर्शनादीनि। व्यसनानि द्यूतादीनि। हसनं हास्यं मुदं संतोषावस्थानं रोदनमुच्चासनं च मञ्चादि। त्यजेयुरित्यनुषङ्गः। तार्णं तृणनिर्मितं कटादि तेनैवाऽऽस्तीर्णायां क्षितौ ते ज्ञातयोऽतिनियता मूत्रपुरीषादौ कृते विहितशौचेन शुचयः सन्तो निशायां रात्रावेव पृथगेकाकिनः संविशेयुः शयीरन्। इदं चोपलक्षणं दिवाऽप्युपवेशनं तार्णस्तीर्णक्षितावेव द्रष्टव्यम्। तथा च वसिष्ठः—गृहान्व्रजित्वाऽधस्स्रस्तरे त्र्यहमनश्नन्त आसीरन्क्रीतोत्पन्नेन वा वर्तेरन्निति। अधस्तां शयनासनार्थं निर्मितस्तृणमयः कटादिरधस्स्रस्तरः। आश्वलायनः—नैतस्यां रात्र्यामन्नं पचेरन्क्रीतोत्पन्नेन वा वर्तेरन्निति। मनुः—

अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम्।
मांसाशनं च नाश्नीयुः शयीरंश्च पृथक्क्षितौ॥ इति।

क्षितिग्रहणात्खट्वाकम्बलादिनिषेधो नतु कटस्य। भूमौ स्रस्तरशायिन इति विष्णुपुराणात्। क्षारगणश्चोक्तोऽग्निपुराणे—

तिलमुद्गादृते शैम्ब्यं सस्ये गोधूमकोद्रवौ।

---

तैव्यं तदाह—त्रिनि शमिति। त्रिदिनमनशनाः सन्तोऽहर्निशमेकमहोरात्रं वाऽनशनाः क्रीतोत्पन्नाशना वा सन्तः क्रीतं क्रयेण प्राप्तम्। उत्पन्नमयाचितप्राप्तम्। तदशना वा। आमिषं लवणं पयः क्षारमन्नं त्यजेयुः। तथा स्त्रीसङ्गं मङ्गलानि व्यसनहसनमुद्रोदनोच्चासनानि त्यजेयुरिति पूर्वेणान्वयः। तथा निशाकृत्यमाह—तार्णास्तीर्णेति। तृणनिर्मितं यदास्तरणं तत्तार्णम्। तेनाऽऽस्तीर्णाऽऽच्छादिता या क्षितिर्भूमिस्तत्र। अतिनियता ब्रह्मचर्यादिनियमयुक्ताः। पृथङ्निशायां संविशेयुरिति स्पष्टमेतत्। अत्र 'कृतलब्धाशना भूमौ स्वपेयुस्ते पृथक्पृथक्' इत्यादि याज्ञवल्क्यवचनं मूलमनुसंधेयम्।

धान्याकं देवधान्यं च शमीधान्यं तथैक्षवम् ।
स्विन्नधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः ॥ इति ।

क्षारो यवक्षारादिः । लवणविशेषणं वा क्षारग्रहणं तेन सैन्धवादेरनिषेध इति मेधातिथिः । निमज्जेयुरिति मार्जनरहितं मज्जनमात्रं कुर्युरित्यर्थः । तथा च गौतमः— अधःशय्यासनिनो ब्रह्मचारिणः सर्वे न मार्जयीरन्मांसं न भक्षयेयुरा प्रदानादिति । सर्वे ज्ञातयः सह स्नायुरित्यर्थ इत्यन्ये । प्रदानमेकादशाहिकं श्राद्धं तत्पर्यन्तमिति । मांसभक्षणादौ मनूक्तत्र्यहेण विकल्पः । विष्णुपुराणे त्वस्थिसंचयनमवधित्वेनोक्तम्—

शय्यासनोपभोगस्तु सपिण्डानामपीष्यते ।
अस्थिसंचयनादूर्ध्वं संयोगस्तु न योषिताम् ॥ इति ।

योषितां संयोगो मैथुनं तु यावदाशौचमेव नेष्यत इत्यर्थः । सपिण्डग्रहणं पुत्रव्यतिरिक्तपरम् । पुत्राणां तु यावदाशौचमेव । दशाहं कटमुपासीरन्मातापित्रोरेव मरण इति बौधायनवचनात् । बृहस्पतिरपि—

अधःशय्यासना दीना मलिना भोगवर्जिताः ।
अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा ॥ इति ।

दीना इति हर्षहास्यादिनिषेधः । मलिना इति मार्जनवस्त्रक्षालनादिनिषेधः । अत एव क्षालनार्थं निर्णेजकादिहस्तदानरूपो वासस्त्यागस्तेनैवाऽऽशौचोपान्त्यदिने विहितः । नवमे वाससां त्यागो न स्वरोम्णां तदन्तक इति । ब्रह्मपुराणादौ त्वन्तिमदिने वस्त्रशुद्धिर्विहिता—

यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः ।
स तत्र गृहशुद्धिं च वस्त्रशुद्धिं करोत्यपि ॥ इति ।

प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया वाससां च त्यागोऽन्ते त्वन्त्यानामिति गौतमोक्तस्तु वासस्त्यागः परिवर्तनमात्रम् । पिण्डदानाद्यौर्ध्वदेहिककालधृतयोस्तु त्याग एव ।

ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे तु वाससी ।
अन्त्यानामाश्रितानां च त्यक्त्वा स्नानं करोति च ॥

इति ब्राह्मात् । यत्तु वाचस्पतिना गौतमेनान्त्यानां शूद्राणामन्ते वासस्त्यागविधानाद्बार्हस्पत्यवासस्त्यागस्य द्विजविषयत्वेन संकोचः कृतः स भिन्नविषयत्वादयुक्तः । भोगवर्जिता इति स्रक्चन्दनादिधारणव्यस-

नोच्चासनादिनिषेधः । तेन तैलाभ्यङ्गताम्बूलचर्वणादिकं सर्वं भोगसाधनं मूल उपलक्षितं द्रष्टव्यम् । यस्तु मार्कण्डेयपुराणे—

तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनं च यत् ।
तेन चाऽऽप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः ॥

इति तैलाभ्यङ्गो विहितः सोऽन्तिमदिने ग्रामान्निष्क्रम्याऽऽशौचान्ते कृतश्मश्रुकर्माणस्तिलकल्कैः सर्षपकल्कैर्वा स्नाता विपरिवर्तितवाससो गृहं प्रविशेयुरिति विष्णूक्ततिलकल्कस्नानविकल्पितो द्रष्टव्यः । रोदनं च निषिद्धं याज्ञवल्क्येन—

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥ इति ।

क्रीतं लब्धं वा एकान्नमेव भोक्तव्यम् । क्रीत्वा लब्ध्वा वाऽन्यगृहादेकान्नमलवणमेकां रात्रिं भुञ्जीरन्निति बैजवापसूत्रात् । आशौचमध्ये भोजनं च ज्ञातिभिः सह कर्तव्यम् । आशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजानिति ब्रह्मपुराणात् । महाभारतेऽप्युक्तम्—

तिलान्ददत पानीयं दीपं ददत जाग्रत ।
ज्ञातिभिः सह मोदध्वमेतत्प्रेतेषु दुर्लभम् ॥ इति ।

मरीचिना तु दिनविशेषे सहभोजनमुक्तम्—

प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा ।
ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम् ॥ इति ।

तच्च भोजनं दिवैव कर्तव्यम् । दिवा च भक्तं भोक्तव्यममांसं मनुजर्षभेति विष्णुपुराणात् । भोजनपात्राणि चोक्तानि हारीतेन—पाणिषु मृन्मयेषु पर्णपुटेषु वाऽश्नीरन्निति । अत्र विशेषनिषेधश्च गृह्यकारिकायाम्—

लवणक्षीरमाषान्नापूपमांसानि पायसम् ।
वर्जयेदाहृतान्नेषु बालवृद्धातुरैर्विना ॥ इति ।

एवमन्येऽप्याशौचिधर्माः स्मृतिनिबन्धेषु द्रष्टव्याः । एतेषु च धर्मेष्वनुक्तकालविशेषाणामवधित्रयं वैकल्पिकमुक्तम् ॥ २७ ॥

***संस्कर्ता दर्भपुञ्जे समधु दहनतः प्रत्यहं पिण्डमेकं**
**भूमावेवाऽऽपेत प्रथमदिनचरुद्रव्यमेवोपरिष्टात् ।**

---

* अथाष्टाविंशतितमेन वृत्तेन दशाहसंबन्धिविधिमाह—संस्कर्तेति । संस्कर्ता दाहकः । दहनतो दहनानन्तरं प्रतिदिनं दशाहावधि दर्भपुञ्जे भूमावेवाऽऽस्तृत एकैकं

दाहाह्ना(हा)देव गण्यं चयनदिनमिदं चाऽऽदितोऽह्नां चतुर्णा-
मेकस्मिन्सप्तमे वाऽहनि नवमदिने वाऽनुपेते तु नैतत् ॥२८॥

संस्कर्ता दाहकर्ता । न तु पश्चादागतः पुत्रादिः संनिहितोऽपि । भूमावेव न तु जलदानवत्पाषाणे । आस्तीर्णे दर्भपुञ्जे समधु यथा भवति तथा दहनतो दाहदिनादारभ्य प्रत्यहमेकपिण्डमावपेद्दद्यात् । अत्र यद्यपि प्रत्यहमिति साधारण्येनोक्तं तेन सर्वेषां यावदाशौचं प्रत्यहं पिण्डदानावगमाद्ब्राह्मणस्य दश पिण्डाः क्षत्रियस्य द्वादश पिण्डा वैश्यस्य पञ्चदश, शूद्रस्य त्रिंशादिति वर्णभेदेन पिण्डसंख्याभेदः प्रतीयते । पारस्करेणापि तथोक्तम्—

ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्तिताः ॥ इति ।

तथाऽपि—जात्युक्ताशौचतुल्यांस्तु वर्णानां क्वचिदेव हि ।
देशधर्मान्पुरस्कृत्य प्रेतपिण्डान्वपन्त्यपि ॥

इति पूर्वोक्तसंख्याया देशविशेषविषयत्वमभिधाय-प्रेतेभ्यः सर्ववर्णेभ्यः

---

पिण्डं समधु यथा भवति तथाऽऽवपेत । यावद्दशाहमेकैकमेव पिण्डं दद्यादिति भावः । तथा च स्मृतिः— नवभिर्दिवसैर्दद्यान्नव पिण्डान्समाहितः । दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ॥ इति । तद्ब्राह्मणनिमन्त्रणाभिप्रायेण । अत्र भूमावित्यनेन पाषाणादिव्यावृत्तिः सूचिता । तदुक्तं शङ्खेन–भूमौ माल्यपिण्डपानीयानुलेपनानि दद्युरिति । पिण्डदाने द्रव्यनियममाह— प्रथमदिने यच्चरुद्रव्यं तदेवोपरिष्टाद्यावद्दशाहं कर्तव्यं न तु द्रव्यान्तरमुपादेयमिति यावत् । तदुक्तं शुनःपुच्छमुनिना-शालिना सक्तुभिर्वाऽपि शाकैर्वाऽथ विनिर्वपेत् । प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहकम् ॥ इति । अथ चयनकालमाह— दाहाह्नादेवेति । चयनदिनं दाहाह्नादेव गण्यं न मरणदिनात्संचयनम् । 'अस्थिसंचयनं दाहान्मृताहस्तु यथाविधि' इत्यङ्गिरोवचनादिति भावः । इदं चयनमादितो दाहदिनतो यानि चत्वारि दिनानि तेषां चतुर्णां दिनानां मध्य एकस्मिन्दिने दाहतः सप्तमे नवमे वा दिने कार्यमिति शेषः । तथा च संवर्तः— प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा । अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह । स्मृत्यन्तरमपि—' द्वितीये त्वस्थिसंचयः ' इति । विष्णुरपि— चतुर्थदिवसेऽस्थिसंचयं कुर्यात् । तेषां च गङ्गाम्भसि प्रक्षेप इति । अनुपनीत उपवीतरहित एतदस्थिसंचयनादिकं न स्यादिति ग्रन्थान्तराज्ज्ञातव्यम् ।

पिण्डान्दद्याद्दशैव त्विति ब्रह्मपुराणेऽभिधानात्सर्वस्मृतिपुराणेषु च दशानामेव पिण्डानां शिरःप्रभृत्यवयवनिष्पत्तिरूपप्रयोजनाभिधानाद्ब्राह्मणस्याविच्छेदेनैव दशपिण्डदानं, क्षत्रियादीनां नवदिनपर्यन्तमविच्छेदेन नवपिण्डदानं दशमपिण्डदानं त्वाशौचान्त्यदिन इति द्रष्टव्यम् । तथा च ब्रह्मपुराणे—

दिवसे दिवसे देयः पिण्ड एकः क्रमेण त्वित्युपक्रम्योक्तम्—

देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि ।
वैश्यानां वै पञ्चदशे देयस्तु दशमस्तथा ॥
शूद्रस्य दशमः पिण्डो मासे पूर्णेऽह्नि दीयते ॥ इति ।

पिण्डदानप्रकारोऽपि तत्रैव—

मृन्मयं भाण्डमादाय नवं स्नातः सुसंयतः ।
लकुटं सर्वदोषघ्नं गृहीत्वा तोयमानयेत् ॥
ततश्चोत्तरपूर्वस्यामग्निं प्रज्वालयेद्दिशि ।
तण्डुलप्रसृतीं तत्र प्रक्षाल्याद्भिः पचेत्स्वयम् ॥
सपवित्रैस्तिलैर्मिश्रां केशकीटविवर्जिताम् ।
द्वारोपान्ते ततः क्षिप्त्वा सुशुद्धां गौरमृत्तिकाम् ॥
तत्पृष्ठे संस्तरेद्दर्भान्याम्याग्रान्देशसंभवान् ।
ततोऽवनेजनं दद्यात्संस्मरेद्गोत्रनामनी ॥
तिलसर्पिर्मधुक्षीरैः संसिक्तं तप्तमेव हि ।
दद्यात्प्रेताय पिण्डं तु दक्षिणाभिमुखः स्थितः ॥
फलमूलगुडक्षीरतिलमिश्रं तु कुत्रचित् ।
अर्घैः पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शीतलैः ॥
ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् ।
प्रयाति यावदाकाशं पिण्डाद्बाष्पमयी शिखा ॥
तावत्तत्संमुखस्तिष्ठेत्सर्वं तोये क्षिपेत्ततः ।
दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु ॥
एक एवाञ्जलिस्त्वेवं पात्रमेकं च दीयते ।
द्वितीये द्वौ तृतीये त्रींश्चतुर्थे चतुरस्तथा ॥
पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त चैव हि ।
अष्टमेऽष्टौ च नवमे नवैव दशमे दश ॥

एवं स्युः पञ्चपञ्चाशत्तोयस्याञ्जलयः क्रमात् ।
तावन्ति तोयपात्राणि संयुक्तानि तिलादिभिः ॥ इति ।

तण्डुलेति मुख्यः कल्पः । अनुकल्पत्वेन त्वन्यदपि द्रव्यं द्रष्टव्यम् । तथा च शुनःपुच्छः—

फलमूलैश्च पयसा शाकेन च गुडेन च ।
तिलमिश्रं तु दर्भेषु पिण्डं दक्षिणतो हरेत् ॥ इति ।
शालिना सक्तुभिर्वाऽपि शाकैर्वाऽप्यथ निर्वपेत् ॥ इति च ।

द्वारोपान्तदेशश्च न नियतः ।

ग्रामाद्बहिश्च कर्तव्यं जलाशयसमीपतः ।
पिण्डदानं दशाहानि प्रेतायारण्यमाश्रितैः ॥

इति । ब्रह्मपुराण एव देशान्तरस्यापि विधानात् । शुनःपुच्छोऽपि—द्वारदेशे प्रदातव्यो देवतायतनेषु चेति । मृत्तिकाक्षेपश्च स्थण्डिलनिर्माणार्थम् ।

स्थण्डिले प्रेतभागं तु दद्यात्पूर्वाह्ण एव तु ।
कृत्वा तु पिण्डसंकल्पं नामगोत्रेण सुन्दरि ।

इति वाराहपुराणात् । दर्भास्तरणं चोपनीतविषयम् । प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जित इति मरीचिवचनं चानुपनीतविषयम् । तथा च प्रचेताः—असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां कुशेष्विति । मूले च पाषाणनिवृत्त्यर्थमेवकारकरणं सर्वस्मृतिपुराणेषु कुशास्तीर्णभूमेरेव पिण्डाधिकरणत्वाभिधानाद्गृहद्वारि तस्मै प्रेताय पिण्डं निर्वपेद्भूमौ माल्यं पानीयं चोपलिप्तायां दद्युरिति प्रचेतोवचनानुसाराच्च । भूमौ माल्यमित्यादिशङ्खवचनेऽप्युपलिप्तायामित्येव पाठः स्वसंमतिप्रदर्शनाय । उपले वा दद्युरिति पाठेऽपि पाषाणमये देश इति कश्चित् । पिण्डदाने च यद्यपि योगीश्वरेण—पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयमिति पिण्डपितृयज्ञप्रकारोऽतिदिष्टस्तथाऽपि स्वधाशब्दादेर्मन्त्राणां च पर्युदासः । तथा च मरीचिः—

पितृशब्दं स्वधां चैव न प्रयुञ्जीत कर्हिचित् ।
अनुशब्दं तथा चेह प्रयत्नेन विवर्जयेत् ।
उपतिष्ठतामयं पिण्डः प्रेतायेति समुच्चरेत् ।
तूष्णीं प्रत्येकं पुष्पं च धूपं दीपं तथैव च ॥ इति ।

मूले च मधुग्रहणं तिलघृतादेरुपलक्षणम् । अत्र संख्याविकल्पे फलतारतम्यं कल्प्यम् । एते च पञ्चपञ्चाशत्तिलतोयाञ्जलयः पिण्डोपरि । द्वितीयतृतीयादिशब्दैः संनिहितपिण्डानामेवाभिधानात् । पिण्डानामवयवपूरकत्वमुक्त्वा सपात्राञ्जलीनामिन्द्रियपूरकत्वाभिधानाच्च । पूर्वतोयाञ्जलीनां च तापोपशमनार्थत्वात् । तथा च ब्रह्मपुराण एव—

शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते तथा ।
द्वितीयेन तु कर्णाक्षि नासिकास्तु समासतः ॥
गलांसभुजवक्षांसि तृतीयेन तथा क्रमात् ।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च ॥
जानुजङ्घे तथा पादौ पञ्चमेन तु सर्वदा ।
सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः ॥
दन्तलोमान्यष्टमेन वीर्यं तु नवमेन च ।
दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः ॥
एकादशेन्द्रियबुधाः सन्तु बुद्धिबुधैः सह ।
सर्वेषामेव भूतानां परलोकसमागमे ॥
प्रेतभावं गतानां तु रौरवादिषु वर्तताम् ।
पञ्चभिः पञ्चभिस्त्वेभिः पात्रैरञ्जलिभिस्तथा ॥
एकादशैवेन्द्रियाणि पूर्यन्ते शास्त्रदर्शनात् ॥ इति ।

वैशम्पायनऋष्यशृङ्गादिभिस्त्वन्यथोक्तं तद्विस्तरभयात्प्रयोजनाभावाच्च न प्रदर्श्यते । यत्र तु सद्यस्त्र्यहे वा दशपिण्डदानमुक्तं युद्धमृतप्राप्तमृत्युकालभृग्वादिमरणादौ तत्र तत्प्रकारो ब्रह्मपुराणे—

सद्यःशौचे प्रदातव्याः सर्वेऽपि युगपत्तथा ।
त्र्यहाशौचे प्रदातव्यः प्रथमे त्वेक एव हि ।
द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि ।
एकस्तोयाञ्जलिस्तद्वत्पात्रमेकं च दीयते ॥ इति ।

प्रत्यहमेकस्तोयाञ्जलिरेकं च पात्रमित्यर्थः । त्र्यहाशौचे प्रकारान्तरमप्युक्तं पारस्करेण—

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः ।
द्वितीये चतुरो दद्यादस्थिसंचयनं तथा ।
त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्तथा ॥ इति ।

प्रथमेऽहनि यो दद्यादित्यस्याग्निं दद्यादित्यर्थमभिप्रेत्य संस्कर्त्रे-त्युक्तम्। तथाऽन्यदपि कर्तव्यमुक्तं पारस्करेण—मृन्मये तां रात्रीं क्षीरोदके विहायसि निदध्युः। प्रेतात्र स्नाहि पिब चेदमिति। विहायसि शिक्यादौ। गरुडपुराणे तु पृथक्शरावयोर्दद्यादेकाहं क्षीरमम्बु चे-त्युक्त्वा त्रिरात्रपक्षोऽप्युक्तः—

अपक्के मृन्मये पात्रे दुग्धं दद्याद्दिनत्रयम्।
काष्ठत्रये गुणैर्बद्धे प्रीत्यै रात्रौ चतुष्पथे॥ इति।

मत्स्यपुराणे तु यावदाशौचं तन्निधानमुक्तम्—

तस्मान्निधेयमाकाशे दशरात्रं पयस्तथा।
सर्वतापोपशान्त्यर्थमध्वश्रमविनाशनम्॥ इति।

अन्यदप्युक्तं गृह्यकारिकायाम्—

तत्र प्रेतोपकृतये दशरात्रमखण्डितम्।
कुर्यात्प्रदीपं तैलेन वारिपात्रं च मार्तिकम्।
भोज्याद्भोजनकाले सभक्तमुष्टिं च निर्वपेत्।
नामगोत्रेण संबुद्ध्या धरित्र्यां पितृयज्ञवत्॥ इति।

एवमन्यदपि स्मृतिभ्योऽवगन्तव्यम्।

## प्रथमदिनचरुद्रव्यमेवोपरिष्टात्।

प्रथमदिने यच्चर्वर्थं तण्डुलनीवारादि द्रव्यं गृहीतमुपरिष्टाद्यावत्पिण्डदानं तदेव ग्राह्यम्। तथा च शुनःपुच्छः—प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकमिति। चरुग्रहणात्तस्य मुख्यत्वं सक्तुगुडादिकं तु पाकासंभवे ग्राह्यमिति दर्शयति। कर्तृदेशाविपर्ययश्च पूर्वमुक्तः। उत्तरीयाद्यविपर्ययोऽपि द्रष्टव्यः। एतेषां च विपर्यय उक्तं गृह्यकारिकायाम्—

उत्तरीयशिलापात्रं कर्तृद्रव्यविपर्यये।
पूर्वदत्ताञ्जलीन्दद्यात्पिण्डदानं तथैव च॥ इति।

एतस्मिश्चोदकपिण्डदानाद्यौर्ध्वदेहिके प्रक्रान्तेऽसमाप्त एव दर्शपाते विशेषो भविष्यत्पुराणे—

प्रवृत्ताशौचतन्त्रस्तु यदि दर्शं प्रपद्यते।
समाप्य चोदकं पिण्डान्स्नानमात्रं समाचरेत्॥ इति।

इदं च मातापितृभिन्नविषयम्। तद्विषये तु श्लोकगौतमः—

अन्तर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत।
पित्रोस्तु यावदाशौचं दद्यात्पिण्डं तिलाञ्जलीन्॥ इति।

इदमपि त्र्यहमध्ये । त्रिरात्रात्परं तु दर्शपाते मातापितृविषयेऽप्यन्यदेव ।
तथा च गालवः—

पित्रोराशौचमध्येऽपि यदि दर्शः समापये(ते)त् ।
तावदेवोत्तरं तन्त्रं पर्यवस्येत्त्र्यहात्परम् ॥ इति ।

अन्येषां तु त्र्यहात्पूर्वमपि दर्शपाते तत्र तन्त्रसमाप्तिः ।

दाहाह्लादेव गण्यं चयनदिनम् ।

चयनस्यास्थिसंचयनस्य दिनं वक्ष्यमाणं प्रथमाद्यनाहिताग्नेरपि दाहाह्लाद्दाहदिवसादेव गण्यम् । तथा चाङ्गिराः—

अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः ।
शुद्धिः संचयनं दाहान्मृताहस्तु यथातिथि ॥ इति ।

दाहाह्लादित्यप*पाठः ।

इदं चाऽऽदितोऽह्नां चतुर्णामेकस्मिन्सप्तमे वाऽहनि नवमदिने वा ।

इदं चास्थिसंचयनमादितो दाहदिनमारभ्य चतुर्णामह्लामेकस्मिन्प्रथमे द्वितीये तृतीये चतुर्थे वा सप्तमेऽहनि नवमदिने वा स्वस्वगृह्योक्तप्रकारेण कर्तव्यम् । तथा च संवर्तः—

प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा ।
अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह ॥ इति ।

छन्दोगपरिशिष्टे—अपरेद्युस्तृतीये वा अस्थिसंचयनं भवेदिति । अपरेद्युर्द्वितीये । विष्णुः—चतुर्थे दिवसेऽस्थिसंचयनं तेषां च गङ्गाम्भसि प्रक्षेप इति । ब्रह्मपुराणे तु वर्णविशेषेण कालविशेषव्यवस्था प्रकारद्वयेनोक्ता—

चतुर्थे ब्राह्मणानां तु पञ्चमेऽहनि भूभृताम् ।
नवमे वैश्यजातीनां शूद्राणां दशमात्परे ॥
क्वचित्तृतीये विप्रस्य चतुर्थे क्षत्रियस्य च ।
पञ्चमे वैश्यजातेश्च शूद्रस्य दशमेऽहनि ॥
अस्थ्नां च संचयः प्रेते क्रियते देशगौरवात् ॥ इति ।

---

* अपपाठं इति । 'अह्नोऽह्न एतेभ्यः' (पा० सू० ५।४।८८) इत्यह्नादेश याप्तेरित्यर्थः । किंतु दाहस्याह इत्यर्थके षष्ठीतत्पुरुषे 'राजाहःसखिभ्यः' (पा० सू० ५।४।९१) इति समासान्ते टचि टिलोपे 'रात्राह्नाहाः पुंसि' (पा० सू० २।४।२९) इति पुंस्त्वेन 'दाहाहः' इत्येव भवतीति भावः ।

आश्वलायनेन त्वन्योऽपि काल उक्तः—संचयनमूर्ध्वं दशम्याः कृष्णपक्षस्यायुजास्वेकनक्षत्र इति । कृष्णपक्षसंबन्धिदशम्या ऊर्ध्वमयुग्मास्वेकादशीत्रयोदशीपञ्चदशीषु मध्ये कस्यांचित्तिथावषाढाफाल्गुनीप्रोष्ठपदाव्यतिरिक्त एकनक्षत्रे संचयनं कार्यमित्यर्थः । अयं च कालोऽनतीत आशौचकाले यथासंभवतीतेऽपि संवत्सरान्तप्रदिसपिण्डीकरणपक्षे द्रष्टव्यः । यदा तु द्वादशाहे सपिण्डीकरणं क्रियते तन्मध्ये चायं कालो न संभाव्यते तदा पूर्वक एव । संचयनानन्तरं श्राद्धमस्मै दद्युरित्येकोद्दिष्टविधानात्सपिण्डीकरणोत्तरं तन्निषेधात् । संचयनप्रकारश्चाऽऽश्वलायनकात्यायनाद्युक्तो द्रष्टव्यः । आङ्गिरसा च विशेष उक्तः—

अस्थिसंचयने यागो देवानां परिकीर्तितः ।
प्रेतीभूतं तथोद्दिश्य यः शुचिर्न करोति चेत् ॥
देवतानां तु यजनं तं शपन्त्यथ देवताः ।
श्मशानवासिनो देवाः शवानां परिकीर्तिताः ॥ इति ।

यागः पूजा । तत्प्रकारश्च ब्रह्मपुराणे—

स्नात्वा त्रिरात्रं कुर्वन्ति प्रेतायोदकतर्पणम् ।
श्मशानदेवतायागं चतुर्थे दिवसे ततः ॥
भवन्ति पूजिता यस्मात्तत्रस्थाः शंकरादयः ।
स्नातैः सुधौतवस्त्रैश्च श्मशानस्य समीपगैः ॥
स्वजातिविहितैर्द्रव्यैर्यथाशक्त्या समाहितैः ।
मृन्मयेषु च भाण्डेषु कुम्भेषु रुचकेषु वा ॥
सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा ।
फलैर्मूलैर्वनोत्थैश्च पूज्याः क्रव्याददेवताः ॥
कैश्चिदर्घ्यं प्रदातव्यं कैश्चित्पुष्पं च शोभनम् ।
धूपो दीपस्तथा माल्यं कैश्चिद्देयं त्वरान्वितैः ॥
तत्र पात्राणि पूर्णानि श्मशानाग्नेः समन्ततः ।
कैश्चिद्देयानि सर्वाणि पानीयान्यक्षतानि च ॥
निवेदयाद्भिः कर्तव्यं तैः सर्वैरनहंकृतैः ।
नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्वदा ॥
येऽत्र श्मशाने देवाः स्युर्भगवन्तः सनातनाः ।

तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गमक्षयम् ॥
प्रेतस्यास्य शुभाँल्लोकान्प्रयच्छन्तु च शाश्वतान् ।
अस्माकमायुरारोग्यं सुखं च ददतां चिरम् ॥
एवं कृत्वा बलिं सर्वान्क्षीरेणाभ्युक्ष्य वाग्यतैः ।
विसर्जनं तु देवानां कर्तव्यं च समाहितैः ॥
ततो यज्ञियवृक्षोत्थां शाखामादाय वाग्यतः ।
अपसव्यं क्रमाद्वस्त्रं कृत्वा कश्चित्सगोत्रजः ॥
प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानि च ।
पञ्चगव्येन संस्नाप्य क्षौमवस्त्रेण वेष्ट्य च ॥
प्रक्षिप्य मृन्मये भाण्डे नवे साच्छादने शुभे ।
अरण्ये वृक्षमूले वा शुद्धे संस्थापयत्यपि ॥
गृहीत्वाऽस्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत् ।
ततः संमार्जनं भूमेः कर्तव्यं गोमयाम्बुभिः ॥
पूजा च पुष्पधूपाद्यैर्बलिभिः पूर्ववत्क्रमात् ।
भूमेराच्छादनार्थं च वृक्षः पुष्करकोऽपि च ॥
पट्टको वा प्रकर्तव्यस्तत्र सर्वैर्विधानतः ॥ इति ।

भक्ष्यभोज्यपायसपानकफलमूलात्मको बलिः प्रधानम् । भक्ष्यादीनां पूजोपकरणत्वोक्तेः । अर्घ्य(मु)उक्तपुष्पाणि धूपो दीपो मालास्तण्डुलादिपूर्णपात्राणि केषुचित्पात्रेषु पानीयानि यवाद्यक्षताश्च तदङ्गानि । प्रधानाङ्गानि चोक्तानि गृह्यकारिकायाम्--

शिरसो वक्षसः पाण्योः पार्श्वाभ्यां चैव पादतः ।
अप्रदाक्षिणमस्थीनि गृह्णातीत्याह गोभिलः ॥ इति ।

पुष्करकः पुष्करिणी । पट्टकश्चत्वरः । संचितानां चाऽस्थ्नां प्रतिपत्तिरुक्ता विष्णुना--तेषां च गङ्गाम्भसि प्रक्षेप इति । तत्र विशेषो ब्रह्मपुराणे--

तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले ।
काश्चित्क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः ॥
मातुः कुलं पितृकुलं वर्जयित्वा नराधमः ।
अस्थीन्यन्यकुलस्थस्य नीत्वा चान्द्रायणं चरेत् ॥
अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गामपि ये कथंचित् ।
सद्भावकस्यापि दयाभिभूतास्तेषां तु तीर्थानि फलप्रदानि ॥

कुलद्वयं चाप्यथ वर्जयित्वा मातापित्रोर्जन्मभूम्याश्रितं च ।
अस्थीनि चान्यस्य नयन्वहंश्च भाग्यक्षयं लभते दुष्कृतं च ॥
भागीरथी यत्र गता सुवीर्थे कुले नरः कोऽपि यदा विपन्नः ।
तदा तदा तत्र तथाऽथ भक्त्या भावेन चास्थीनि विनिक्षिपेच्च ॥
स्नात्वा ततः पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च योज्यम् ।
ततस्तु मृत्पिण्डपुटे निधाय पश्यन्दिशं प्रेतगणोपगूढाम् ॥
नमोऽस्तु धर्माय वदन्प्रविश्य जलं स मे प्रीत इति क्षिपेच्च ।
उत्थाय भास्वन्तमवेक्ष्य सूर्यं स दक्षिणां विप्रमुख्याय दद्यात् ॥
एवं कृते प्रेतपुरस्थितस्य स्वर्गे गतिः स्याच्च महेन्द्रतुल्या ॥ इति ।

प्रथमद्वितीयादिदिनविधिश्च मूलोक्तो दशाहाद्याशौचे । सद्यःशौचादौ तु ब्रह्मपुराणे—

सद्यःशौचे तथैकाहे सद्यःसंचयनं भवेत् ।
त्र्यहाशौचे द्वितीयेऽह्नि कर्तव्यस्त्वस्थिसंचयः ॥ इति ।

संचयनानन्तरं चैकोद्दिष्टश्राद्धमुक्तमाश्वलायनेन—श्राद्धमस्मै दद्युरिति । विषमश्राद्धादीनि च स्मृतिनिबन्धान्तरेषु द्रष्टव्यानि ।

अनुपेते तु नैतत् ।

अनुपेतेऽनुपनीते प्रेते दग्धेऽप्येतदस्थिसंचयनं न कार्यम् ॥ २८ ॥

*वर्षीयस्युद्गते तूपरिवपननखच्छेदनं सूतकान्ते
मध्ये वा केचिदूचुः पितृपरमगुरुष्वेव वापादि नित्यम् ।
अत्र स्मार्तं शुभार्थं भणितमभणितं तत्स्वगृह्यैर्विदित्वा
कृत्वा दानं च दद्यादशुभभयभिदे भूसुरेभ्यः शुभार्थम् ॥ २९ ॥

---

* अथैकोनत्रिंशेन श्लोकेन वपनादिविधिमाह—वर्षीयसीति । वर्षीयसि वृद्ध उद्गते संस्थिते सति तु पुनः सूतकान्ते दशमेऽहन्युपरिवपननखच्छेदनं कनीयांसः कुर्युरिति शेषः । उपरिवपनमूर्ध्वजकेशश्मश्रुवपनं च । अथवा केचिन्मध्य आशौचमध्ये द्वितीये तृतीये पञ्चमे सप्तमे वा दिने कर्तव्यमूचुरिति । तथा च देवलः—दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् । तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च । द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः । तृतीये पञ्चमे वाऽपि सप्तमे वा प्रदानतः ॥ इति । वपने निमित्तविशेषेणाऽऽवश्यकतामाह—पितृपरमगुरुष्वेव

केचिद्वर्षीयसि* स्वापेक्षया वयोधिके सपिण्ड उद्गते मृते कनीयसां तत्सपिण्डानामुपरिवर्तमानानां मुखशिरोरोम्णां वपनं नखच्छेदनं चोचुः । द्वंद्वैकत्वम् । केचिदिति पाक्षिकत्वं दर्शयति । तेन प्रेताभ्युदयकामनायां वयोधिके सपिण्डे प्रेते सर्वैः कनिष्ठैर्भ्रात्रादिभिरपि वपनादि कर्तव्यम् । पितृपरमगुरुषु तु मातापित्रोराचार्ये चोद्गते नित्यं नियमेनोपरिवपनादि कर्तव्यम् । तथा च—

दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् ।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च ॥

इति देवलवचनात्स्नानवत्सर्वेषां वपनादौ प्राप्ते 'तेषां चोदकस्पर्शनं तावन्तं कालमनुभाविनां च परिवापनम्' इत्यापस्तम्बवचने मृतकनीयःसपिण्डानां तन्नियम्यते । एवं च कृतश्मश्रुकर्माण इति विष्ण्वादिवचनगतमपि बहुवचनमनुभाविविषयतया संकुचितवृत्तिरेव द्रष्टव्यम् । श्मश्रु-ग्रहणं चोपलक्षणम् । तेनैव च पुत्राणां तद्धर्मातिदेशाच्च शिष्यस्यापि वपने सिद्धे—

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ ।
आधानकाले सोमे च वपनं सप्तसु स्मृतम् ॥

इति वचनान्मातापित्राचार्यमरणे तस्याऽऽवश्यकत्वमन्यत्र चानियतत्वं कल्प्यते । अन्यथैतस्याऽऽनर्थक्यापत्तेः । वचनप्राप्तपरिसंख्याया अशक्यत्वात्तीर्थान्तरेऽपि वचनसत्त्वाच्च । अत्रत्यगङ्गापदस्य सर्वतीर्थेष्वयं विधिरिति सर्वतीर्थपदस्य च यत्प्रयागमात्रपरत्वं केनचिद्भ्रान्तेनोक्तं तन्निस्थलीसेतावस्मत्पितृव्यचरणैः प्रबन्धेन निराकृतम् । तत्रा-

---

वापादि नित्यम् । एतेष्वेव संस्थितेषु वापादि नित्यमावश्यकं पुत्रादीनां नेतरत्रेति भावः । तदुक्तम्—गयायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ । आधानकाले सोमे च वपनं सप्तसु स्मृतम् ॥ इति । सूतकान्ते यत्कर्म कर्तव्यं तदाह—अत्रेति । अत्र यत्स्मार्तं कर्म कर्तव्यतया मयोक्तं यच्च नोक्तं तत्सर्वं स्वगृह्योक्तं विदित्वाऽनुष्ठाय पश्चादशुभमयमिदेऽशुभनाशायामयार्थं शुभप्राप्तये च भूसुरेभ्यो ब्राह्मणेभ्यो दानं दद्यादित्येतत्स्पष्टम् ।

* वर्षीयसीति । अतिशयेन वृद्धो वर्षीयान् । वृद्धशब्दादीयसुनि 'प्रियस्थिर' (पा० सू० ६।४।१७) इत्यनेन वर्षादेशे साधुः । वृद्ध इति यावत् ।

धिकं च वक्तव्यमन्यत्र मत्कृतौ द्रष्टव्यम् । पित्रादिग्रहणं च भर्तुरप्यु-पलक्षणम्—

पुत्रः पत्नी च वपनं कुर्यादन्ते यथाविधि ।
पिण्डदानोचितोऽन्योऽपि कुर्यादित्थं समाहितः ॥

इति व्यासवचने पत्न्या अपि वपनविधानात् । तत्र कालवि(लाव)-धिः—सूतकान्ते । सूतकशब्द आशौचमात्रपरः । स्वाशौचान्त्येऽह्नि उपरिवपननखच्छेदनं कुर्यात् । अयं च मुख्यः कल्पः । सकलस्मृति-पुराणेषूक्तत्वात् । दशमग्रहणस्याऽऽशौचान्त्यदिनोपलक्षणत्वात् । मध्ये वा केचिदित्यत्रापि संबध्यते । केचित्स्मृतिकारा अज्ञातनामविशेषा आशौचमध्येऽपि द्वितीयादिदिने वपनाद्यूचुः । तथा च मिताक्षरोदाहृ-तस्मृत्यन्तरे—

द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः ।
तृतीये पञ्चमे वाऽपि सप्तमे वाऽऽप्रदानतः ॥ इति ।

आप्रदानत ऐकादशाहिकश्राद्धादिति चतुर्थादीनामपि विधिः । अ-न्यथा तस्याऽऽनर्थक्यात् । क्वचित्तु दाहाङ्गभूतं दाहकर्तुः प्रथमदिनेऽपि वपनमुक्तम् । अत एव स्मृतिसंग्रहे रात्रिमृतस्य रात्रावेव दाहे तदैव प्राप्तस्य तदङ्गभूतस्य वपनस्य तदानीं निषिध्य द्वितीयदिनेऽनुष्ठा-नमुक्तम्—

रात्रौ दग्ध्वा तु पिण्डान्तं कृत्वा वपनवर्जितम् ।
वपनं नेष्यते रात्रौ श्वस्तनी वपनक्रिया ॥ इति ।

क्वचित्तु सर्वपुत्राणामुक्तम् । मदनपारिजातादौ प्रथमादिदिनकृतवप-नस्यापि पुनराशौचान्ते वपनमुक्तम् । तत्र सर्वत्र प्रमाणं मृग्यम् । अ-न्यदप्याशौचान्तदिनकृत्यं ब्रह्मपुराणेऽभिहितम्—

यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः ।
स तत्र वस्त्रशुद्धिं च गृहशुद्धिं करोत्यपि ॥
समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम् ।
ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे तु वाससी ॥
अन्त्यानामाश्रितानां च त्यक्त्वा स्नानं करोति च ।
श्मश्रुलोमनखानां च यत्त्याज्यं तज्जहात्यपि ॥
गौरसर्षपकल्केन तिलकल्केन संयुतम् ।

शिरःस्नानं ततः कृत्वा तोयेनाऽऽचम्य वाग्यतः ॥
वासोयुग्मं नवं शुक्लमव्रणं शुद्धमेव च ।
गृहीत्वा गां सुवर्णं च मङ्गलानि शुभानि च ॥
स्पृष्ट्वा संकीर्तयित्वा च पश्चाच्छुद्धो भवेन्नरः ।

अत्र स्मार्तं शुभार्थे भणितमगणितं तत्स्वगृह्यैर्विदित्वा
कृत्वा दानं च दद्यादशुभभयभिदे भूसुरेभ्यः शुभार्थम् ।

अत्र चाशौचे स्मार्तं सामान्यतः स्मृतावुक्तं शान्तिस्वस्त्ययनादि विशेषतः स्वगृह्यैर्भणितं तैरभणितं चान्यगृह्यैर्भणितं तैरेव विदित्वा शुभार्थे कृत्वा, अशुभभयभिदे सामान्यतो विशेषतश्च ज्ञातिमरणसूचित-भाव्यनिष्टानुत्पत्तये शुभार्थं च भूसुरेभ्यो ब्राह्मणेभ्यः, दीयत इति दानं हिरण्यादि दद्याच्च । तथा च हारीतः—दशमेऽहन्यरण्यं गत्वा कृत-श्मश्रुकर्माणः स्पृष्टान्युत्सृज्य तिलकल्कावमृष्टगौरसर्षपैः सशिरः स्नात्वाऽ-हतवाससः शुक्लवाससो वाऽरिष्टगोहिरण्यादीनालभ्य प्रविशेरञ्शान्तिं कृत्वा श्वोभूत एकानुद्दिष्टं प्रदाय स्वस्त्ययनादिधर्मार्थान्प्रवर्तयन्तीति । श्वोभूत इति शान्तिं कृत्वेत्यत्रापि संबध्यते । विष्णुरपि—' तत्र शान्तिं कृत्वा ब्राह्मणानां पूजनं देवाः परोक्षदेवाः प्रत्यक्षदेवा ब्राह्मणाः' इति । अत्र च यदाशौचोत्तरादिन एव शान्तिकमुक्तं तत्पैठीनस्युक्तप्रकारेण द्रष्टव्यम् । यथा 'श्वोभूतेऽग्निमुपसमाधाय शान्त्युदकं कुर्यात्' शं नो देवी-रिति सूक्तेन प्रथमम् । द्वाभ्यां द्वितीयम् । शं नो देवीरभिष्टये, शं न इन्द्राग्नी, तदस्तु मित्रावरुणेति तृतीयम् । शं नो धातेन्द्रजीवयास्मात्को-शात्पृथिवी शान्तिरिति चतुर्भिश्चतुर्थम् । उभयतः सर्वत्र सावित्रीशान्तिं कुर्यात् । आत्मनस्तृतीये शर्करां कुलत्थं च सव्येनाऽऽचम्य निष्ठीवेत् । विवस्वानिन्द्रमित्युक्तम् । दशमरात्रे केशश्मश्रुलोमनखानि वापयित्वाऽऽ-त्मनः शान्तिनिमित्तं शान्त्युदकं कुर्यादयुग्मान्ब्राह्मणान्भोजयेदिति । दशमरात्र इति वापयित्वेत्यनेनैव संबध्यते न शान्त्युदकं कुर्यादित्य-नेन । श्वोभूत इत्युपक्रमे तस्याऽऽशौचोत्तरदिनकर्तव्यतोक्तेः । गुरुणाऽ-भिमृता अन्वतो वाऽपक्षीयमाणा अमावास्यायां शान्तिकर्म कुर्वीरन्नि-त्याश्वलायनाद्युक्तप्रकारेण त्वाशौचोत्तरं यथाकालं द्रष्टव्यम् । पञ्चक-त्रिपादृक्षमरणादौ च दाहप्रकारः सूतकान्ते च शान्तिकविशेषप्रकारो ब्रह्मपुराणाद्युक्तो द्रष्टव्यः ॥ २९ ॥

*दत्त्वा पिण्डं सपिण्डाः परशववहनं स्नापकाश्च व्रजित्वा
तद्वेश्मद्वारि चास्य प्रशमितमनसो निम्बपत्रं विदश्य ।
आचम्याग्न्यम्बुदूर्वाङ्कुरवरवृषभानक्षतान्गोमयं च
स्पृष्ट्वा सिद्धार्थतैलान्यथ दृषदि पदं न्यस्य सर्वे विशेयुः॥३०॥

सपिण्डाः पिण्डं दत्त्वा, एकः पुत्रादिः साक्षादन्ये च तत्साहाय्याचरणेन परम्परया प्रथमदिनपिण्डदानं कृत्वा स्नानोदकदानादि च कृत्वा परे सपिण्डा अपि ये शवमसपिण्डं वहन्ति स्नापयन्त्यलंकुर्वन्ति वा ते च प्रशमितमनसः, अन्ये पुरातनैरितिहासैः पुत्रादीनां विशोकीकृतमनसः पुत्रादयश्च तैः श्रुतैरितिहासैर्विवेकेन विशोकीकृतस्वमनसः सन्तो दिवा मरणे नक्षत्रोदयपर्यन्तं रात्रिमरणे सूर्योदयपर्यन्तं बहिरेव मृदुशाद्वलभूमौ वस्त्रशोषणादि कुर्वन्तः स्थिताः कनीयःपुरःसरास्तस्य मृतस्य पुत्रादिवा(दे रेव) वेश्म व्रजित्वाऽस्य तद्वेश्मनो द्वार्येव स्थित्वा निम्बपत्राणि विदश्य दशनैः खण्डयित्वा न तु भक्षयित्वा त्यक्त्वाऽऽचम्याग्न्यम्बुदूर्वाङ्कुरवरवृषभानक्षतान्यवादीन्गोमयं सिद्धार्थान्गौरसर्षपांस्तैलं च स्पृष्ट्वाऽथ दृषदि द्वारपाषाणे पदमेकं न्यस्य क्षिप्त्वा नतु तामुल्लङ्घ्य सर्वे सपिण्डादयस्तद्वेश्म विशेयुः कनीयःपुरःसरा एव । तथा च याज्ञवल्क्यः—

कृतोदकान्समुत्तीर्णान्मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासपुरातनैः ॥

---

* अथ शवं दग्ध्वा प्रत्यागतानां प्रेतगृहप्रवेशनविधिं त्रिंशेन श्लोकेनाऽऽह—दत्त्वेति । सपिण्डाः पूर्वोक्ताः परशववहनस्नापकाश्च सर्वे पिण्डं दत्त्वा दत्ते पिण्डे तद्वेश्म तस्य प्रेतस्य संबन्धि गृहं व्रजित्वाऽस्य वेश्मद्वारि प्रशमितमनसोऽवहितचित्ताः सन्तः, तदनन्तरं निम्बपत्रं विदश्य चर्वित्वा पश्चादाचम्यानन्तरमग्न्यम्बुदूर्वाङ्कुरवृषभान्गोमयं च सिद्धार्थतैलानि च स्पृष्ट्वा दृषदि पाषाणे पदं न्यस्य सर्वे गृहं विशेयुरिति संबन्धः । तथा च स्मृतिः—इति संस्कृत्य गच्छेयुर्गृहं बालपुरःसराः । विदश्य निम्बपत्राणि नियतो द्वारि वेश्मनः । आचम्याग्न्यादिसलिलं गोमयं गौरसर्षपान् । प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः ॥ इति ।

इति श्रीमारूलकरोपाह्वरङ्गनाथात्मजशंकरशास्त्रिविरचिता त्रिंशच्छ्लोकविवृतिटिप्पणी समाप्ता ।

---

मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।
करोति यः स संमूढो जलबुद्बुदसंनिभे ॥
पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः 'स्वशरीरोत्थैस्तत्र का परिदेवना ॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥
श्लेष्माम्बु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥
इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ।
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥
आचम्याग्न्यादिसलिलं गोमयं गौरसर्षपान् ।
प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः ॥
प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ।
इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥ इति ।

शङ्खः—'दूर्वाप्रवालमग्निवृषभौ च' इति । आश्वलायनः आसत आ नक्षत्रदर्शनादादित्यस्य वा दृश्यमाने प्रविशेयुः कनिष्ठप्रथमाः ज्येष्ठजघन्याः प्राप्यागारमश्मानमग्निं गोमयमक्षतांस्तिलानप उपस्पृशन्तीति । अवधिद्वयस्य च व्यवस्थोक्ता पारस्करेण—प्रेतस्पर्शिनो न ग्रामं प्रविशेयुरा नक्षत्रदर्शनाद्रात्रौ चेदादित्यस्येति । हारीतेन तावद्बहिःस्थित्यशक्तावनुकल्पोऽप्युक्तः—ब्राह्मणानुमत्या वेति । अश्मस्पर्शश्चाऽऽश्वलायनोक्तः पदनिधानरूप एव । एकमूलकल्पनालाघवात् । पारस्करः—निवेशनद्वारे पिचुमन्दपत्राणि विदश्याऽऽचम्योदकमग्निं गोमयं गौरसर्षपांस्तैलमालभ्याश्मानमाक्रम्य प्रविशन्तीति । बैजवापेन तु केषांचिदालम्भे मन्त्रा अप्युक्ताः । शमीमालभते शमी पापं शमयत्विति । अश्मानमालभते—अश्मेव स्थिरो भूयासमिति । अग्निमग्निर्नः शर्म यच्छत्विति । मूले च शमीतिला उपलक्षिता द्रष्टव्याः । यस्तु— ।

विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् ।
वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः ॥

इति मनूक्तो वार्यायुधादिस्पर्शः स आशौचोत्तरादिने शुध्यतीत्यभिधानादित्युक्तम् । दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेदित्येतत्त्वेका-

दशाहिकश्राद्धाङ्गब्राह्मणनिमन्त्रणादिविषयम् । एवं चाऽऽशौचान्त्य-दिनकर्तव्यमध्ये यद्वाहनादिस्पर्शलिखनं वाचस्पत्यादीनां तद्भ्रान्त्या । आशौचान्त्यदिनेऽपि स्नानोत्तरं गोहिरण्यादिस्पर्श उक्तः । एकादशाहादि कर्तव्यं चान्यतोऽवगन्तव्यमित्युपरम्यते ॥

कामेषुवेदरसभूमिमिते शकाब्दे चैत्रासिते हरितथौ रघुनाथनामा ।
रामेशसूरिसुतमाधवबिन्दुजन्मा टीकां समापयदिमां स्मृतिपारदृश्वा ॥ १ ॥

अज्ञस्य शोकमग्नस्य कृत्येऽस्मिन्नतिदुःशके ।
यत्पारगमनं तत्र हेतुर्गुरुकृपैव मे ॥ २ ॥

तत्त्वज्ञो यदि मद्गिरामथ न चेदीर्ष्यालुरारोपये—
द्दोषं तासु कथं परस्तु यदि नामाऽऽरोपयेत्तेन किम् ।
दृष्टं वस्त्वपि तद्विधं नहि जडैरध्यस्तदोषं न वा
सर्वोऽपीदृश एव जातु स भवेद्यो वेद तत्त्वं खलु ॥ ३ ॥

इति श्रीमत्पदवाक्यप्रमाणज्ञमहामहोपाध्यायभट्टमाधवसुतभट्टविश्वनाथानुजभट्टरघुनाथनिर्मिता त्रिंशच्छ्लोकविवृतिः संपूर्णा ॥

यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न विद्यते ॥ १ ॥

====